Digitized by Arya Samaj Foundation Chennai and eGangotri

८४७ शकीये पौषे

Reg. No. C. 1073.

८म वर्षस्य ९म संख्या

January, 1926

Vol. VIII. No. 9

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्




सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सहसम्पादकः—श्रीदुर्गामोहनभट्टाचार्य्य एम्. ए.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

पण्डिताग्रणी-वैयाकरणशिरोमणि-
श्रीयुक्तहरलालस्मृतिरत्नमहोदयविरचितटीकयान्वितम्

# सारस्वत-व्याकरणम्।

वङ्ग-विहार-वाराणसी-पञ्चनदादिप्रदेशप्रवर्त्तितराजकीयसंस्कृतपरीक्षायाः पाठ्यरूपेण निर्दिष्टम्

बालानामाशुबोधकतया परमुपयुक्तेऽस्मिन् व्याकरणे विभिन्न-प्रदेशप्रचलितपाठान्तराणां समन्वयेन प्रसादगुणालङ्कृता संयोजिता बालसरला नाम टीका। सरलसंस्कृतभाषया व्याख्या, पद-साधनम्, पारिभाषिकलक्षणनिर्म्माणादिकम्, विचारवितर्कादिना गूढ़सन्देहमीमांसा, असंख्यानां परिकल्पितपूर्वपक्षाणां विभिन्नदिशा प्रदर्शितान्युत्तराणि—इत्येवमादिकं व्याकरणाध्यायिनामपेक्षितं सर्व-मेवात्र सन्निवेशितम्। सम्पादकस्य 'निवेदने' च व्याकरणविषयकं विविधगवेषणामयमालोचनं विद्यते।

मूल्यम्—पूर्व्वार्द्धम् ३) रूपकत्रयमात्रम्। उत्तरार्द्धम् ३) रूपकत्रयम्। ये तु पूर्वोत्तरार्द्धे एकदा ग्रहीष्यन्ति, तेषां कृते ५) रूपक-पञ्चकमात्रम्।

प्राप्तिस्थानम्—श्रीकृष्णदासमिश्रव्याकरणतीर्थः
चटुला सारस्वतचतुष्पाठी, पोः मिरगोदा, मेदिनीपुर।
तथा—संस्कृतबुकडिपो, २८।१ कर्णओयालिसष्ट्रीट, कलिकाता।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषत्

( श्यामबाजार, कलिकाता )

(Registered under Act XXI of 1860)

समितिरियं संस्कृतभाषायास्तन्मूलकप्राकृतादीनाञ्च सम्यगालोचनया यथावत् प्रसारप्रतिपादनाय प्रतिष्ठापिता (१) प्रतिमासं सभाद्यनुष्ठानेन (२) मुद्रापितानां हस्तलिखितानाञ्च ग्रन्थराशीनां परिषद्ग्रन्थागारे नियतसञ्चयनेन (३) स्वकीये महाविद्यालये विद्यार्थिनामध्यापनेन (४) अमुद्रापितसंस्कृतग्रन्थानां प्रकाशनेन (५) अन्तरान्तरा रङ्गेषु संस्कृतरूपकाणां प्रयोगेण (६) यथानियमं मासिकपत्रिकाप्रचारेण विविधैरुपायान्तरैश्च स्वमुद्देश्यमनुकूलयति। सदस्या मूल्यं विनैव प्रतिमासं संस्कृतपत्रिकां लभेरन्, परिषत्प्रकाशिता ग्रन्थमालाश्च तेषां सुलभतराः स्युः, निखिलेष्वेव परिषत्कृत्येषु ते लब्धाधिकारा भवेयुः।

## संस्कृतसाहित्यपरिषत्पत्रिका

संस्कृतसाहित्यपरिषन्नाम तदभिधानायाः परिषदो मासिकी सुखपाठ्यकीयमतिगभीरार्था दार्शनिकनिबन्धेषु परमकोमला काव्यचिन्तासु धर्म्योपचारा स्मृतिपुराणेतिहासादिषु सूक्ष्मतत्त्वावेदिका विज्ञानविषयेषु संस्कृतोन्नतिमूलप्रवृत्तिप्रचारपरा पारिपार्श्विकवृत्तेषु यथार्थगुणदोषविचारचतुरा ग्रन्थादिसमालोचनेषु गीर्वाणवाणीप्रणयिनामत्युपादेयतया वरीवर्त्ति।

अस्याः प्रतिखण्डमूल्यम् ।० चतुरानकम, वार्षिकमूल्यम् ३) रूप्यकत्रयम्।

पत्रिकामूल्यादिकं परिषत्कार्य्याध्यक्षसविधे निबन्धादिकञ्च पत्रिकासम्पादकसविधे अधोलिखितसङ्केतानुसारेण प्रेषणीयम्।

'संस्कृतसाहित्यपरिषत्'

श्यामबाजार, कलिकाता।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषद्ग्रन्थमाला

| | मूल्यम् साधारणानाम् | सदस्यानाम् |
|---|---|---|
| **कालीतत्त्वम्**—सटीकानुवादम् | ॥৶० | ॥० |
| **शङ्करीसङ्गीतम्**— | ।৶० | ।० |
| **मुक्तिवादः**—गदाधरभट्टाचार्य्यविरचितः सटीकाद्वय-भाष्यानुवादसहितः | २) | १॥० |
| দুর্গোৎসবতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্ শারদীয়দুর্গোৎসবপ্রমাণপ্রয়োগতত্ত্বরূপম্ | ২৲ | ১॥০ |
| **पितृदयिता**—अनिरुद्धभट्टकृता सामवेदीय-सन्ध्याश्राद्धादिपद्धतिरूपा | १।० | १) |
| দুর্গোৎসবনিবন্ধকদম্বম্—দুর্গোৎসববিবেকাদিগ্রন্থ-পঞ্চকাত্মকম্ | ॥০ | ।৵০ |
| **कारकोल्लासः**—भरतमल्लिककृतः सीता-हरणकारकनिर्णयरूपः | ৶० | ৶० |
| **ऋग्वेदभाष्योपक्रमणिका**—सायणकृता आङ्गलभाषाटिप्पणसमेता | ॥।० | ॥৶० |
| গ্রহযাগতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্ | ।৵০ | ।/০ |

मुद्राप्यमाणग्रन्थाः—

१। प्रशस्तपादभाष्यम्—जगदीशसूक्तिसहितम्, सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम्।

२। प्रभाकरविजयः—नन्दीश्वरविरचितः प्रभाकरसम्प्रदायानुसारिमीमांसाग्रन्थः।

मुद्रापणार्थं गृहीता ग्रन्थाः—

१। यात्रातत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम्।

२। तीर्थतत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम्।

३। छान्दोग्यमन्त्रभाष्यम्—गुणविष्णुकृतम्।

४। आनन्दलतिका—सपत्नीक-कृष्णनाथविरचितं काव्यम्।

५। पवनदूतम्—धोयीकविकृतम्।

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# Calcutta Oriental Series

1. युक्तिकल्पतरुः—भोजराजप्रणीतः। अत्र राजनीतिः, नगरादिनिर्म्माणरूपा वास्तुविद्या, छत्रचामरलङ्कारादिनानाविधोपकरणलक्षणम्, रत्नपरीक्षा, शस्त्रयुक्तिः, गवाश्वगजादिपशुपरीक्षा, नावादिविविधयानलक्षणम् इत्येवमादयो विषया निर्णीताः Rs. 2-8

2. चाणक्यराजनीतिशास्त्रम्—(pp. xxxi+82) with a Foreword by Johan van Manen, Secretary, Asiatic Society of Bengal 0-14-0

4. **Inter-state Relations in Ancient India**, Part I by Dr. Narendra Nath Law, M. A., B. L., P. R. S., Ph. D. Rs. 2

5. मुक्ताफलम्—वोपदेवकृतम्, हेमाद्रिकृतटीकया समलङ्कृतम्, खण्डद्वयात्मकम्। अपूर्व्वोऽयं वैष्णवग्रन्थः। (With a Foreward by Dr. N. Law, M. A., Ph. D. (pp. xlvii+361) Rs. 6

6. चाणक्यकथा—रविनर्त्तकप्रणीता वङ्गानुवादसहिता Re. 1

9. वक्रोक्तिजीवितम्—राजानककुन्तलविरचितम् ग्रन्थकृत्प्रणीतटीकासहितमलङ्कारशास्त्रम् (Edited with Critical Notes Introduction by S. K. De, M. A., D. Lit.) Rs. 2

13. **Economic Life and Progress in Ancient India** by Narayan Chandra Banerjee, M. A., Lecturer, Calcutta University. (Demy 8 vo. 325+xvi pp.) Rs. 6

14. **Early History of the Spread of Buddhism and the Buddhist Schools** by Dr. Nalinaksha Dutt, M. A., B. L., P. R. S., Ph. D., Lecturer, Calcutta University. (Demy 8 vo. 314+xi pp.) Rs. 7-8

15. ব্রহ্মসূত্রম্—'ভাগবতভাষ্য-সহিতম—শ্রীহরিদাসবিদ্যাবাগীশ-ভাগবতাচার্য্যসঙ্কলিতম্। প্রত্যেকটি সূত্রের সহিত শ্রীমদ্ভাগবতের শ্লোক উদ্ধৃত করিয়া দেখান হইয়াছে যে শ্রীমদ্ভাগবত ব্রহ্মসূত্রের ভাষ্য (277 pp.) Rs. 2-8

13. **Foundation of Indian Poetry** (being a survey of the origin and development of theories of Indian Poetics from the earliest period) by Dr. J. Nobel of Berlin (188 pp.) Rs. 5

17. **Padma Purana** by Prof. H. Sarma M. A. It shows that Kalidasa has drawn materials for his a Sakuntala and Raghuvamsa from the portion of the Padmapurana edited here. (Demy 8vo. lii+100 pp.) Rs. 2

18. **Studies in Indian History and Culture** by Dr. Narendra Nath Law M. A., B. L., Ph. D. (Demy 8vo. 430 pp.) Rs. 8

## THE INDIAN HISTORICAL QUARTERLY
**(A HIGH CLASS ORIENTAL JOURNAL)**

Each issue 200 pp. Super-Royal Octavo. Edited by Dr. Narendra Nath Law, M. A., B. L., P. R. S., Ph. D. containing contributions from the foremost oriental scholars of India, England, France, Germany.

Annual Subscription Rs. 6 (exclusive of postage 0—12—0)

The Calcutta Oriental Press, 107, Mechuabazar Street, Calcutta.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भारतवर्षस्य श्रेष्ठानाम् औषधालयानां चिकित्सालयानां च अन्यतमः

**"आर्, सि, सेन एण्ड कों लिमिटेड्"**

(यथाशास्त्रं निर्मितानि विशुद्धानि औषधानि सर्व्वदा लभ्यन्ते)

१। **च्यवनप्राशस्य** प्रतिविंशतितोलकं मूल्यं रूप्यकद्वयं २) प्रेषणादिव्ययः ।√० आणकषट्कम् ।

२। **बृहच्चन्द्रोदयमकरध्वजस्य** सप्ताहार्थं मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्ययः ।√० आनकपञ्चकम् ।

३। **तुषारविन्दुतैलस्य** प्रतिदशतोलकम् मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्ययः ।√० आनकषट्कम् ।

(सर्वेषाम् औषधानां मूल्यादिविषयक-विवरणपूर्णं पुस्तकं मूल्यं विनैव प्रेष्यते

**कविराजः राखालचन्द्रसेनः एल् एम् एस्**

,, **श्रीसुधीरकुमार सेनः**

२५८ नं अपारचितपुररोड्, कलिकाता

———

सर्व्वत्र भारतवर्षे सुधीजनैः समादृतं,

कविराज-राखालचन्द्र-सेन एल्, एम्, एस्, कृतं

**कुन्तलकौमुदीतैलम्**

भवत्कुटुम्बमध्यवर्त्तिनीनां महिलानां केशप्रसाधनार्थं

विशुद्धोपादानजातं केशतैलमेतत् क्रीयताम् ।

भवत्-स्वदेशवासिना सुशिक्षितेन भिषजा निर्मितमेतत्

तैलम्, अतो भेषजगुणैः श्रेष्ठम् ।

(सर्वत्र गान्धिकानामापणेषु प्राप्तव्यम्)

**आर् सि सेन एण्ड कों लिमिटेड्**

२५८ अपारचितपुररोड्, कलिकाता


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

१८४७ शकीये पौषे, ८म-वर्षस्य ९म-संख्या


## मतिमञ्जरी

**संस्कृतभाषाविज्ञानापेक्षा**—केचिद्वदन्ति किमथो फलमार्थ्यवाचा, तस्यास्तु शिक्षणमनर्थमिव प्रतीतम्। भाषानुवादमननेन गतार्थमेतत्, किं व्यर्थमाकुलपरिश्रमसम्प्रसारः? अर्थावबोधविषये खलु मातृभाषाः, सम्यक्तया समुपयोगममूर्वहन्ति। यत्नेन शिक्षिततया सहसार्थबोधो, भाषान्तरस्य कथमेव सुसम्भवः स्यात्? यस्यास्त्वयत्नसुलभो ननु सम्प्रबोधः, सैवोपयोगमुपयाति नृणां विशेषात्। स्वाभाविको रुचिरुपैति परं प्रकर्षं, यत्नोपपादितरुचेरिति सिद्धमेतत्॥ तस्माद् विचारपटवो विबुधा इदानीं, युञ्जन्ति शिक्षणविधौ निजमातृभाषाम्। त्याज्या ततो बहुलयत्नफलावबोधा, गीर्वाणगीरतितरां निपुणैः सयत्नम्॥ तत्रैव युक्तिममलामिह वाचयिष्ये, या संस्कृतादिपदगौरवमेव कर्त्री। दोषान् गुणांश्च सुधियः प्रविवेचयन्ताम्, वह्नौ गुणागुणपरीक्षणमस्ति हेम्नाम्॥ संस्कारो द्विविधः प्रोक्तो लौकिकोऽलौकिकस्तथा। संस्कारो भूरथादीनां लौकिको दृष्टिगोचरः॥ अदृष्टाधानसामर्थ्यं प्रोक्षादौ प्रोक्षणादिजम्। लोकदृष्टिमतिक्रान्तं संस्कारोऽलौकिको मतः॥ संस्कृतं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नाम दैवो वागन्वाख्याता महर्षिभिः। द्वितीयसंस्कारवतो संस्कार-स्तत्र नादिमः॥ यत्तु शासनयम्यत्वं संस्कारः संस्कृते स्मृतः। तन्न सम्यक् चिरं तादृक् संस्कृतस्यावलोकनात्॥ संस्कारस्यास्य केनापि नाद्योत्पत्तिर्विलोकिता। अनादित्वविधावस्या नास्त्यतः प्रतिषेधकम्॥ ईश्वरो वेदकर्त्ता चेन्मास्तामस्या अनादिता। कर्त्तुः प्रामाण्यमेवात्र प्रामाण्यमितये क्षमम्॥ लौकिकालौकिकत्वाभ्यां संस्कृते द्विविधा गतिः। लौकिकत्वं लोकवाचां वेदानां वैदिकी गतिः॥ द्वयो-रेवास्ति संस्कारः परमो धर्म्मसाधनम्। तस्मात् संस्कारकृत्येषु मन्त्रा गीर्वाणवाङ्मयाः। नापभ्रंशमया मन्त्रा विहिताः शास्त्रकोविदैः॥ मन्त्रो हीनो वर्णतो वा स्वरतो वा समुच्चरन्। भूयसे यजमानस्य रिष्टाय परिकल्पते॥ तद्दोषपरिहाराय संस्कृतज्ञान-मुत्तमम्। सफला नापरा भाषा शिच्चिता तत्कृतौ क्षमा॥ या च धर्म्मान्तरस्थानामन्यभाषामयी श्रुतिः। आप्तोपदेशवैधर्म्म्यात् सा कथं वा प्रमीयताम्॥ भाषान्तरानुवादेन शास्त्रार्थानां विनिर्णयः। कथञ्चिदेव जायेत न तु पूर्वफलं क्वचित्॥ अनुवादकृतो ये स्युर्भ्रम-धर्म्माण एव ते। तेषां पदे पदे भ्रान्तिरन्यथार्थं विनिर्दिशेत्॥ तत्परम्परया नूनं भवेदन्धपरम्परा। मूलानुवृत्त्या भूतार्थः क्वचिद् भायादनन्तरम्॥ स्वमनीषानुरूपेण वचनेनानुवादकाः। विप्लाव-यन्ति भूतार्थं तत्परैस्तद्भ्रमग्रहः॥ एवं रीत्यानुवादानां भाषान्तर-गतिक्रमः। लोकानामुपकाराय मूलं नातो निरर्थकम्॥ एकस्यैव मतिः पूर्वमनुवादं व्यधारयत्। तन्मतौ प्रत्ययः को वा तमोविक-लितात्मनः॥ भूतार्थो वा मृषार्थो वा यच्चित्तेन प्रसूयते। नियमा-भावतो लोके तत्प्रमाणं कथं चिरम्॥ तस्माद्भूतार्थसन्देहादर्थ-कारी कथञ्चन। नानुवादो भवेल्लोके मूलं नातो निरर्थकम्॥ किञ्च नानाप्रदेशेषु नानाभाषा व्यवस्थिताः। स्वभावमनुरुन्धानाः प्रचरन्ति सहस्रशः॥ न मद्रजा मारवा वा वङ्गीया वा स्वभाषया। अन्योन्य-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

व्यवहारेण भावं बोधयितुं क्षमाः॥ नहि सर्वत्र सर्वेषां विषयाणां प्रकृष्टता। प्रकृष्टं यत्र यद्वस्तु ग्राह्यं तस्मात्तदेव हि॥ किन्तु शिक्षकशिष्याणां परस्परगिरां गतिम्। अविदित्वा कथं सम्यग् व्यवहारसमर्थता॥ एतदर्थञ्च सर्वासां भाषाणां शिक्षणादिह। संस्कृतस्यव शिक्षाया अपेक्षा क्रियतां बुधैः॥ मन्त्राद्यर्थविवेकार्थमवश्यं शिक्षिता हि या। तयैव व्यवहारेण सर्वकृत्यं समञ्जसम्॥ अतः सर्वप्रदेशार्थसेका संस्कृतभारती। अपेक्षणीया लोकानां मूलं नातो निरर्थकम्॥ एकतासाधनविधायिका भाषोपयोगिनी। अविदित्वा मनोभावानेकता साध्यतां कथम्॥ भाषयेव मनोभावः साकल्येन निवेद्यते। विज्ञायते च लोकानां सा चेका सुरभारती॥ नानाभावमया ग्रन्था नानातत्त्वोपबृंहिताः। निबद्धाः संस्कृतेनैव तेषां संख्यापि दुष्करा॥ तत्तत्तत्त्वानि विज्ञाय स्फुरितज्ञानलोचनाः। धर्म्मिण्याद्याः कति कति प्राकुर्वन्नद्भुतं भुवि॥ अर्थतत्त्वं धर्म्मतत्त्वं यदन्यल्लोकमङ्गलम्। तत्संस्कृतमयग्रन्थनिबद्धमुपलक्ष्यते॥ कतीनां विज्ञधुर्य्याणां प्रयत्नैः कतिभिर्युगैः। सर्वेषामनुवादः स्यादिति को वा विनिर्णयेत्॥ सति संस्कृतविज्ञाने यदा यत्तादृशक्रमम्। वस्तु दृष्टिपथं यायात्तदर्थज्ञानतस्तदा॥ कति नूतनतत्त्वानि मङ्गलस्य कृते भुवः। प्रकाशयितुमर्हन्ति नान्यथा तस्य सम्भवः॥ संस्कृते बोधशून्यत्वात् सम्प्रत्येव भुवस्तले। दुर्लभाः कति वा ग्रन्था विनश्यन्ति गृहान्तरे॥ मणिकारमृते को वा मणीनां गुणदोषवित्। भाषान्तरविदां तत्र प्रभुता नास्ति काचन॥ अतः संस्कृतविज्ञानं लोकानामुपकारकम्। अनुवादान्न तत्सिद्धिर्नातो मूलं निरर्थकम्॥ अद्यापि कति वा ग्रन्थाः प्राचीना न प्रकाशिताः। यदा प्राकाश्यमिष्यन्ति ते तै दैवाद् यथाक्रमम्॥ कस्तेषां तत्त्वसन्दोहमस्माकं विवरिष्यति। यदि संस्कृतविज्ञानं तिरोहितमितः क्रमात्॥ तस्मात् प्रत्येकमेवात्र कर्त्तव्या संस्कृते रतिः। अनुवादान्न तत्सिद्धिर्नातो मूलं निरर्थकम्॥ देशि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


कीनाच्च भाषाणामन्यासां न स्थिरा गतिः। युगादीनां विभेदेन भिद्यन्ते भूरिशो हि ताः॥ एकैव या वङ्गभाषा सैव नानाविधक्रमा। वङ्गावान्तरदेशानां विभेदादिति लक्ष्यते॥ श्रीहट्टे कामरूपे वा कुमिल्ला-वरिशालयोः। ढाका-यशोहरादौ च कलिकातादिषु स्थितम्॥ भाषाया विविधं रूपं सर्वा भाषा तु वङ्गजा। ग्रन्थानामनुवादश्चेद् वङ्गभाषामयो भवेत्॥ तत्रत्या कतमा भाषा तत्कृताववलम्ब्यताम्। एकस्या ग्रहणे कृत्यं नान्यभाषाविदां भवेत्॥ देशान्तरगतास्तेन नोपकारमलं गताः। एवं रीत्या देशभाषा येव कृत्ये नियुज्यताम्॥ सैवाकृतार्था सर्वेषां देशानां तत्त्ववेदने। परं दैशिकभाषायाः प्रत्यहं सूक्ष्मसूक्ष्मया॥ विधया परिवृत्तिर्यदस्थिरत्वं ततश्चिरम्। शतवत्सरतः पूर्वं देशभाषा हि यादृशी॥ तत्परं तादृशी न स्यादिति प्राप्ता विडम्बना। तस्मादेवं स्थिते वृत्ते कियत्कालादनन्तरम्॥ नवानुवादनिर्माणप्रयासान्मूलसंस्कृते। विज्ञानं सर्वथा श्रेयः समादिशति देहिनाम्॥ सर्वभाषानुवादानां दैवाद् यदि समागमः। किमर्थं व्यर्थयत्नोऽयं स्वल्पायुष्केषु युज्यताम्॥ कदाचिदनुवादेन तत्त्वं स्फुरति वा न वा। अनुवादक आप्तश्चेत्तदा याथार्थ्यसम्भवः॥ एवं स्थिते शास्त्रकृतामनुवादकृतान्तथा। प्रामाण्यज्ञानतस्तत्त्वे प्रामाण्यस्य विनिश्चयः॥ प्रक्रियागौरवं तस्मात् प्रामाण्यस्य विनिर्णये। किमेवं शीर्षवेष्टेन नासिकास्पर्शनश्रमः॥ जगत्यां का तथा भाषा यस्या माधुर्य्यमीदृशम्। अनुप्रासादिवैचित्र्यादियं सर्वविलक्षणा॥ श्लेषादिविनियोगेन रहस्यार्थप्रवेदने। कस्या वापरभाषायाः सामर्थ्यं दृश्यतेतराम्॥ सत्त्वशुद्धिकृती शक्ता यथा संस्कृतभारती। काचिदन्या तथा नास्ते स्वभावोऽस्या विलक्षणः॥ प्रश्नस्तत्र कथन्तायाः सुतरां निष्प्रयोजनः। ईदृशी फलसंसिद्धिः कारणानुमितिक्षमा॥ पारिभाषिकशब्दा ये शास्त्रेषु परितः स्थिताः। अपेक्षमाणा व्युत्पत्तिं विवृतिं वा सहस्रशः॥ शास्त्रापेक्षितयान्यत्र भाषायामपि योजिताः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

स्वातन्त्र्यरहिता यस्मान्नातो मूलं निरर्थकम् ॥ स्वल्पैरक्षरसङ्घातैः प्रभूतार्थनिवेदने। सामर्थ्यं देवभाषाया भाषान्तरविलक्षणम्। तच्च शिक्षार्थिनां पक्षे शिक्षासौकर्य्यहेतवे। स्वल्पायासेन कल्पश्चेद् बह्वायासं नु कः श्रयेत् ॥ नानालङ्कारसुभगा स्वल्पाक्षरनिबन्धना। पद्यादिविहितोत्कर्षा प्रथिता सुरभारती ॥ तदन्या नेदृशगुणा नातो मूलं निरर्थकम्। सर्व्वेभ्यो विदितोत्कर्षा देवा यां वाचमाश्रयन् ॥ सा प्रकृष्टेति विद्वत्सु नोक्तमप्युपतिष्ठते। अद्यत्वे संस्कृतविदां नानादेशनिवासिनाम् ॥ यत् परस्परसंवादान्मनोभावनिवेदनम्। यस्मान्योन्यानुभूतार्थसारविज्ञापनक्षमः ॥ ते नूनं संस्कृतामेव भारतीमुपजीवतः। साक्षाद् विचारणाशैली प्रश्नोत्तरनिरन्तरा ॥ पर्य्याप्ता विषयोद्धारे न लेखादिविवेचना। सा चेयं संस्कृतामेव भारतीमवलम्बते ॥ सर्व्वेषां व्यवहाराय नान्या भाषा कदाप्यलम्। गाढ़व्युत्पत्तिमप्राप्ता ये वा संस्कृतवाङ्मये ॥ प्राक्तनादेव संस्कारात्तेषां भारतवासिनाम्। संस्कृतार्थस्य विज्ञानं सम्भाव्यमवलोक्यते ॥ बहूनां देशभाषाणां दृश्यते संस्कृतान्वयः। संस्कृतज्ञानराहित्ये व्युत्पत्तिस्तत्र नो दृढ़ा ॥ तस्माद्देशीयभाषासु दृढ़व्युत्पत्तिसिद्धिदम्। साध्यं संस्कृतविज्ञानं नातो मूलं निरर्थकम् ॥ एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातश्च संस्कृते। ऐहिकामुष्मिकक्षेमसम्पादनफलः स्मृतः ॥ तस्मात् सम्यक्तया ज्ञानं संस्कृतानामपेक्षितम्। सम्यगुच्चारणञ्चापि नातो मूलं निरर्थकम् ॥ यत्तु संस्कृतभाषाया धनदानासमर्थता। तत एव तदभ्यासे व्यर्थः कालक्षयो नृणाम् ॥ देहरक्षार्थमपेक्षा देहः सर्व्वार्थसाधनम्। यया देहः स रक्ष्येत सैव भाषेष्यतामिति ॥ तत्रेदमनुसन्धेयं यथा संस्कृतभारती। ऐहिकार्थस्य सम्पत्तिं कथं साधयितुं क्षमा ॥ आदौ तावच्चिकित्सायाः शास्त्रमेव समीक्ष्यताम्। येनाश्रितेन लोकेऽस्मिन् प्रभूतधनसम्भवः ॥ जीवाः प्रायेण पीड्यन्ते सर्व्वे नानाविधामयैः। तेषामारोग्यलाभार्थमायुर्व्वेदव्यपेक्षणम् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

जीवनं सङ्कटापन्नमवेच्यार्थव्ययक्रमे। को वा पराङ्मुखो लोके धनं तेनैव लभ्यताम्॥ सूर्य्याचन्द्रमसोर्यत्र साक्षिता ज्योतिषे चिरम्। धनानामर्जने तच्च ज्योतिषं चममोच्यताम्॥ भूत-भावि-भवद्वृत्त-ज्ञानार्थं कस्य देहिनः। प्रवृत्तिर्नास्ति लोकेऽस्मिन्नर्थानां व्ययसाधने॥ शास्त्रसारं समुद्धृत्य कृते तदनुसारतः। कृत्ये लोकेष्टलाभश्चेत् का चिन्ता धनसंग्रहे॥ शान्तिस्वस्त्ययनादीनां विधीनां विधिपूर्व्वकम्। विधानात् फलनिष्पत्त्या लब्धव्या भूरिदक्षिणाः॥ वञ्चनाबुद्धिमुत्सृज्य शुद्धिपूर्व्वं कृता क्रिया। समृद्धिं यावदादध्यात्तावदेव धनागमः॥ अस्ति प्राचीनशास्त्रेषु तत्तत्तत्त्वं निगूहितम्। एकान्तप्रणिधानेन तदूह्यं शास्त्रवेदिभिः॥ स्वानिष्टविनिवृत्त्यर्थमद्याप्यस्ति नृणां स्पृहा। फलादर्शनतः सेयं न नियुङ्क्ते क्रियाविधौ॥ अतः प्राचीनसास्येन तत्त्वानामनुशीलनैः। सामर्थ्ये सति संसिद्धौ श्रद्धां लोके गमिष्यथ॥ असत्यपि ब्रह्मचर्य्ये शिष्याणां भैक्ष्यसंग्रहे। वित्तव्ययेन लोकानामस्ति विद्योपसंग्रहः॥ भृतकाध्यापकस्तेन संवृत्तोऽर्थमवाप्नुयात्। क्षत्रियो राजनीत्याद्यैः सप्रयत्नमुपाश्रितैः॥ रीतिं पूर्वसमां लब्ध्वा समर्थो भूमिपालने। वैश्याः संस्कृतशास्त्रेषु निबद्धकृषिविद्यया॥ वाणिज्याद्यैश्च सम्पत्तिं सम्पादयितुमीशते। शिल्पविद्यासमुत्कर्षो यावान् संस्कृतवाङ्मये॥ तेनाश्रितेन शूद्राणां समृद्धिः सम्भवेदलम्। किमिवं तत्त्वमस्त्यत्र यन्न संस्कृतवाङ्मये॥ ततो लेशेन लेशेन वस्तुसंग्रहकारिणाम्। भाषान्तरानुवादेन यशो भूयः प्रवृत्स्यति॥ तदन्यत्रापि सत्तानामिदं संस्कृतवाङ्मयम्। प्रभूतायोपकाराय नातो मूलं निरर्थकम्॥ अन्योन्यतुलनामूलभाषातत्त्वविवेचना। संस्कृतालोचनोद्भूता व्यतरन्नवपद्धतिम्॥ अद्य यो यो नवो भावः प्रत्नतत्त्वादिपद्धतौ। स सर्वः संस्कृतादेव प्रसूत इति सम्मतम्॥ तन्मूलज्ञानसम्पत्तौ सुकरं सर्व्वमेव तत्। उत्कर्षश्चापकर्षश्च प्रमितौ तत्र भाविनौ॥ अन्यथा पातदर्शिन्या बुद्ध्या तत्प्रविवेचने। प्रमितार्थः सुदुर्बोधस्तत्त्वोत्सादो

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भवेत्ततः ॥ इत्थमालोच्यमानेषु तत्त्वेषु स्थितमीदृशम्। अनुवादान्न कृत्यं स्यात् मूलज्ञानमपेक्षितम् ॥

---

## शारीरकभाष्यीयप्रश्नः

प्रष्टा—श्रीरामस्वामी ( दाक्षिणात्यः )।

अयि प्रियविद्वन्महोदयाः! प्रार्थ्यते वेदान्तस्तम्भभूते बहुलपठन-पाठनप्रचरद्रूपे शारीरकभाष्ये मुद्रितोपलभ्यमानपुस्तकैकरूप्येण, परिदृश्यमानान् कतिचित् पाठानधिकृत्य विहितमत्रालोचनं सुनिपुणं विचार्य्य स्वाभिप्रायो महाद्भिः प्रकटीक्रियतामिति।

शारीरकभाष्ये १ अध्याये १ पादे १० सूत्रे—"ततः कदाचित् प्रधानकारणवादानुरोधेनापि ईक्षत्यादिश्रवणम् अकल्पयिष्यत्"—अत्र 'अकल्पयिष्यत्' इत्ययं पाठो न साधुः प्रतीयते; 'कृप कल्पने' इति चौरादिकधातोः कर्त्तरि 'लृङ्'-प्रत्ययेन निष्पन्नस्यास्य पदस्य 'श्रवणम्' इति पदेन कर्त्तृतया कर्मतया वा सम्बन्धासम्भवात्। अतोऽत्र 'अकल्पयिष्यत' इति कर्मणि प्रत्यये कृते, 'श्रवण'-पदेन कर्मतयाऽन्वयः स्यात्। अपि च—'कृपू सामर्थ्ये (योग्यतायाञ्च)' इति धातोः कर्मणि 'लृङ्'-प्रत्ययं विधाय 'अकल्पिष्यत' इत्यस्मिन् पाठे परिगृहीते साधुतरं भवेदिति मन्यते। (अकल्पिष्यत—योग्यमभविष्यदित्यर्थः)। कोऽत्र निर्णयः?

१अ० २पा० १९सू०—"अन्यतरपरिग्रहे तु युक्तं 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्रैव ब्रह्मनिर्देश आश्रयितुम्"—अत्र 'युक्तम्' इति पदस्य 'ब्रह्मनिर्देशः' इत्येतत्पुंलिङ्गपदान्वयित्वात् पुंलिङ्गान्तत्वं न्याय्यम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


१अ० १पा० १९सू०—"या त्वानन्दमयसन्निधाने 'सोऽकामयत बहु स्यां प्रजायेयेति' इयं श्रुतिरुदाहृता"—अत्र 'प्रजायेयेति' इत्यस्मादनन्तरं द्वितीयम् 'इति' पदं लेखकप्रमादात् पतितम्, 'प्रजायेयेति' इत्यस्मिन् स्थितस्य 'इति' पदस्य श्रुतिवचनाङ्गत्वात्।

१अ० २पा० २३सू०—"भूतयोने रूपमुपन्यसेत् ?"—अत्र 'उपन्यसेत्' इत्यस्मिन् दैवादिकस्य 'असु क्षेपणे' इति धातोः प्रयोगः सर्वसम्मतः। एवं सति, 'उपन्यस्येत्' इत्यनेनैव भाव्यम्। अन्यान्तरेऽपि बहुषु स्थलेषु 'अभ्यसेत्' इत्येवं प्रयोगो दृश्यते। काऽत्रोपपत्तिः ?

१अ० ३पा० १९सू०—"तदविलयनेन तद्विपरीतमपहृतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपाद्यते, सर्पादिविलयनेनेव रज्ज्वादीन्"—अत्र 'प्रतिपाद्यते' इत्यनेन दार्ष्टान्तिकगतकर्मवाच्यक्रियापदेनान्वयरक्षणार्थं दृष्टान्तेऽपि 'रज्ज्वादीन्' इति द्वितीयानिरासेन 'रज्ज्वादयः' इत्येवमुक्तकर्मणि प्रथमैव विधेया।

१अ० ३पा० ३२सू०—"ततश्च राजसूयादिचोदनोपरुन्ध्यात्"—अत्र 'उपरुन्ध्यात्' इत्ययं पाठो न सम्यक्, सकर्मकात् 'रुधिर् आवरणे' इति धातोः कर्त्तृवाच्यनिष्पन्नस्यास्य क्रियापदस्य कर्त्तृत्वेन चोदनान्वयासम्भवात्। अतः 'उपरुध्येत' इत्येवं कर्मणि प्रत्ययोऽत्र कार्य्यः—उपरुद्धा स्यादित्यर्थः।

१अ० ४पा० ३सू०—"अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमात्"—अत्र 'अस्यैव' इत्यस्मिन् 'इदम्'-शब्दस्य 'प्रागवस्थायाः' इत्येतत्पदविशेषणत्वौचित्यात् 'अस्याः' इत्येवं स्त्रीलिङ्गत्वं विधेयम्।

१अ० ४पा० १०सू०—"किन्तु बन्धमोक्षप्रतिपिपादयिषा त्वेषा"—अत्र 'त्वेषा' इत्यस्मिन् 'तु' शब्दः पुनरुक्तः। अत एवं पठनीयम्—"प्रतिपिपादयिषा ह्येषा" इति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


१अ० ४पा० १४सू०—"तथा 'इदं सर्वमसृजत यदिदं किञ्च' इति समस्तजगत्सृष्टिनिर्देशेन प्राक् सृष्टेरद्वितीयं स्रष्टारमाचष्टे"—अत्र प्राक्तनसन्दर्भालोचनेन 'आचष्टे' इति 'लट्'-स्थाने पूर्ववत् 'लङ्'-प्रयोग एव न्याय्यो मन्यते।

२अ० १पा० १सू०—"परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिष्ववलम्बेरन्"—अत्र 'अवलम्बेरन्' इत्यस्य कर्मापेक्षत्वात् 'स्मृतिषु' इति सप्तमी-स्थले द्वितीयैव युज्यते।

२अ० १पा० ३सू०—"तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोपकुर्वन्ति"—अत्र 'उपकुर्वन्ति' इत्येतत्क्रियायोगेन 'तत्त्वज्ञानाय' इति चतुर्थीस्थाने षष्ठीप्रयोगो युक्तः; 'सा लक्ष्मीरुपकुरुते यया परेषाम्' ( भारविः ७, २८ ), 'आत्मनश्चोपकर्त्तुम्' ( मेघदूते १०१ ) 'साधूनामुपकर्त्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम्। न कुतूहलि कस्य मनश्चरितञ्च महात्मनां श्रोतुम् ?' ( श्रीहर्षः ) इत्यादिष्वेवं दर्शनात्।

२अ० १पा० ४सू०—"अनवगम्यमानमेव ह्येदं लोके समस्तस्य वस्तुनश्चेतनत्वं चेतनप्रकृतिकत्वश्रवणाच्छब्दशरणतया केवलयोत्प्रेक्षेत"—अत्र 'उत्प्रेक्षेत' इत्यस्य स्थाने 'उत्प्रेक्ष्येत' इत्येवं कर्मणि प्रत्ययो विधेयः।

२अ० १पा० १४सू०—"न तु स्वतन्त्रं फलाय कल्पते"—अत्र 'कल्पते' इत्यस्य स्थाने 'कल्प्यते' इत्ययं पाठ आदर्त्तव्यो न वा ?

३अ० १पा० १७सू०—"अवरोहाभ्युपगमादसम्पूर्णोपपत्तिः"—अत्र 'असम्पूरणोपपत्तिः' इत्यनेनैव भाव्यम्।

३अ० १पा० २६सू०—"कथमिवानुपचरितं तद्भावमद्यमानानामनुगतोऽनुशयी प्रतिपद्यते ?"—अत्र 'प्रतिपद्यते' इत्यस्य स्थले 'लिङ्'-प्रयोगः साधीयान् मन्यते न वा ?

३अ० २पा० ३सू०—"क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

—'कुरुष्वहमद्य शयानो निद्रयाऽभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मिन् प्रतिबुद्धस्व' इति"—अत्र 'अस्मिन्' इति सर्वनाम्नः 'पञ्चालान्' इति बहुवचनान्तपदपरामर्शित्वाद् बहुवचनान्तत्वमेव युक्तम्।

३अ० २पा० ७सू०—"स्वप्नजागरितयोस्तूपाधिसम्पर्कवशात् पररूपापत्तिमिवापेक्ष्य तदुपशमात् सुषुप्तेः स्वरूपापत्तिर्वक्ष्यते"—अत्र 'सुषुप्ते' इति (७मी) पठनीयम्।

३अ० २पा० ६सू०—"इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारे पठिता नात्मान्तरोत्थाने सामञ्जस्यमीयुः"—अत्र 'ईयुः' इत्येतत् 'लिटः' पदं न समञ्जसम्। अतः 'इयुः' इत्येवं क्रस्वादिः 'लिङ्'-प्रयोगः कार्य्यः।

३अ० २पा० २१सू०—"उत्तरमधिकरणं 'प्रकाशवच्च' एतद्व्यर्थमेव भवेत्"—अत्र 'प्रकाशवच्च' इत्यतोऽनन्तरम् 'इति'पदं स्खलितम्।

३अ० २पा० २(सू०—"श्रुत्या चैवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्प्रमाने, न लक्षणया प्रविलयार्थत्वमवकल्पते"—अत्र 'अवकल्प्रमाने' इत्यस्य स्थाने 'अवकल्पमाने' इति पाठो ग्राह्यः।

३अ० २पा० २२सू०—"तच्च परिशिष्यमाणे कस्मिंश्चिद्भावेऽवकल्प्रते। उभयप्रतिषेधे तु कोऽन्योभावः परिशिष्येत्"—वाक्यद्वयेऽस्मिन् 'अवकल्प्रते' इत्यत्र 'अवकल्पते'; 'परिशिष्येत्' इत्यत्र च 'परिशिष्येत' इति पठनीयम्।

३अ० २पा० २२सू०—" 'इति'-शब्देन त्वत्र प्रतिषेध्यं किमपि समर्प्यते' नेति नेतीति-परत्वान्नञ्प्रयोगस्य"—अत्र 'नेति नेतीति' इत्यतः परम् अन्यत् 'इति'-पदं च्युतमेव।

३अ० ३पा० १८सू०—"प्राप्तांशपरामर्शस्य नित्यानुवादतयाऽप्युपपद्यमानत्वान्न तद्बलेन प्रत्यभिज्ञोपोदितुं शक्यते"—अत्र 'उपोदितुम्' इत्येतत् पदमसाधु, स्वरूपतश्चार्थतश्चोभयथाऽप्यनुपपद्यमानत्वात्। लिपिकरप्रमादविचारणायान्तु अक्षररेखासन्निवेशभ्रम-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मूलकत्वप्रतीतेः 'अपोहितुम्' (अप+ऊह्+तुमुन्—अपवदितुम्, अपलपितुम्, अपनोदितुम् इत्यर्थः) इत्येतस्यैव पाठस्य ग्रहणीयत्वं स्वरसतोहृदि स्फुरतीति प्रेक्षावद्भिर्विभावनीयम्।

३अ०३पा०३८सू०—"तत्र ह्यादिमध्यावसानेषु हि कर्मसम्बन्धिचिह्नानि भवन्ति"—अत्र द्वितीयो 'हि'-शब्दोऽधिक एव।

३अ० ४पा० ५१सू०—"साधनवीर्यविशेषात् त्वतीन्द्रिया कस्यचिच्छक्तिराविर्भवति, तत्प्रतिबद्धा परस्य तिष्ठति"—अत्र तच्छब्दस्य 'शक्ति'-पदपरामर्शित्वात् स्त्रीत्वं विधेयम्।

४अ० १पा० ६सू०—यत्तूक्तम्—उद्गीथादिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा फलं करिष्यन्तीति"—अत्र 'कर्मभूयं गत्वा' इत्यनेनैव भवितव्यम्, "एष दाशरथिभूयमेत्य च" (माघः १४-८१) इत्यादिवत्।

४अ०३पा० १५सू०—" 'अनियमः सर्वासाम्' इत्यत्राविशेषेणैवैषां विद्यान्तरेष्ववतारिता"—अत्र एतच्छब्देन पूर्ववाक्यस्था 'गतिः' परामृश्यत इत्येतद्व्यक्तमेव ततः 'एषा' इत्येवं पठितुं युक्तम्।

---

# भवभूतिः

लेखकः—सारदारञ्जनराय एम्. ए. विद्याविनोदः

इतः पूर्व्वम् इहैव मया भवभूतेः प्रतिपत्तिम् अधिकृत्य प्रबन्ध एकः पठितः। यत् यत् तस्मिन् नूतनम् उपन्यस्तम्, यत् यत् च पूर्वोक्तिविरुद्धमुक्तम्, तत्र तत्र विचारोऽपि मया प्रार्थितः। पाठावसाने समालोचनपरेषु सामाजिकेषु एक एव मदुक्तेषु विप्रतिपन्नोऽभूत्। नवे, सन्दिग्धे वा विषये प्रायशो वादप्रतिवादाभ्यामेव निर्णीयते तथ्यम्। तत् सत्यानुसन्धित्सोर्लेखकस्य "प्रतिवादः" इत्येवालं तोषाय।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

प्रबन्धे तस्मिन् प्रधानतो द्वावर्थौ मया निरूपितौ। एकस्तावत्—उत्तरचरितस्य कथमपि नानवद्यं शिल्पम् इति। द्वितीयश्च—न हि कवेः उत्तरचरितं चरमो ग्रन्थ इति।

आद्यमर्थं प्रति मम युक्तयः—प्रस्तावनाया अन्तेऽपि सूत्रधारो नटश्च मञ्चस्थाविव दृश्येते। किञ्च, कठोरगर्भा सीता इति चेत्, बहूनि अनन्तरोक्तानि असङ्गतानि भवन्ति। अपि च, कठोरगर्भतायाः इह प्रसङ्ग एव नास्ति—इत्येवमादयः।

शेषश्चार्थो मया इत्थं समर्थितः—उत्तरचरितस्य कश्चित् शिल्पदोषो मालतीमाधवे परिहृतः। भाषा च मालतीमाधवे मधुरतरा निपुणतरनिबद्धा च। तत् उत्तरचरितात् मालतीमाधवम् अर्वाचीनम्। अपरञ्च, उत्तरचरितस्य अर्वाचीनतां प्रति भरतवाक्यस्थं "परिणतप्रज्ञस्य" इति विशेषणम् आश्रित्य यदपरैरुक्तं तदसङ्गतम्। तत्र "वाल्मीकेः" इत्येव पाठः "नामिता" इत्यपपाठः।

अत्र उभयोरप्यर्थयोर्विवदमानः कश्चन पण्डितवर्यः प्राह—प्राचीनो भवभूतिः कथमर्वाचीनैर्विश्वनाथादिभिरुक्तां रीतिमनुसरतु? तत् उत्तरचरिते पात्रप्रवेशात् परमपि सूत्रधारस्य मञ्चे स्थितिः नटस्य च प्रवेशो न शिल्पदोष इति।

नेदं समीचीनम्। आसतामर्वाचीनाः, प्राचीनतरो मुनिर्भरतोऽप्यास्तां। अथवा यातु तत्, इदं तु विचार्यम्—सूत्रधारस्य स्थितिरिह युक्ता अयुक्ता वा। यद्ययुक्ता स्वयं भरतेनाप्युक्ता सा हेया एव। अथ युक्ता, प्राचीनमतम् अर्वाचीनमतम् इति नूनम् अनास्था। यत् युक्तं तत् सत्यस्वरूपं नित्यं सच्चिदानन्दस्य ब्रह्मणः अंशविशेषः। कस्तस्य वक्तृवितर्कः, प्राचीनताया अर्वाचीनताया वा को विचारः? उक्तञ्च कविभिः "ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः" "तेजसां न हि वयः समीक्ष्यते" इत्यादि। असति चैतस्मिन् सर्वमुच्छृङ्खलं भवति। "सदा सत्यं ब्रूयात्" इत्यर्वाचीनेन विद्यासाग-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रेणोक्तं कथं प्राचीनो राममोहनः अनुसरतु इत्येवमादिकमनिष्टमापद्यते ।

प्रस्तुते सूत्रधारस्य स्थितिः अयुक्ता एव । यदेवोक्तम् "आयोध्यकोऽस्मि" इति तदेव ज्ञापिता तेन सूत्रधारता । तत् कथमुच्यतां सूत्रधारस्य मञ्चे स्थितिरिति ? यो मञ्चे स्थितः नासौ जातु सूत्रधारः । वस्तुतस्तु सूत्रधारस्य प्रस्थानम्, आयोध्यकरूपेण प्रत्यावर्त्तनञ्च यथा मालतीमाधवे दृश्यते तदेव न्याय्यम् । अन्यथा अपरिहार्य्यः शिल्पदोषः ।

सीतायाः कठोरगर्भत्वे या प्रकरणासङ्गतिः तां प्रति मे प्रतिवादी ब्रूते—कठोरगर्भा इति निषेकाद्दशमे मासि वर्त्तमाना इति नात्र मन्तव्यमिति ।

अत्रोच्यते—कथमन्यथा इह मन्यतां नाम ? पूर्वाह्णे कठोरगर्भता आख्याता, तदेव चित्रदर्शनम्, अनुपदमेव दुर्मुखागमनं सीताविवासनञ्च, अपराह्णे वाल्मीकितपोवनप्राप्तिः, तदेव सीतायाः प्रसववेदना गङ्गाजले चात्मनिक्षेपः, जले एव कुशलवयोर्जन्म । तथा च सप्तमाङ्के "विश्वम्भरात्मजा देवी राज्ञा त्यक्ता महावने । प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥" इति "समाश्वसिहि कल्याणि दिष्ट्या वैदेहि वर्द्धसे । अन्तर्जलं प्रसूतासि रघुवंशधरौ सुतौ ॥" इति च । तृतीयाङ्केऽपि—"गते लक्ष्मणे सीतादेवी प्राप्तप्रसववेदनमात्मानं ··· गङ्गाप्रवाहे निक्षिप्तवती तदेव तत्र दारकद्वयं प्रसूता"— इति ।

तत् दशमे मासि एव सीतायाः कठोरगर्भेति निर्देशः, प्रकरणासङ्गतिश्च अखण्डिता तिष्ठति, प्राग्वच्च दुःस्थितं शिल्पम् ।

यत् पुनर्मयोक्तं कठोरगर्भतायाः प्रसङ्गो नास्तीति तत्र विप्रतिपन्नः श्रीमान् प्रतिवादी मन्यते—ब्रह्मर्षीणां राजर्षीणाञ्च समागमात् अभिषेकोत्सवो दशैव मासान् व्याप्त इति न हि नितरामश्र-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ज्ञेयम् अनुमानम्। सति च तस्मिन् गर्भस्य पूर्णता अपि सम्भवति—इति।

अत्र ब्रूमः—दश मासान् उत्सव आसीत् इति प्रकरणविरुद्धम्। "अयमभिषेकसमयः" इति यत् सूत्रधारेणोक्तं, तत् अभिषेकात् परं पक्षमात्रस्य कथञ्चित् मासमात्रस्य वा युज्यते वक्तुं नाधिकस्य। यस्य पुनः कालः "अभिषेकसमयः" इति निर्दिष्टः, तत्रैव "प्रेषिता हि स्वगृहान्... ब्रह्मर्षयो राजर्षयश्च" इत्युक्तम्। एतेन उत्सवस्य मासाधिकव्याप्तिकल्पना असङ्गता भवति। किञ्च, उत्सवान्ते राजर्षेर्जनकस्य मिथिलाप्रत्यावर्त्तनं समर्थयमानो राम आह—"अनुष्ठाननित्यत्वात्" अयुक्तं तस्येह अयोध्यायां कालातिपात इति। एतेनापि ब्रह्मर्षिभिः राजर्षिभिश्च मासादधिकः कालो न यापितः इत्येव प्रतीयते। अत एवोक्तं कविना "इयतो दिवसान् उत्सव आसीत्" इति न तु "इयतो मासान्" इति। तत् असमर्थिता एव सीतायाः कठोरगर्भता, शिल्पञ्च तथैव निरालम्बम्।

मदुक्तं ग्रन्थक्रमं दूषयन् उत्तरचरितस्य च चरमतां व्यवस्थापयिष्यन् श्रीमान् प्रतिवादिप्रवरः प्राह—योऽयम् उत्तरचरिते श्लोकः—"अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यत्, विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्य्यो रसः। कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं, भद्रं प्रेम सुमानुषस्य कथमप्येकं हि तत् प्राप्यते॥" इति,—तरुणः कश्चित् कदापि न तं ब्रूयात्। प्रौढ़स्यैवायं शोभते। तत् कविना नूनं प्रौढ़े वयसि उत्तरचरितं लिखितम्—इति।

अत्रोच्यते—इह विस्मृतं श्रीमता यत् श्लोकोऽयं सप्तविंशवर्षेण युवकेनैव रामचन्द्रेण प्रोक्तः, न हि केनचित् प्रौढ़ेन इति। अपरञ्च, प्रौढ़े वयसि कविना उत्तरचरितं लिखितमिति किमायातमेतेन? प्रौढ़प्रोक्तमुत्तरचरितमिति चेदाग्रहः, प्रौढ़तरप्रोक्तं मालतीमाधवम्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

इत्यपि गृह्यताम्। अन्यत् प्रौढ़प्रोक्तत्वम्, अन्यदिदं चरमत्वं नाम। तत् श्लोकोऽयम् उत्तरचरितस्य चरमत्वे हेतुर्भवितुं नार्हति।

भरतवाक्यस्य मदुक्तां व्याख्यां निराकरिष्यन् स विद्वद्वर आह—इह कविं प्रति सामाजिकान् प्रति च किञ्चित् कथनम् आचारः। तत् "शब्दब्रह्मविदः" इति "परिणतप्रज्ञस्य" इति च भवभूतिमेव विशेषयितुमर्हतः—इति।

अत्र पृच्छामः—अथ कीदृशोऽयमाचार उत्तरचरिते प्रार्थ्यते यो वीरचरिते मालतीमाधवे च नाद्रियते? अथवा भवतु आचार एव। मद्रीत्या यदा वाल्मीकिर्विशिष्यते, तदापि "अभिनयैर्विन्यस्तरूपामिमाम्" इति भवभूतेरेव कृतिर्लक्ष्यते। कृतिलक्षणाच्च कर्तृलक्षणम् इत्यनुसृत एव आचारः। अधिकन्तु "शब्दब्रह्मविदः" इति परिहृतं भवभूतेरसङ्गतं विशेषणम्।

अतः परं मदीयाया व्याख्याया मूलोच्छेदमेव कर्तुमुक्तम्—"तामेताम्" इत्येवेह पाठः, "वाल्मीकेः" इत्यपपाठः—इति।

अत्रोच्यते—"तामेताम्" इति पाठे एष तावत् श्लोकः—"पाप्मभ्यश्च पुनातु वर्द्धयतु च श्रेयांसि सेयं कथा, मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च। तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः, शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम्॥" इति। "सा इयं कथा। ताम् एताम् इमां वाणीं परिभावयन्तु" इति च पदसम्बन्धः। तत्र पूर्वार्द्धे 'सा' इति तच्छब्देन प्रसिद्धं किञ्चिल्लक्ष्यते, तच्च परोक्षम्। "इयम्" इति तदेव परोक्षम् इदमा सन्निधाप्यते। यद्येवम्, उक्ता प्रसिद्धिः, निरस्ता च परोक्षता, तत् उत्तरार्द्धे 'ताम्' इति तच्छब्देन किं क्रियताम्? नूनमिह असङ्गतं 'ताम्' इति। किञ्च इह अन्वादेशपरमुत्तरार्द्धम् इति एनादेशप्रसङ्गात् 'एताम्' इत्यपि दुष्टम्। अपि च "ताम्" "एताम्" "इमाम्" इति युगपत् प्राप्तं दुरन्वयं सुधियामुद्वेगकरं पदत्रयम्। पक्षान्तरे "वाल्मीकेः"

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

इति पाठे "सा इयं कथा। इमां वाल्मीकेः वाणीं परिभावयन्तु": इति पदान्वये सुस्थितं सर्वं न सङ्कटं किञ्चित्। एवं सति "वाल्मीकेः" "तामेतां" इत्येतयोः कोऽत्र अपपाठः इति विद्वद्भिः परिचिन्त्यताम्।

अपरञ्च इह "परिणतप्रज्ञस्य" इत्यपि न हि सर्वसम्मतः पाठः। "परिणतां प्राज्ञस्य" इति तु वीरराघवेण पठ्यते। इत्थं पाठ एव चेत् सन्दिग्धः, अशरणं तदाश्रयमनुमानम् इति निर्मूला उत्तरचरितस्य चरमत्वकल्पना।

इदञ्चापरं सामान्यत उक्तं प्रतिवादिना—भक्तोऽहं भवभूतेः अतः पूज्या मम तदुक्तय—इति। अत्रोच्यते—सर्वथा सुखमेधतां भक्तिर्मा च भूत् पूजापरिहाणिः। परं सर्वमिदं तस्य गुणेष्वेव भूयात्। उक्तञ्च कविना "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" इति। यस्तु दोषः स वाच्य एव। "शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि"। तत् दोष एवास्तु दोषः, माभूत् दोषेषु पक्षपात-निबन्धना गुणभावना।

अलं बहुना। इहैव वचः संह्रियते। अदोषं सदोषं वा उक्तम् इति विचारयन्तु सन्तः, प्रतिबोधयन्तु च मां कृपया यदि दृश्यते दोषः, तत एव हि मे परितोषः। इति।

---

## वल्लीविलासम्

लेखकः—स्वर्गतः रामसत्यकाव्यव्याकरणवेदान्तदर्शनतीर्थः

साम्ध्यं गन्धं हृतवति चले गन्धवाहे वसन्ते
काचिद्वल्ली व्यथितहृदया भूमिलग्नाङ्गयष्टिः।
संङ्गाशंसातरलमनसं मञ्जुगुञ्जन्तमन्ते
भृङ्गाधीशं मधुरमधुरं प्रीतिपूर्णं जगाद॥ १॥
भो भो भृङ्ग! प्रणयसरसीमग्नकादम्बराज?
कान्तामेनां भवति नितरां सानुरागामवेहि?

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

मूढ़ो वायुः सपदि यदि तां गन्धभूषापहारी
भूयो भूयोऽभिभवति तदा किं क्षमा ते क्षमास्मिन् ॥ २ ॥
नूनं धीर ! त्वयि मधुकरी सादरोदारभावा
चेतः शुद्धं यदि च भवतोऽप्यत्र बद्धानुकारि ।
हंहो त्वमस्तदपि मधुना मत्प्रदत्तेन गन्ध-
प्रत्याहृत्यै व्रज करुणया चौरगम्यं दिगन्तम् ॥ ३ ॥
योषावाक्यं प्रभवति सदा भर्त्तरीहप्र शान्त्ये
मत्वेत्येवं मनसि भवतो मास्तु मन्दाचलेशः ।
पाथोजिन्या निशि हिमरुचा क्लिष्टया संस्मृतोऽपि
प्रातःसूर्य्यः क्षिपति जलधौ तं विपक्षं करौघैः ॥ ४ ॥
यो मां शीर्षे वहति नियतं वृक्षराजो विशालः
तस्यैवाग्रे प्रियतम भवच्चित्तमानन्दयामि ।
एतत्पश्यन् मुकुलपुलकैरञ्चितोऽयं रसालः
क्रोधादुद्वेजयति मतिमन् मामितः पश्य पश्य ॥ ५ ॥
क्रूरे धिक् त्वामपरकलुषालिङ्गनासक्तचित्ता-
मित्यं गर्हापरवशरुवत्कोकिलास्योपि चायम् ।
उच्चैः सर्व्वं भुवनमसकृज्ज्ञापयन् कम्पिताङ्गः
किं किं नो मा मधुपललनां भाषते प्राणकान्त ! ॥ ६ ॥
बद्ध्वा शाखा वलिभिरनिशं पाणिभिर्मां कठोरे
धत्ते तुङ्गे वपुषि च दिशन्नात्मनः सेवकत्वम् ।
एतत्सर्व्वं तृणमिव मया मन्यते यस्य शान्त्यै
स त्वं बन्धुर्विलससि पुरो रे मनो मा शुचस्त्वम् ॥ ७ ॥
जाने जाने मयि तव दयां जीवितेश ! प्रकामं
यामालोक्य ज्वलति शतशस्तूतकः शक्तिहीनः ।
धन्यो धन्यस्तव च नितरां गाढ़भावानुभावो
यत्सम्पर्कादहमपि कृतार्थाऽस्मि संसारसार: ॥ ८ ॥


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

एषा सन्ध्या तिमिरवसना पद्मिनीशेन सार्द्धं
सम्भोगार्थं प्रविशति मुदा पश्य रत्नाकरान्तः।
हा हा बाले नलिनि रविणा वञ्चितासीति शोक-
व्याहारः खे चरति पततां तत्प्रयाणे यतस्त्व ॥ ९ ॥
नायं चौरो मम सुभगतां केवलं हन्ति किन्तु
त्वत्सर्वस्वं हरति महसा व्याप्तदिक्चक्रबालः।
हृद्यं यद्यन्मृदुल-कुसुमं संस्पृशेदेष पापः
तत् किं न स्यात् सरल भवतः पेय-निष्यन्दहीनम् ॥ १० ॥
सान्द्रानन्दं पवनहतकं गूढमन्विष्यतस्ते
नूनं श्रान्तिर्नहि नहि भवेद्भूयसी भृङ्गराज !
वृक्षश्रेण्यो गहनविटपैरङ्ग तं दुर्विनीतं
दर्पोद्दामं मुहुरपि पुरो यन्निरोत्स्यन्ति साधो ॥ ११ ॥
नानाकाराः पथि नयनयोः स्निग्धपीयूषधाराः
फुल्ला वल्लयः प्रतिदिनमहो प्राणिनः प्रीणयन्ति।
तासां शोभां मधुकरवर ! प्रेक्ष्य धूर्त्तः समीरो
मुग्धस्वान्तः क्षणमपि न किं विस्मरेदात्मकार्य्यम् ॥ १२ ॥
स्त्रीणामेषा जयति सहजा हारितास्यां त्रिलोक्यां
दुर्द्दान्तानां भवति मृदुता यत्समालोकनेन।
चण्डो ध्वान्तप्रचयमथने चण्डरश्मिर्नलिन्यां
सौम्यालोकः प्रथयतितरामेतदानन्ददायिन् ॥ १३ ॥
प्रालेयानामपगमवशात् सम्प्रसन्ना निशायां
दिक्सुन्दर्य्यो वियति रसिक ! स्वागतं ते विभाव्य।
अङ्गे रम्यां शशधररुचिं धारयन्त्यः सलीलं
आधास्यन्ते कमपि भवतो मानसे भृङ्ग ! हर्षम् ॥ १४ ॥
पन्थानं ते मुखरपयसां दीर्घतोयाशयानां
वृन्दान्यग्रे मधुप कथयिष्यन्ति मा संशयो भूः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मन्दं मन्दं वहन-समये तस्करेणानिलेन
जङ्के तेषामपि खलु हठात् सञ्चरः शीकराणाम् ॥ १५ ॥
अम्भोजानां दिवसविलयान्मुद्रितानां दलान्तो-
रुद्धाः क्लान्ता यदि मधुकरास्तत्र ते बन्धवः स्युः ।
सम्भाष्यैतानमृतलहरीसोदरैर्वाक्यजालैः
व्याकुर्व्वीथा दयित ! नु तदा वत्सलत्वं स्वकीयम् ॥१६॥
त्वां विज्ञाय द्रुतगतिरसौ यद्यपि स्यात्तथापि
गन्धास्ते ते गमनपदवीं तावकीं निर्द्दिशेयुः ।
आपन्नानां प्रकृतिरिति यत् प्रेक्षमाणाः स्वपक्षं
सर्व्वं व्यक्तं विदधति यथाशक्ति ते मुक्त्युपायम् ॥ १७ ॥
इत्थं संसूचितगतिमलिन्दक्षिणाशाकलङ्कं
गर्व्वोत्कर्षावमतधरणीमण्डलं द्रागुपेत्य ।
लोकज्ञानां प्रथम ! विधिवत् साधयित्वा स्वकार्य्यं
प्रत्यावृत्तो भव मम हृदाकाश-शोभी सुधांशुः ॥ १८ ॥
नान्या याञ्चा तव चरणयोः सेविकाया ममाद्य
चापल्यं मेऽशरण शरण ! क्षम्यतां नाथ नाथ !
व्याहृत्यैवं पवनदलनान्मूर्च्छितायामकस्मा-
दस्यामिन्दुः कर-विततिभिस्तां विदूनां सिषेवे ॥ १९ ॥
( सावशेषम् )

---

## गुरुशिष्यसंवादः

( आषाढ़मासादनुवृत्तः )

लेखकः—श्रीशरत्कमलन्यायस्मृतितीर्थः

गुरुः । "द्विजातेरेवोपनयनसंस्कारो न तु शूद्रादे"रिति प्रतिपादितम् । औपनिषदजाबालसत्यकामवृत्तान्तेन शूद्रादेरप्युपनयन-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

संस्कारार्हतया यस्तावद् वेदाध्ययनाद्यधिकार आक्षिप्तस्तत्परिहारोऽपि विस्तरशः कृतः। अतः परं श्रीमतां का जिज्ञासा ?

( पूर्व्वपक्षः )

शिष्यः। जाबालसत्यकामवृत्तान्तेन शूद्रस्य वेदाध्ययनाद्यधिकारो न प्रतिपादयितुं शक्यते, किन्तु प्रमाणान्तरेण वैदिकेन सोऽधिकारः प्रतिपादित एव।

गुरुः। किं तत् प्रमाणान्तरम् ?

( १ )

शिष्यः। उच्यते। तथाहि शुक्लयजुर्वेदीयो २६अ० २मन्त्रः। मन्त्रः—"यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयास मयं मे कामः समृध्यता मुपमादो नमतु।"

अस्यायमर्थः—"इमां कल्याणीं वाचं" निखिलभूतहितकारिणीं वेदवाणीं "यथा" "ब्रह्मराजन्याभ्यां" ब्राह्मणाय, क्षत्रियाय, "अर्य्याय" वैश्याय "आवदानि"-ब्रवीमि, (तथा) शूद्राय च "आवदानि"ब्रवीमि। एवं यथा "स्वाय" आत्मीयाय "आवदानि" तथा "अरणाय च" पराय च शत्रवेऽपीत्यर्थः, "आवदानि"। "अरणः" अपगतोदकः शत्रुः, नास्ति रणः शब्दो येन सह वाक्सम्बन्धरहितः शत्रुरिति वा।

व्याख्यातवेदमन्त्रेण ब्राह्मणादेर्यथा वेदाध्ययनाद्यधिकारस्तथा शूद्रादेरपीति सुस्पष्टमुपलभ्यते। एवं यथा—आत्मीयजनाय वेदकथनं तथा शत्रुजनायापि। युक्तञ्चैतत्, कथमन्यथा वेदवचसो वर्णितब्राह्मणादिशत्रुमित्रनिखिलभूतकल्याणकरत्वमुपपद्यते नाम ? अपि च—द्विजातिमात्राधिकारव्याख्याने—(१) "शूद्राय" (२) "अरणाय च" इति पदद्वयं व्यर्थं स्यात्। ततश्च शत्रुमित्रेभ्यः सर्वेभ्य एव वेदवाणीकथनश्रवणात् सर्वेषामेव तत्राधिकारः ( न केवलं द्विजातेः ) शत्रुत्वमित्रत्व-सम्बन्धस्य जातिविशेषाननुगततया सर्वजाति साधा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रणत्वात्। एवञ्च सर्वजातेर्वेदाध्ययनाद्यधिकारसिद्धौ शूद्रादेरुपनयनसंस्कारोऽपि सिद्धः उपनयनपूर्वकत्वाद् वेदाध्ययनस्य।

(२)

(क) अपि च बृहदारण्यकोपनिषदि मैत्रेयीं प्रति ब्रह्मोपदेशः श्रूयते—"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (४।५।६) इत्यादिः।

(ख) ब्रह्मविदा याज्ञवल्क्येन च सह वाचक्नव्या गार्ग्या ब्रह्मविचारः श्रूयते (बृहदारण्यकोपनिषदः—अध्याये ६।८ ब्राह्मणं द्रष्टव्यम्)। एवं वैदिकसंहितायां "विश्ववारादे" र्याज्ञिकत्वमाम्नातम्। आत्रेयोप्रभृतीनामपि निगमान्त-विद्याद्यधिकारः प्रसिद्धः। * ततश्चैतेन स्त्रीणामुपनयनसंस्कारद्वारा ब्रह्मचर्य्य-वेदाध्ययनादि सुस्पष्टमवगतम्।

(ग) स्मृतञ्चैतत् परमर्षि-हारीतेनापि यथा—"द्विविधाः स्त्रियः, ब्रह्मवादिन्यः सद्यो वध्वश्च। तत्र 'ब्रह्मवादिनीनामुपनयनमग्नीन्धनं स्वगृहे भैक्ष्यचर्य्येति। सद्यो बधूनामुपनयनं कृत्वा विवाहः कार्य्य" इति। महर्षि-यमेनापि स्मृतमेतद् यथा—

"पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनञ्च वेदानां साविन्नीवाचनं तथा॥"

एवञ्च स्त्रीणामुपनयनसंस्कारद्वारा ब्रह्मचर्य्यं वेदस्याध्ययनमध्यापनञ्च श्रुतिस्मृतिप्रमाणसिद्धमिति शूद्रस्याप्युपनयनसंस्कारद्वारा ब्रह्मचर्य्यपूर्वकवेदाध्ययनादि सर्वमेव सिद्धं भवति स्त्रीभिः सह शूद्रस्य शास्त्रेणैव समानत्वस्य प्रतिपादितत्वात्। ततश्च शूद्रादेरुपनयनसंस्कारो नास्तीति सिद्धान्तः कथमपि नोपयुज्यते नामेति।

---

* "अस्मिन्नगस्त्यप्रमुखाः प्रदेशे, भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्यां वाल्मीकिपार्श्वादिह पर्य्यटामि॥"
(उत्तररामचरितनाटकस्य द्वितीयाङ्कीयविष्कम्भके आत्रेयीवाक्यम्।)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


( सिद्धान्तः )

गुरुः। न तावच्छूद्रादेरुपनयनसंस्कारो वेदाध्ययनादिकमपीति सुदृढ़ः शास्त्रीयः सिद्धान्तः। भवता प्रमाणतया उपन्यस्ते शुक्लयजुर्वेदीयमन्त्रे उपनयनसंस्कारस्य तथा वेदाध्ययनादेर्वार्त्तालेशोऽपि न श्रूयत इति कथं तेन शूद्रादेरुपनयनसंस्कारद्वारा वेदाध्ययनादिकं प्रमाणितमिति मन्यते? तथाहि तन्मन्त्रस्य पूर्वमन्त्रे परमात्मानं प्रति, परस्मिंश्च मन्त्रे बृहस्पतिं प्रति यजमानस्य प्रार्थना श्रूयते। अपि च तन्मन्त्रस्यापि शेषभागे प्रार्थनाविशेष एवावगम्यते। तथाहि—तन्मन्त्रस्य शेषभागस्यायमर्थः—"यतोऽहं ब्राह्मणादिभ्यः कल्याणीं वाचं" परमात्मानं प्रति पूर्वमन्त्रोक्तप्रार्थनारूपां वाणीं वदामि, ततोऽहं "देवानां प्रियो भूयासम्" "इह" संसारे, "दक्षिणायै" दक्षिणाया "दातुश्च" प्रियो भूयासम्, देवा दक्षिणादातारश्च मयि प्रीतिं कुर्वन्तु इत्यर्थः। किञ्च "मे" मम "अयं कामः समृद्ध्यतां" सफलो भवतु। "उप मा अदः नमतु" "अदः" इति यः काम इष्यते स उच्यते तद् यथा उपनमतु मां प्रति देवदत्तः १।

एवञ्च "यथेमां कल्याणीं वाच"मित्येवं मन्त्रस्यादौ मध्ये परस्मिंश्च कुत्राप्युपनयनसंस्कारद्वारा शूद्रादेर्वेदाध्ययनाद्यधिकारवार्त्तालेशोऽपि नास्तीति सिद्धम्।

---

१। उवटाचार्यमहीधराचार्यप्रणीतं भाष्यम्। तैस्तु आचार्यैः "इमां कल्याणी"मित्यस्य "अनुदेहि निर्नीं दीयतां भुज्यतामित्येवमादिका"मित्यर्थः कृतः। तस्यायं भावः—आदौ देवपित्रादिभ्यो दानं पश्चात्तदवशिष्टभोजनमुचितम्। अन्यथा अकल्याणमवश्यम्भावि, "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः। भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणा"दित्युक्तेः, तस्माद् देवतादिभ्यो दीयतां पश्चात्तद्दत्तावशिष्टं भुज्यतामित्येवंरूपा इयं कल्याणी वागस्माभिः दक्षिणाया ग्रहीतृभिः पुरोहितैर्यजमानेभ्यो ब्राह्मणादिभ्य आत्मीयेभ्यः शूद्रेभ्यश्च यत उक्ता ततो देवादीनां दातॄणाञ्च प्रियत्वमस्माकमवश्यम्भावि। कामनायाश्चास्मदीयायाः सफलताप्यवश्यम्भाविनीति पुरोहितानामाशंसामेव वदति तादृशो मन्त्रो न तूपनयनसंस्कारद्वारा शूद्रादिभ्यो वेदवाणीदानमिति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तथाहि अस्य मन्त्रस्य पूर्वमन्त्रे उपनयसंस्कारस्य वेदाध्ययनादेर्वा प्रसङ्गलेशोऽपि नास्ति। स मन्त्रो यथा—"अग्निश्च पृथिवी च संनते ते मे संनमतामदः। वायुश्चान्तरिक्षञ्च संनते ते मे संनमतामदः। आदित्यश्च द्यौश्च संनते ते मे संनमतामदः। आपश्च वरुणश्च संनते ते मे संनमतामदः। सप्त संसदो अष्टमी भूतसाधनी सकामाँ। अध्वनस्कुरु संज्ञानमस्तु मेऽमुना"। शुक्लयजुर्वेदसंहिता।२६।१।

अस्यायमर्थः—"अग्निश्च पृथिवी च सन्नते"—सन्नमनं सन्नतिः प्रह्वीभावः—आनुकूल्येन प्रवृत्तिः। अग्निश्च पृथिवी च सम्भोगार्थं संनमते, कस्मादतो ब्रवीमि—ते अग्निपृथिव्यौ मे मम सन्नमताम्—अत्र णिचो लोपश्छान्दसः। सन्नमताम्—सन्नमयताम्—वशवर्त्तिनं कुरुतामित्यर्थः। "अदः"—इति पुरुषादेर्विशेषनायोपलक्षणम्। द्वितीयान्तश्चोपलक्षयति कर्मभावात्। एवमुत्तरेष्वपि योज्यम्। वायुश्चान्तरिक्षञ्च आदित्यश्च द्यौश्च आपश्च वरुणश्च सप्तसंसदः परमात्मा उच्यते। यस्य तव सप्त संसदः सप्त संसदानि प्रकृतानीत्येवम् अग्निपृथिवीवायून्तरिक्षादित्यद्युलोकाम्बुवरुणान्तानि। यस्य तव अष्टमी बभूव भूतानां साधनी पृथिवी। नहि पृथिवीमन्तरेण भूतानामुत्पत्तिरस्ति। तत्—त्वं प्रार्थ्यसे—सकामान् अध्वनः कुरु, सकामान् मार्गान् अस्माकं कुरु—यदा हि तैर्लभ्यते तदा सकामा मार्गाः स्युः। "संज्ञानं"—सङ्गतञ्च ज्ञानम् अस्तु मे मम—अमुना—विशेषनामाभिप्रायमेतत्। विज्ञानात्मा वा उच्यते—यस्य तव सप्त संसदः—मनश्च बुद्धिश्च पञ्चबुद्धीन्द्रियाणि च, अष्टमी च वाक्—भूतसाधनी भूतप्रज्ञमिकरी। तं त्वां ब्रवीमि—सकामान् अध्वनः कुरु अस्माकं—संज्ञानञ्च अस्तु मे अमुना। *

उद्धृतमन्त्रे उपनयनसंस्कारस्य वेदाध्ययनादेर्नामापि न श्रूयते, तथा तन्मन्त्रस्य ("यथेम"मित्यादिमन्त्रस्य) परमन्त्रेऽपि। तथा च

* उवटाचार्य्यकृतभाष्यम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

स चायं मन्त्रो यथा—"बृहस्पते अति यदर्य्यो अर्हाद्द्युमद् विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्। उपयामगृहीतोऽसि बृहस्पतये त्वा। एष ते योनिर्बृहस्पतये त्वा।"

अस्यायमर्थः—"ऋतात्" सत्यात्—हे ऋतप्रजात! ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य स ऋतप्रजातः। हे बृहस्पते! "बृहतां" वेदानां "पते" पालक! "चित्रम्"—नानाविधं, "तद् द्रविणं" "अस्मासु" यजमानेषु, "धेहि" धारय स्थापय देहीत्यर्थः। तत् किम्? "अर्य्यः"—स्वामी "यद्धनम्" "अर्हति"—पूजयति ईश्वरयोग्यं धनं देहीत्यर्थः, यद्धनं "जनेषु" लोकेषु "विभाति" विविधं शोभते। कीदृशं धनम्? "द्युमत्" द्यौः कान्तिरस्य अस्ति इति द्युमत् "क्रतुमत्" क्रतवो यज्ञा विद्यन्ते येन तत्, येन यज्ञाः क्रियन्ते तादृशं धनं देहीत्यर्थः। यद्धनं "शवसा" बलेन "दीदयत्" दापयति प्रापयति वा धनान्तरं तद्धनं देहीत्यर्थः। "उपयामेन" पात्रेण "गृहीतोसि" "बृहस्पतये" अर्थाय "त्वा" गृह्णामि। स्थापयति एष ते योनिः स्थानम्। बृहस्पतये त्वां सादयामि। *

व्याख्यातमन्त्रेण बृहस्पतिं प्रति यजमानस्य प्रार्थना श्रूयते। ततस्तास्मिन्नपि मन्त्रे उपनयन-संस्कारस्य वेदादिदानस्य वा प्रसङ्ग-लेशोऽपि नोपलभ्यते इति सुस्पष्टम्। ततश्च "यथेमां कल्याणीं वाच" मिति भवदुक्तो मन्त्रस्तदाद्यन्तमन्त्रौ चोपनयन-संस्कारद्वारा शूद्रा-दिभ्यो वेदादिदानं न कथयन्तीति भवदुपन्यस्तः पूर्व्वपक्ष उन्मत्त-प्रलाप एवेति सिद्धम्।

आदिमध्यान्तपर्य्यालोचनमकुर्व्वतां वेदाङ्गाद्यजानतां स्वेच्छापर-तन्त्रव्याख्यातॄणां मतमास्थाय पूर्व्वपक्षो न करणीयः, तादृशाचरणेन पूजनीयो वेदः प्रहृत एव स्यात्—तदेतदुक्तम्

"बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति"। इति।

योषित्साद्दृश्येन शूद्रादेरुपनयनवेदाध्ययनादे यत्प्रमाणमुन्यस्तम्। तदालोचनमागामिनि दिवसे करणीयमिति॥ (क्रमशः)

---

* महीधराचार्य्यकृतभाष्यम्। विस्तृतिभयाद भाष्यकारादेः सर्वं वाक्यं नोद्धृतम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


( पूर्व्वतोऽनुवृत्तम् )

( नेपथ्य )—अज्जा! परित्ताअध परित्ताअध कुमालो इन्दसेणो ।

नल:—कुत: परित्रातव्य: ?

( नेपथ्ये )—तस्स बालअसुलहं लत्तपरिच्छदं पेक्खिअ कुपिदादो महिसादो ।

नल:—( ससम्भ्रमं ) अयि कुमार इन्द्रसेन इति नलहतकस्य कुल-प्रतिष्ठा, कुत: खल्वायुधम् ? अथवा अलं महिषवित्रासनार्थं नलस्य आयुधेन ।

( पुनर्नेपथ्ये )—हा हा ! एसो दुट्ठवालो अदिमेत्तं पचामसयो, ता सिग्घं परित्ताअध ।

नल:—अभयम् अभयं कुमारस्य, एष नलस्तस्य परित्राता ।

[ निष्क्रान्त: ] ।

प्रविश्य विदूषक:—अहो मन्दारकस्य निपुणवेदित्वम् ! यदेव मनसा कल्पितं, तदेव समुपनतं, कुमारम् इन्द्रसेनं पुरुषेण सह क्रीड़ोद्याने विहरन्तमुपलभ्य प्रियवयस्यं तत्र प्रापयितुं मयैव दुरन्त: सैरिभ: प्रयुक्त:, तन्नूनं दृष्टातिसामर्थ्यं इन्द्रसेन एव तं निवारयिष्यति, परम् अनुषङ्गत: पितापुत्रयो: सुसम्बन्ध: सम्भविता । भवतु, वयस्य, अद्य सम्भ्रमादात्मानं समुद्घाटितवानसि, अद्य सफला: सर्वे: परिश्रमा: मन्दारकस्य ! वयस्य, कियच्चिरं वञ्चितोऽस्मि ते सौहार्दपरिष्वङ्गात् । भवतु इदानीं क्रीड़ोद्यानं गत्वा विनीतविषादो भवामि । [ निष्क्रान्त: ] ।

( तत: प्रविशति पुरुषेणानुगम्यमान इन्द्रसेन: नलश्च तं करे गृह्णन् )

इन्द्रसेन:—आर्य, किमत्र विस्मयं वहसि ? क्षत्रियकुलाङ्कुरोऽहम् अधिगतधनुर्वेद:, सैरिभ इति लघीयं मात्रा । मम हि—


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

नलो वीराग्रणीस्तातो वीरसेनः पितामहः ।
भीमो मातामहो भीमः स्वयं शास्त्रे गुरुर्वरः ॥

नलः—वत्स, ललितं जल्पसि, अथ पृच्छामि कुतस्त्योऽयं वीराग्रणीः नलो नाम, यं तातत्वेन व्यपदिशसि ?

पुरुषः—अम्मो ! कुमालस्स तादं नलं ज्जेव एसो ण आणादि ? ता कोदिसो एसो ?

इन्द्रसेनः—आर्य्य, मम तातं नलमिव नावधारयसि ? यद्येवं श्रूयतां तस्य मम त्रिलोकैकवीरस्य तातस्य—

क्रोधाद्धनुर्ध्वनिविघूर्णितवातचक्रं
दृष्ट्वा त्रसन्ति सुरवैरिगणा विवर्णाः ।
संसारभङ्गमवधार्य्य भयेन धाता
सोत्कण्ठतामिव समाश्रयते प्रकामम् ॥

अपिच— यत्पुण्यकीर्त्तिपरिपाकवशात् पृथिव्यां
नामापि पापसुहृदामभवद् विलुप्तम् ।
गायन्ति वासवसभासदने विनीता
विद्याधराः सपदि यस्य गुणोपचारान् ॥

नलः—किमेवं कुमारो निषधेषु पुरा विश्रुताधिकारमाक्षिपति ?

इन्द्रसेन—अथ किम्,त्रिलोकविश्रुतपराक्रमं निषधराजमिव स्मरामि !

नलः—आम् ! एष ते तथाभूतस्तातः ?

इन्द्रसेनः—कथमिव ?

नलः—आम् ! एष तु विज्ञात एव ।

इन्द्रसेनः—आः ! किमेवमज्ञाततत्त्वोऽपि विज्ञानाभिमानिताम् आत्मनः प्रदर्शयसि ? धिक् शान्तम् !

नलः—कुमार ! कथमज्ञाततत्त्वो भवामि ?

इन्द्रसेनः—अन्यथा कथं तातस्य नलस्यापि कीर्त्तिमभूतामिव मन्यसे ? नूनमविदित एव ते मदीयस्तातः !

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नलः—कुमार, अलमत्र क्रोधेन, मया स एव नलो विज्ञायते, येन द्यूतव्यसनविनिर्जितेन राज्यं परित्यज्य कान्तारमाश्रित्य बुद्धिदोषादात्मनो निःसहाया धर्मपत्नी विसर्जिता, तद् यदि नायं तातो व्यपदिष्टस्तदा को वात्र मे मत्सरः ?

इन्द्रसेनः—किमेवं प्रलपसि ? स एव मे तातस्त्रिभुवनविख्यातकीर्त्तिः। यच्च तस्य दोषमुपक्षिपसि, तत्र तु कारणं नानुसन्धत्से ?

नलः—कीदृशं कारणं तत्र श्रीमता समुपलब्धम् ?

इन्द्रसेनः—कलिनिग्रहस्तत्र कारणम्।

नलः—अथ स्वयमेव पितुः कलिना निग्रहं शंसन् अस्य त्रिलोकविश्रुतं वीर्य्यं किं न मलिनयसि ?

इन्द्रसेनः—धिक् प्रहसनम्! भद्र, अलमुत्तरोत्तरेण, यथागतं प्रतिनिवर्त्तस्व, किमेवं नलात्मजं मामिन्द्रसेनं समुद्दीपयसि ?

नलः—अये! कुपित एव मे वत्सः परिलक्ष्यते, तथाहि—

भ्रूभङ्गकुटिला दृष्टिः क्रोधविस्फुरितोऽधरः।
दृढं सव्येन हस्तेन धनुरंसस्थमग्रहीत्॥

पुरुषः—अम्मो! कुबिदो विअ लक्खीअदि कुमालो! ता को णु क्खु एसो कुमालस्स उव्वेअं उप्पादेदि ?

नलः—कुमार, वृथैव समुद्दीप्तो भवसि।

इन्द्रसेनः—कथं वृथैव ? गुरुपरीवादश्रवणमतिहीनस्यापि समुद्दीप्तिहेतुर्भवति, तदहं मन्ये नाधीतं भवता गुरुगृहेषु।

नलः—कुमार, अपि गुरुणा केवलमेतदेव शिक्षितोऽसि, यथा गुरुजननिन्दा न श्रोतव्येति, नत्वेतदपि यथा दोषा वाच्या गुरोरपीति।

इन्द्र—( सरोषं ) भद्र, मा तावत्, अलं दोषलेशेनापि युक्तस्य मे तातस्य दोषानुसन्धानापराधेन, यदि इतः परमपि मामुद्वेजयसि, तदा नूनमतिक्रान्तमर्य्यादो भवामि।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

नलः—( कृतकं कोपं प्रदर्श्य ) पितृविक्रमविस्मित, प्रगल्भ, अति हि नाम प्रगल्भसे, अपि तव निदेशेनैव ते पितरं मृषा गौरवभाजं करिष्ये, अहो, शैशवशीलो !

इन्द्र—अनभिज्ञातचारित्र, संयम्यतामात्मनो रसना, अन्यथा—

क्षात्रज्योतिर्ज्वालया दीप्रमस्त्रं जिह्वागर्वं संविधाता लघुं ते।
लोको द्रष्टा दुष्टदण्डप्रकारं पापोत्सेकादस्तु लोके निवृत्तिः॥

नलः—डिम्भक,

वाचा शक्यं वक्तुमेवं जनानां कृत्यारम्भे दुष्करं कृत्यमेतत्।
स्नेहात्तावत् सह्यतामिव नीतं बालोऽसि त्वं बालवाचं दधीथाः॥

इन्द्र—किं नु ? इन्द्रसेनं मां परिहससि ? अनभिजात, दुर्मर्यादं, अनभिज्ञातनलप्रभाव, एषोऽहं त्वां—

शुभ्रांशुवंशप्रभवः प्रतापो नलस्य देहादुपजातजन्मा।
त्वद्गर्वविध्वंसकरोऽद्य भूत्वा प्रत्याययिष्ये निजवंशकीर्त्तिम्॥

तदेहि यावदायुधमुपादाय समरक्षमां भूमिमवतराव:।

नलः—(स्वगतम्) अये, सुतरामुन्मत्ततेजा इन्द्रसेनो लक्ष्यते। (आकाशे दृष्टिं बद्धा ) भगवति, राज्यलक्ष्मि, सनाथासि नूनमेतेन भाविना नरपतिना। तदिदानीं कथं व्यवहरेयम् ?

इन्द्र—भद्र, अपि भयमुपगतम् ?

नलः—कस्मात् ?

इन्द्र—आयुधव्यापारात्।

नलः—धिक् शान्तं ! शैशवमुग्ध, अलमुत्तरोत्तरेण एहि समरक्षमां भूमिमेव अवतराव:।

इन्द्र—भवत्वेवं तावत्। ( उभौ परिक्रामतः )। अये इयं सा दृश्यते समरक्षमा भूमिः, तदत्र प्रविश्य पौरुषपरीक्षा प्रवर्त्यताम्।

नलः—एवं क्रियताम्। [ निष्क्रान्तौ ]

पुरुषः—अम्मो ! सच्चं ज्जेव जुज्झव्वावारं कादुं पउत्तो कुमालो

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पड़िबक्खस्स एक्कं कम्मुअं देदि, हद्धी ! हद्धी ! एसो पुलिसो कुमालं उद्दिसिअ कम्मगुणए सलं आलोवेदि, कुमालो बि तह ज्जेव कलेदि, एसो दोसं ज्जेब साहिणिबेसो समलो पउत्तो ! ( दृष्ट्वा ) अले किस्स क्खु एदं, पउत्तमत्तो ज्जेब णिउत्तो समलव्वाबालो ! किस्स क्खु एदं ! ( निपुणं दृष्ट्वा ) आं एसो अह्माणं लाआ भीमो लाअदालिआए अज्जेण मन्दालएण बुट्ठ जअन्धलेण अ अणुगदो जुज्झव्वाबालं णिबालेदि, ता पच्चुज्जोबिदह्मि ।  [ निष्क्रान्तः ]

( ततः प्रविशति भीमादिसहितो नलः )

भीमः—वत्स, नल, अलं दुःखानुषङ्गेण, सर्वमेव तत्त्वतो गृहीतमस्माभिः, अत्र नास्ति ते पुरुषदोषः, परं दैवमेव अत्र अपराध्यति। दैवमप्रतिविधेयमिति को वा न जानाति ?

नलः—अहो प्रत्युज्जीवितोऽस्मि, यदि मे गुरवः कठोरकृत्येऽपि मयि प्रसादमवलम्बन्ते ।

भीमः—वत्स, नल, एष प्रचार्य्यमाणः स्वयंवरणवृत्तान्तोऽपि तवैव लाभाय दमयन्त्या समुद्भावितः, तदत्र भार्य्यामन्यथा मा मंस्थाः,

नलः—( स्वगतम् ) अहो जानाम्येव सुनिपुणा देवीति, तदद्य देव्यापनीतो मे मानसदोषप्रसूतो विकल्पपर्य्यायः । तदियं क्षमापणार्हा देवी, कुतः ?

सा साधुशीला मम पुण्यलब्धा प्रतिक्षणं ध्यायति सङ्गतिं मे ।
मूढो ह्यहं तामसतीं विचिन्वन् अहो महापातकदोषमाप्तः ॥

भीमः—वत्स, नल, कियच्चिरादनन्तरं सम्प्राप्तो भवान्, तदियं तपस्विनी सुचिरं लब्धदेव्या अभिनन्द्यतां सम्भाषणेन सपुत्रा दमयन्ती, एषोऽहम् अचिरात् प्रियसुहृदम् ऋतुपर्णं समानीय तेन साकमेव त्वत्सङ्गतिमहोत्सवं सम्भावयामि, जयन्धर, त्वमपि गच्छ सभास्थानं, तत्र गत्वा विज्ञापय सविनयं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


समवेतान् पारिषदान्, यथाहमनुपदमेव तेषां सम्भावनार्थ-मुपगच्छामीति। [ निष्क्रान्तः ]

कञ्चुकी—यथाज्ञापयति महाराजः। [ निष्क्रान्तः ]

दम—आर्य्यपुत्र, नूनं विस्मितोऽसि, यदद्यापि कथं जीवामीति ?

नलः—शान्तं पापं प्रतिहतममङ्गलं देव्याः ?. देवि,—

इन्द्र—तात, कथमेतावच्चिरमस्मान् परिहाय स्थितोऽसि, अपि न स्मृतिपथमागता कदापि ते अस्माकं चिन्ता ?

नलः—वत्स, किमेवं पृच्छसि ? प्रकृतिदुर्ललित,

राज्यं विहाय घनकाननभूप्रयाणे
नाभूत्तथा किमपि दुःखमसह्यरूपम्।
यावत्त्वदीयवदनाम्बुजहास्यरेखा-
सम्पर्कविच्युतिवशाद् विषमं तदासीत्॥

वत्स, एहि इदानीं परिष्वङ्गेण विनोदय माम् !

दम—वत्स, परिष्वजस्व तातं, तथा परिष्वजस्व यथा पुनरपक्रमितुं न शक्नुयात्।

इन्द्र—( परिष्वज्य ) तात, न पुनरपक्रमितुं समर्थोऽसि ?

नलः—प्रिये दमयन्ति, वत्स इन्द्रसेन, नाद्यापि नलस्तथाभूतो वर्त्तते, यथा पुनरपक्रान्तः स्यात्, तत् परिहीयतां मनोमालिन्यम्।

दम—आर्य्यपुत्र, तेरेव मनोमालिन्यं न परिहीयते, येषां दृष्टिगोचरतां न गतोऽसि। तत्तव प्रदर्शनाय सुसज्जीकृतमपि एक-पद एव परिहृतं दमयन्त्या।

नलः—प्रत्युज्जीवितोऽस्मि। ( विदूषकमुपसृत्य ) वयस्य, मन्दारक, एहि दृढं परिष्वजस्व मां, कियच्चिरादनन्तरं निराबाधं भवन्तं परिष्वजे। ( परिष्वजते )।

विदू—अनुगृहीतोऽस्मि यदेतावता कालेन एकान्तवर्त्ती जनोऽयं स्मृत इति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नलः—वयस्य, सुचिरात् परं भवतः सर्वानुपलभ्य कृत्यविमूढो जातोऽस्मि। तदेहि वयस्य पुनरपि गाढं परिष्वजस्व मां—

वह्नोः कालादस्य प्रणयपरिणाहव्यवसितं
परिष्वङ्गस्त्वङ्गे विलसतु विषादव्यथयिता।
अहो दूरे दूरे चिरमधमदेवानुसरणात्
स्थितं यावच्छीघ्रं हृदयमिह संयातु हृदयम्॥

[उभौ परिष्वङ्गं नाटयतः]

विदू—वयस्य, आनन्देन सुतरां मुग्धोऽस्मि, तत् किं गायामि, किं हसामि, किं वा नृत्यामि, इत्येतदेव निर्णेतुं नालमस्मि।

नलः—वयस्य, मन्दारक, प्रिये दमयन्ति, निर्घृणो नलहतकः लज्जमानोऽपि किञ्चित् प्रष्टुमिच्छति।

उभौ—किमिव तत्?

नलः—नलहतकेन विजने वने विसर्जनादनन्तरं केन दमयन्ती विदर्भान् प्रापितेति?

विदू—वयस्य, श्रूयतां, अहमेव कथयामि—यदा भवानर्द्धवासो दधानां प्रियसखीं दमयन्तीं परिहाय दूरं गतवान्, तदा निद्रोत्थिता सा समन्ततः शून्यं वीक्षमाणा प्रमुक्तकण्ठं रोदितुं प्रवृत्ता, इतस्ततो वने सोन्मादं परिभ्रमन्ती कातरपरिदेवनेन वनदेवतानामपि नयनाश्रूणि पातयन्तीव स्थिता, अथ सा विलपन्ती काननान्तरे भीषणभुजङ्गेन वित्रास्यमाना त्वामुच्चैः शब्दापयन्ती यावदेव नोपलब्धवती, तावदेव मोहविलुप्तसत्त्वा भूमौ पतिता विमूढकरणग्रामा सा स्पन्दशून्या गतासुरिव संवृत्ता—

नलः—ततस्ततः?

विदू—ततश्च यावदेव स भीषणभोगं विस्तार्य भुजङ्गो दमयन्तीशिरसि दंशनाय सज्जीकृतवान् आत्मानं, तावदेव कुतोऽपि प्रत्यागत्य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

किरात एको दैवानुकूल्येन भुजङ्गं शरगोचरीकृत्य प्रियसखी-मनुगृहीतवान्।

नलः—अहो प्रत्यागतजीवितोऽस्मि, ततस्ततः ?

विदू—ततश्च तेन किरातेन दमयन्तीललितलावण्यमुग्धेन पञ्चशर-शरवित्रस्तेन तथैव मुग्धं स्वसहचरं विरोधिनं लतापाशेन संयम्य क्रमेण समुपहृता प्रियसखी दमयन्ती, सापि तपस्विनी गत्यन्तरमनीक्षमाणा लब्धसंज्ञा प्रमुक्तकण्ठं परित्राणं याच-माना समन्ततः स्खलन्ती अपि न तेन परिहृता !

नलः—( सावेगं ) किं नाम मयि स्थिते ममैव धर्म्मपत्नीं दमयन्ती-माक्रामन्ति किराताः, कः कोऽत्र शीघ्रं मे सज्यं धनुरुपनय यावदेषोऽहम्—

विस्फारितोदरभयङ्करचापयन्त्र-
च्छिन्नेन भीषणशरेण किरातकीटम्।
सम्प्रेषयामि नरके कृमिलक्षपूर्णे
रे दुष्ट तिष्ठ पलकेन ददामि दण्डम्॥ [ गन्तुमीहते ]

दम—( नलं करे धृत्वा ) आर्य्यपुत्र, किमेवं मुग्धो भवसि, वृत्तं खलु एतत्, एषाहं समीप एव भ्रिये।

नलः—( दृष्ट्वा सलज्जं ) आं एवं ! मया पुनरतिमात्रविक्षेपात् वर्त्त-मानमिव तदवधृतम्। अहो मे वीर्य्यप्रकर्षः ! अहं हि—

दस्यौ गृहं दर्पवशात् प्रविश्य स्वशक्तिमुद्बोध्य धनानि हृत्वा।
निःशङ्कमात्मीयगृहं प्रपन्ने गृहस्थमत्रानुहरामि दृप्तम्॥

वयस्य, ततस्ततः ?

विदू—ततश्च प्रियसख्या दमयन्त्या भक्तिगृहीतेन भूतभावनेन समनु-प्रेषित इव पतिव्रताधर्म्मेण समादिष्ट इव मुक्तिनाथो नाम किरातराजः केनापि स्वानुचरेण निवेदितवृत्तान्तस्तत्र तदा-नीम् एव प्रतिगतो धर्म्मपुत्रीति सम्बोधनेन विदर्भनन्दिनीम् आश्वास्य दुष्टवृत्तयोः किरातयोः प्राणान्तकं दण्डमाज्ञापितवान्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# शिशिरविलासः

लेखकः—लक्ष्मीनारायणश्रीरामशर्म्मा

शिशिरं शिशिरेण समं समितः पवनेन शनैर्विततता वितता।
मिहिकाऽपि विना सुरतं जनता कृतकुञ्चितवेपथु सोत्कुरुते ॥१॥
चलितैरदनैरधरः खदितः शिशिरेण सदागतिना च हतः।
न रतिक्षतधा अजनि क्षतधाः चणभङ्गदने शिथिलः शिथिलः ॥२॥
सरसां समपादि जडं सलिलं हिमखण्डमयं पदचारजडम्।
जलयोगविधावजनिष्ट तथा विनखक्षतमङ्गमपि क्षतवत् ॥३॥
अधुना पथिकः पथि गन्तुमनाः शयनं परिहाय न धर्तुं मनाः।
अवनौ चरणं न च हातुमना वयसां विसरो निजनोड्गृहम् ॥४॥
शनकैः शनकैः समये समये विसरन्विसरन् पवनः (१) पवनः।
कलयन्नलिनो वनजे वनजे कुरुतेऽकुरुते सननंसननम् ॥५॥
न तु यामपि वीक्षितुमक्षमत द्युमणिस्तरुणीकरजालतले।
कुरुते निजगण्डतलं ननु सा तरुणस्य हि तस्य विभातवतः ॥६॥
अभितो रविमास्य वितत्य कचानुपधूपयते क्वचनेह वधूः।
उपलेपयते मृगनाभिमदं कुचयोः कुशला किल काचन च ॥७॥
इह कापि पुरः प्रणिधाय लसद्दशनच्छवि क्षौतहसां हसनीम्।
नवपाटलपाटलितांशुकिरौ चरणौ च करौ मृदु तापयते ॥८॥
अरघट्टचलैरतिशीकरिताऽनिलसञ्चलितैः कटकट्टकरैः।
रदनैरधरार्दनकृत्यचणे रसना (२) रसना निदरीद्रियते ॥९॥
अतिशीतभिया वसनाऽपिहिता न कुतोऽपि तनुर्विवरीव्रियते।
जड़राज्य इव स्वकृतिः कृतिना बहुदोषपरे प्रतिघातभयात् ॥१०॥
इह मन्मथिनां वनिताङ्गयुजां सुरतौ मनसां विकसद्वयसाम्।
युगयामवती ननु पुण्यवतां क्षणदा क्षणदा क्षणदा क्षणदा ॥११॥

१ पवनं पवित्रता यस्मिन्नित्यजन्तः। पवनकर्मवान् इत्यर्थः।

२ ल्युडन्तरसनशब्दाद्रसनं रसनक्रियाऽस्ति तस्या इत्यर्थेऽर्शं आद्यच्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मधवेऽरुणदीधितिदीधितिभिः पवनेन निरस्तहिमातिशयम् ।
तनुशीतगुणः सुखदायि निजं वपुरेष ऋतुः परिवर्तयते ॥१२॥
लक्षणं हि सुरभेः सहकारेष्वङ्गनाननमनोहरगन्धः ।
मत्तभृङ्गरमणस्थलमेकमिति मन्मथशरः प्रसवोऽत्र ॥१३॥
अपहास इव क्रियतेऽद्य विकस्य वसन्तऋतोः श्रिय उद्धतया ।
परिसार्य्य भुजानिव दीर्घदलान्युद्धतद्विजमुन्मुखशोभिकया ॥१४॥
रागिणां मदविवृद्धिकरीयं निस्त्रपेव युवतिर्विवृताङ्गी ।
दर्शितार्तवगुणा कुसुमेन तिष्ठते बत जनाय तमाली (३) ॥१५॥
अद्य कुन्दलतिकासु विकासश्चन्द्रकान्तविशदः प्रियवासः ।
प्रोषितान् स्मरयति प्रमदानां केलिकालकृतहासकलानाम् ॥१६॥

(सावशेषः)

---

## प्राची-प्रतीची-सम्बन्धः

( पूर्वतोऽनुवृत्तः )

लेखकः—श्रीव्रजेन्द्रकुमार आचार्य्यः काव्यतीर्थः वि. ए

५ । पण्यशिल्पादी—भारतवर्षः खलु निखिलमणिरत्नादीनां स्वर्णरजतादिधातूनां तथा "शानक्षौमाविका"दितन्तूनां प्रभव इति नास्ति कोऽपि विसंवादः। आर्य्याणां भारतप्रवेशात् परं धातवतान्तववाणिज्यस्य समधिकः प्रसारः सुदूरमपि यूरोपमहादेशं व्याप्तवान्। भारतीयाः शिल्पिनो वाहुल्येन नानाविधानि धातुतन्तुरत्नादीनि तन्मयानि च नयनमनोरञ्जनानि वस्त्राभरणादीनि तत्र प्रेरयामासुः। तेऽपि यूरोपीया वस्तुगौरवचकिताः शिल्पकौशलप्रमुग्धा वाणिज्यलालसया भारतागमनप्रयासमङ्गीकुर्व्वन्तो महान्तं

---

३ तमाखुः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


खलु प्राचीप्रतीचीसम्बन्धं विदधिरे। आर्य्यशास्त्रानुसारेण ब्रह्मचर्य्यानन्तरं द्वितीयाश्रमप्रविष्टानां त्रैवर्णिकानां यावज्जीवमग्निहोत्रानुष्ठाननियमे स्थिते समुद्रयात्रया दूरदेशपर्य्यटनेन वा व्रतभङ्गः स्यादिति कथमपि तेषां बणिग्वृत्त्या यूरोपप्रवेशो न श्रूयते। परन्तु यूरोपीया एव भारतमुपागत्य, पारस्योपसागरपर्य्यन्तं वा, क्रयादिकं चक्रिरे। केचन पुनरार्य्यधर्म्मपरित्यागेनैव ग्रीसादिदेशप्रस्थिता बाणिज्यादिकं चक्रुः। जारक्समद्वीपतिना समाक्रान्ते ग्रीसे एत एव भारतीया ग्रीसीयानां साहायकं विदधुरिति प्रागुक्तमेव। एतत्प्रमाणानि तु तात्कालिकभारतीयशास्त्रादौ यूरोपीयेतिवृत्तादौ च द्रष्टव्यानि, बाहुल्यभियात्र नोल्लिखितानि। बाणिज्यसम्बन्धस्तु ततः प्रक्रम्येदानीमप्यविच्छिन्नपरम्परया वर्त्तत एव।

६। भाषासु—एते खलु सम्बन्धाः पूर्व्वोक्ता गतप्रत्यागतन्यायेनाधुनिका एव। आजानिकोऽपि सम्बन्धोऽस्ति; स च भाषातत्त्वविज्ञानेन (Comparative Philosophy) सम्यक् प्राकाश्यं नीतः। तस्य सम्यगालोचना त्वत्र प्रबन्धे न सम्भवति, परन्तु भाषासु, प्राचीप्रतीच्योर्मूलसम्बन्धप्रदर्शनाय दिङ्मात्रं प्रदर्श्यते। तत्रार्य्यपितामहाः "एशिया"महादेशस्य मध्यभागमेवाध्यूषुरिति भाषातत्त्वविदां मतमिति पूर्व्वमेवोक्तम्। प्रजाबाहुल्येन तेषां देशाद्देशान्तरगमनमित्यपि प्रागेवोक्तम्। ते तु मूलवसतिं त्यक्त्वा द्विधाविभक्ताः प्राचीं प्रतीचीञ्च गतवन्तः। प्रतीचीशाखासन्ततयोऽधुना यूरोपादिदेशाधिवासिन्यः। प्राचीशाखा तु भूयोऽपि द्विधाविभक्ता एकया "इराण"देशमपरया च भारतवर्षं प्रविवेश। तेनार्य्यभाषायाः विभागोऽप्येवं सम्भवति,—(१) मूलभूता आर्य्यभाषा; तस्या द्वे सन्तती ~~(क) प्रतीच्या (ख) प्राच्या च। प्राच्यायाश्च द्वे सन्तती (१ख) इरस~~णीया (२ख) भारतीया च। पाश्चात्यायाः सन्ततयः पुनः सर्व्वेष्वेव यूरोपीयदेशेषु विस्तृतिं गताः। स च विभागस्त्रित्थं एवं प्रदर्श्यते,—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

मूलभूता आर्य्यभाषा

( Indo German or Indo-European )




एवं सति एतेषु विभागेष्ववश्यमेवाभ्यन्तरीणं सादृश्यं विद्येत, वस्तुतोऽपि तथेत्येव द्वित्रै रुदाहरणैः प्रदर्श्यते। यथा—मातृभाषायां ( मूलभाषायां ) सहोदरवाचिनः "भ्रातर्" शब्दस्य संस्कृत-ग्रीसीय-लाटीन-निम्नशार्म्मणे * लण्डीयभाषासु यथाक्रमं भ्रातृ-फ्रातेर् फ्रातेर्-ब्रोथार्-ब्रादार् इति रूपाणि खलूच्चारणभेदाद्भिन्नान्यपि वस्तुतो न भिन्नान्येव। तथैव "मातर्"-शब्दस्य संस्कृत-ग्रीसीय-लाटीनोच्चैः शार्म्मणे † लण्डीयभाषासु मातृ-मातेर् मातेर् मुत्रोतेर् मादार् इति रूपाणि। तथा संस्कृत "द्वि"शब्दस्य जेन्द् ‡-ग्रीसीय-लाटीन-निम्नशार्म्मणेलण्डीय-भाषासु द्व-दुओ-दुओ-त्वइ ट्ओ इत्येवं रूपाणि भवन्ति। अन्ये त्वेवंविधा बहवः सन्ति शब्दा येषामालोचनया स्फुटमेव सर्वेषामुदाहृतभाषाणां समानबीजप्ररोहत्वं प्रमीयते। अतो मूलतोऽपि प्राचीप्रतीच्योः सम्बन्धोऽस्त्येव।

स च सम्बन्धः ख्रीष्टपूर्वचतुर्थशताब्द्या अर्वाक् कालमहिम्ना विस्मृत एवासीत्। न च तत्स्मरणसद्भावे किञ्चन प्रमाणमद्यापि निर्णीतम्। प्राचीप्रतीचीपुनर्मिलनादारभ्य पुनः स सम्बन्धो बहुलायमानः सन्ततिधारयाद्यापि निर्बाधमेव वर्त्तते। अतोऽस्माभिः

* Law German of Gothic.
† Old High German.
‡ Iranic, Avestic.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सुतरामिव वक्तुं शक्यते जह्नूदरतिरोहिता जाह्नवीधारेव सागरसमीपविभक्तशतधारा सा प्राचीप्रतीचीसम्बन्धधारा शतधा विभक्ता निकटभाविनं विश्वसम्बन्धसागरमपेक्षत इति। पुनः प्रतिष्ठितसम्बन्धे त्विदानीं बहवः खलु यूरोपीयपण्डिता ज्ञानान्वेषणया भारतीयशास्त्रजातकृतपरिश्रमाः प्राच्यज्ञानमाहात्म्यमोहिता विशुद्धमिवानन्दमनुभवन्ति। तेषां मार्गप्रदर्शकरूपेण खीष्टीयाष्टादशशताब्द्याः पश्चिमभागादारभ्य कतिपये यूरोपीयविद्वांस आविर्बभूवुः। यद्यपि सप्तदशशताब्द्यामपि भट्टिकाव्यानुवादका ब्रह्मरोगार (Abraham Roger) प्रमुखैः खीष्टधर्मप्रचारकैर्भारतप्रवासिभिरार्य्यज्ञानसन्धानं लब्धकल्पमासीत्, तथापि तेन पाश्चात्यानां वस्तुतः कोऽप्युपकारो न सञ्जातः। यदा पुनर्भारतशासनसौकर्य्याय वारणहस्तिन्भिः (Warren Hastings) राजप्रतिनिधिभिर्भारतीयाचारव्यवहारादिज्ञानस्यावश्यकत्वमनुभूतमासीत् तदा तदाज्ञया पारस्यभाषामाध्यस्थ्येन तत्समयप्रचलितान् कतिपयधर्म्मसंहिताग्रन्थान् निबन्धांश्च पाश्चात्यभाषायां परिणमय्य भारतशासने तदुपयोगो विहितः। स च प्रथमभाषान्तरसमयः खीष्टीयः षट्सप्तत्युत्तरसप्तदशशततमो वर्षः (1776 A. D.)। एतत्प्रभृत्येव संस्कृतप्रभृतिषु भारतीयभाषासु पाश्चात्यविद्वन्मनसि ज्ञेयत्वेन महानाग्रहः सञ्जातः। तेन च यूरोपे तद्बहुलप्रचारार्थं वृकिन्-(Wilkins) प्रमुखाः कर्म्मिणः सुदृढसंकल्पाः स्वध्यवसायाः समुद्यता बभूवुः। एतेषाञ्च नामानि कर्म्माणि च वक्ष्यामः; परमयमेवास्माकं महानानन्दो यच्चिराय विजातीयशासननिष्पेषितानामपि भारतीयानामर्द्धविकसितभाषाप्रसूनसौरभविस्तृत्या बहुकालविभक्तसम्बन्धानां भूयोऽपि नैकट्यसम्पादनसाहायकं कर्त्तुमारब्धमिति। ( सावशेषः )

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# शिवसन्तोष-स्तोत्रम्

( पूर्वतोऽनुवृत्तम् )

लेखकः—कविराज-श्रीश्यामादासवाचस्पतिः

श्लिष्टो जगत्प्रणयने जड़वर्ग एष
हेतुः सुदुर्म्मतमिदं कलयन्ति केचित् ।
तन्मेलनं भव ! भवेन्न हि कर्त्तृहीनं
हे चेतनाखिलजड़ेषु चितिप्रदातः ! ॥३॥

जड़स्यापि वस्तुनिर्म्मितौ हेतुत्वदर्शनात् विश्वसृष्टावपि जड़स्य कर्त्तृत्वं न तु प्रत्यक्षागोचरस्य भगवत इति तस्य हेतुत्वमनङ्गीकुर्वतां स्तवनप्रयासवैयर्थ्यं मन्यमानानां नास्तिकानां मतनिरसनार्थमाह—श्लिष्ट इति। हे भव! प्रभवकारण ! विश्वोत्पादक इति यावत् । सम्बोधनेनानेन आरम्भवादरूपः न्यायवैशेषिकसिद्धान्तः प्रत्युक्तः । केचित् केचन जनाः, चार्वाका इत्यर्थः, न तु सर्वे इति भावः । एष परिदृश्यमानः, जड़वर्गः जड़ानाम् अनिलानलजलोर्वीणां, वर्गः समूहः, श्लिष्टः यथायथं मिलितः सन्, जगत्प्रणयने विश्वोत्पत्तौ, हेतुः, भवतीति शेषः, इदं सुदुर्म्मतं युक्तिहीनतया साधुजनविगर्हितं मतं, कलयन्ति प्रकटयन्ति, कल्पनयैव ख्यापयन्तीति भावः । हि यतः, तत् पूर्वोक्तम्, मेलनं जड़परमाण्वादीनां परस्परविचित्ररूपेण संयोजनं कर्त्तृहीनम् अनुकूलकृतिमद्रहितं, न भवेत्, कार्य्यस्य कर्त्तृजन्यत्वात् मेलनस्य च कार्य्यत्वात् अवश्यमेव कश्चित् कर्त्ता स्वीकरणीयः इति भावः । अत एव चरकाचार्य्यः—

"कृतं मृद्दण्डचक्रैश्च कुम्भकारादृते घटम् ।
कृतं मृत्तृणकाष्ठैश्च गृहकाराद्विना गृहम् ॥
यो वदेत् स वदेद्देहं सम्भूय कारणैः कृतम् ।
विना कर्त्तारमज्ञानाद् युक्त्यागमवहिष्कृतः" ॥ इति

अत्रायमभिप्रायः,—ईश्वरस्य प्रत्यक्षाविषयत्वेन तत्र प्रमाणाभाववादिनस्तु—अनादिकालादेव जगदुत्पद्यते, पृथिव्याः काठिन्यादिकम्, अपां द्रवत्वादिकं,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तेजस उष्णत्वादिकं, वायोः तिर्य्यग्गमनादिकम्, आत्मनश्च ज्ञानादिकं, यथा स्वाभाविकलक्षणमस्ति, तथा चैतन्यमपि मदशक्तिवद्भवति शरीरेण सह विनश्यति च, प्रत्येकं भूतानां चैतन्यास्वीकारेऽपि तेषां संयोगाच्चैतन्यमुद्भवति इत्याहुः। तथात्वे बाल्याद्यवस्थाभेदाद् बहूनि चेतनानि स्युः ज्ञातृभेदात् प्रतिसन्धानानुपपत्तिश्चेति तदपि हेयम्। अत एवोक्तं "संयोगे च वियोगे च तेषां कर्मैव कारणम्"। इति ( चरक सू० स्था० ११ अ० ) किञ्च ते नास्तिकशिरोमणयः—प्रत्यक्षादन्यदनुमानादिकं न प्रमाणम्, अर्थकामौ पुरुषार्थौ, चैतन्यविशिष्टदेहातिरिक्त आत्मा नास्ति, चत्वारि भूतानि, इत्यादिकं मतं समर्थयन्तः—

"अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः। चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते॥ किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्। अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः॥ न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः। नैव वर्णाश्रमादीनां क्रिया च फलदायिका॥ यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्। भस्मीभूतस्य देहस्य पुनरागमनं कुतः"॥

इत्यादिकं बृहस्पत्युक्तं प्रमाणयन्ति। तच्च प्रपितामहादीनामप्रत्यक्षतया तत्र प्रमाणाभावसम्भवादयौक्तिकमिति युक्तिहीनतयैव प्रेक्षावद्भिरुपेक्षितम्। ततश्च क्षितिः सकर्तृका कार्य्यत्वात् इति युक्त्या घटपटादीनामपि कर्त्तारमन्तरेणासम्भवात् अचेतनायां कारणत्वन्तु सचेतनघटितमिति न्यायादवश्यमेव तादृशः कर्त्ता स्वीकरणीयः। एवञ्च कार्य्यमात्रस्यैव कर्त्तृजन्यत्वनियमेन जगत्कार्य्यं प्रति प्रत्यक्षागोचरस्यापि ईश्वरस्य कारणत्वं सिद्धमेवेति दिक्। स्थूणानिखननन्यायेनापराऽपि विप्रतिपत्तिः प्रदर्श्यते चेतनादिविशेषणव्याजेन। हे चेतन!! नित्यज्ञानाश्रय! एतेन—अचेतनस्य जडवर्गस्य चेतनानुविधायित्वं विनिगमनाभावान्न स्वीकरणीयम् इति सूचितम्। तत्रायमभिप्रायः,—"कारणगुणा हि कार्य्यगुणमारभन्ते" इति न्यायात् हेतौ चेतनावत्त्वे कार्य्यस्यापि तत् सम्भवति। तत्र कार्य्यकारणभावं प्रतिपादयितुमाह—अखिलेति। अखिलजड़ेषु, आत्मसहितभूतवर्गेषु। चितिप्रदातः! चैतन्यविधायिन्! आत्मनामपि ज्ञानमुत्पाद्य सर्वाचेतनकारणानां त्वमेव चितिविधायीति भावः। त्वं प्रसीद इति पूर्वेणान्वयः॥२॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# चित्रपरिचयः

प्रकाशितेह पत्रिकायां नैयायिककुलधुरन्धराणां स्वर्गत-महामहोपाध्याय-राखालदासन्यायरत्नपादानां चित्रमूर्त्तिः। वङ्गेषु भट्टपल्लीत्यभिधाने पत्तने एकपञ्चाशदुत्तरसप्तदशशततमे शकवर्षे प्रसिद्धविद्याभिजनवतः सीतानाथ-विद्याभूषणाद्विमलादेव्यां लब्धजनी राखालदासो बाल्ये स्वग्राम एव वैया-करणवरिष्ठस्य जयरामन्यायभूषणस्यान्तेवासित्वमङ्गीचक्रे, ततः समधिगत-व्याकरणालङ्कारश्च नैयायिकप्रकाण्डात् भट्टपल्लीस्थ-यदुरामसार्वभौमतो न्याय-शास्त्रं निःशेषतः समाददे। विद्याग्रहणावसर एव स्फुरितोऽस्य लोकोत्तरः प्रतिभाराशिः। ततः पाण्डित्यप्रभया प्रकाशीकृतदिगन्तोऽसौ बहुकालं स्वदेशमेवाधिष्ठाय नानादिग्भ्यः समापतितान्—विद्यार्थिनिवहानध्यापयामास। स्वर्गत-महामहोपाध्याय-शिवचन्द्रसार्वभौमप्रमुखा बहवः समभवन्नस्य कृतिनश्छात्राः। अथ चतुःषष्ठितमवर्षे वयसि मुमुक्षुर्न्यायरत्नपादो वाराणसीं शरणमधिशिश्राय। तत्र च विद्याब्राह्मण्यतेजसा समाक्रान्तविद्वन्मण्डलः सुचिरं रविरिव प्रज्वलन् विश्वेश्वरचरणलग्नमानसो नश्वरं जीवनं परिजहौ। तत्कृतदार्शनिकनिबन्धेषु जीवतत्त्वनिरूपणम्, दीधितिकृन्नूतनतावादः, गदाधर-भ्रान्तिविलासः, तत्त्वसारं शक्तिवादरहस्यप्रकाशं अद्वैतवादखण्डनञ्च वयं नामतो जानीमः। तत्र द्वित्रा एव निबन्धाः मुद्रापयित्वा प्रकाशं गमिताः। तर्कविद्यायामतिनिपुणोऽसौ काव्यरसेऽप्यतिप्रसरबुद्धिः समवर्त्ततेति च रसरत्न-कवितावलीनामकग्रन्थाभ्यां सम्यग् विज्ञायत इति किमधिकेन।

---

# सन्देशः

**उपाधिलाभः**—विदितमस्तु पाठकानां यथा वर्त्तमानख्रीष्टवर्ष-प्रारम्भमहोत्सवे भारतराजराजैः श्रीमन्तः परिषत्सदस्याः फणिभूषणतर्क-वागीशपादाः महामहोपाध्यायपदेन सुसम्मानिताः। नैयायिकधुरन्धराणा-ममीषां बहोः कालात् प्रभृत्येव पाण्डित्यकीर्त्तिरुद्दीप्ता भारतवर्षे प्रचरति, गौतमसूत्रीय-वात्स्यायनभाष्यविवरणं तद्भाष्यस्वरूपव्यवस्थापननैपुण्यादिकञ्च सम्यक्तया तन्निदर्शनमुपलभ्यते। यदेतावान् समयः श्रीमतामेतदुपाधिमनुप-गच्छतामतीतस्तदेव नो विस्मयपदं वरीवर्त्ति। तदद्यापि तथा सम्मानपदेनामून् सम्भावयतो भारताधिपतेः सम्प्राप्तो गुणज्ञतायाः सत्यं परिचयः। आशास्महे श्रीमन्तो निरामयं स्वपाण्डित्यप्रतिभाप्रतिभासिताः सुदीर्घमायुः प्रतिपद्य भारतवर्षगौरवं संवर्द्धयेरन्निति।

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই

Digitized by Arya Samaj Foundation Chennai and eGangotri

# কে-শ-র-ঞ্জ-ন-তৈ-ল

এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে; কেশরঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ-গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি একটাকা, ডাকব্যয় সাত আনা।




স্নায়বিক দুর্ব্বলতার আশু প্রতিকারক

## সঞ্জীবন রসায়ন

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ

স্নায়বিক দুর্ব্বলতার জন্য যাঁহাদের উদ্যম, উৎসাহ-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে' অজীর্ণ অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে "সঞ্জীবন রসায়ন" অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহা দ্বারা বমন, উদ্গার, হিক্কা, আধ্মান (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবারিত হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য, ও স্নায়বিক দুর্ব্বলতা নিবারণ জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ৶০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজি শিক্ষা** পরিবর্দ্ধিত

শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভক্ত অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষেও ইহা একখানি নিত্য ব্যবহার্য্য গ্রন্থ। নাড়ীপরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি প্রস্তুত-বিধি, বিষচিকিৎসা, দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা এবং দ্বিতীয়খণ্ডে মহর্ষিদের গৌরবস্বরূপ—"সুশ্রুত-সংহিতা" এই সংস্করণে সন্নিবেশিত হইয়াছে। মূল্য ২৷৷০ টাকা। ডাকমাশুল ও প্যাকিং [illegible] আনা।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং লিমিটেড,

Digitized by Arya Samaj Foundation Chennai and eGangotri


# The Sanskrit Sahitya Parishad

A JOURNAL PUBLISHED IN SANSKRIT

**DEVOTED TO THE STUDY**

**OF**

## History, Literature & Philosophy

**OF**

## Ancient India

**Annual subscription........ Rs. 3. Foreign......7s.**

As the most popular and widely read Sanskrit Monthly this is the best medium for advertisement. Advertisements are published in all languages.

Monthly Rate of Advertisement :—

| | Full page | Half page |
|---|---|---|
| For one year | Rs. 6 | Rs. 3 |
| For one issue | „ 8 | „ 4 |

For further particulars apply to the Manager,

SANSKRIT SAHITYA PARISHAD,
Shambazar, Calcutta



प्रकाशको मुद्रापकश्च—श्रीदुर्गामोहनकाव्यसांख्यपुराणतीर्थं एम्. ए.
संस्कृतसाहित्यपरिषत्, श्यामबाजार, कलिकाता।
मुद्रणस्थानम्—सिद्धेश्वरप्रेस, २९ नन्दकुमारचौधुरीसेकेण्डलेन,
कलिकाता।


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



१८४७ शकीये माघे | Reg. No. C. 1073 | ८म वर्षस्य १०म संख्या

February, 1926 | Vol. VIII. No. 10

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्




सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सहसम्पादकः—श्रीदुर्गामोहनभट्टाचार्य्य एम्. ए.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

पण्डिताग्रणी-वैयाकरणशिरोमणि-
श्रीयुक्तहरलालस्मृतिरत्नमहोदयविरचितटीकयान्वितम्

# सारस्वत-व्याकरणम्।

वङ्ग-विहार-वाराणसी-पञ्चनदादिप्रदेशप्रवर्त्तितराजकीयसंस्कृतपरीक्षायाः पाठ्यरूपेण निर्दिष्टम्

बालानामाशुबोधकतया परमुपयुक्तेऽस्मिन् व्याकरणे विभिन्नप्रदेशप्रचलितपाठान्तराणां समन्वयेन प्रसादगुणालङ्कृता संयोजिता बालसरला नाम टीका। सरलसंस्कृतभाषया व्याख्या, पदसाधनम्, पारिभाषिकलक्षणनिर्म्माणादिकम्, विचारवितर्कादिना गूढ़सन्देहमीमांसा, असंख्यानां परिकल्पितपूर्वपक्षाणां विभिन्नदिशा प्रदर्शितान्युत्तराणि—इत्येवमादिकं व्याकरणाध्यायिनामपेक्षितं सर्वमेवात्र सन्निवेशितम्। सम्पादकस्य 'निवेदने' च व्याकरणविषयकं विविधगवेषणामयमालोचनं विद्यते।

मूल्यम्—पूर्व्वार्द्धम् ३) रूपकत्रयमात्रम्। उत्तरार्द्धम् ३) रूपकत्रयम्। ये तु पूर्वोत्तरार्द्धे एकदा ग्रहीष्यन्ति, तेषां कृते ५) रूपकपञ्चकमात्रम्।

प्राप्तिस्थानम्—श्रीकृष्णदासमिश्रव्याकरणतीर्थः
चटुला सारस्वतचतुष्पाठी, पोः मिरगोदा, मेदिनीपुर।
तथा—संस्कृतबुकडिपो, २८।१ कर्णओयालिसष्ट्रीट, कलिकाता।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषत्

( श्यामबाजार, कलिकाता )

(Registered under Act XXI of 1860)

समितिरियं संस्कृतभाषायास्तन्मूलकप्राकृतादीनाञ्च सम्यगालोचनया यथावत् प्रचारप्रतिपादनाय प्रतिष्ठापिता (१) प्रतिमासं सभाद्यनुष्ठानेन (२) मुद्रापितानां हस्तलिखितानाञ्च ग्रन्थराशीनां परिषद्ग्रन्थागारे नियतसञ्चयनेन (३) स्वकीये महाविद्यालये विद्यार्थिनामध्यापनेन (४) अमुद्रापितसंस्कृतग्रन्थानां प्रकाशनेन (५) अन्तरान्तरा रङ्गेषु संस्कृतरूपकाणां प्रयोगेण (६) यथानियमं मासिकपत्रिकाप्रचारेण विविधैरुपायान्तरैश्च स्वमुद्देश्यमनुकूलयति। सदस्या मूल्यं विनैव प्रतिमासं संस्कृतपत्रिकां लभेरन्, परिषत्प्रकाशिता ग्रन्थमालाश्च तेषां सुलभतराः स्युः, निखिलेष्वेव परिषत्कृत्येषु ते लब्धाधिकारा भवेयुः।

## संस्कृतसाहित्यपरिषत्पत्रिका

संस्कृतसाहित्यपरिषन्नाम तदभिधानायाः परिषदो मासिकी मुखपत्रिकेयमतिगभीरार्था दार्शनिकनिबन्धेषु परमकोमला काव्यचिन्तासु धर्म्योपचारा स्मृतिपुराणेतिहासादिषु सूक्ष्मतत्त्वावेदिका विज्ञानविभवेषु संस्कृतोन्नतिमूलप्रवृत्तिप्रचारपरा पारिपार्श्विकवृत्तेषु यथार्थगुणदोषविचारचतुरा ग्रन्थादिसमालोचनेषु गीर्वाणवाणीप्रणयिनामत्युपादेयतया वरीवर्त्ति।

अस्याः प्रतिखण्डमूल्यम् ।० चतुरानकम्, वार्षिकमूल्यम् ३) रूप्यकत्रयम्।

पत्रिकामूल्यादिकं परिषत्कार्य्याध्यक्षसविधे निबन्धादिकञ्च पत्रिकासम्पादकसविधे अधोलिखितसङ्केतानुसारेण प्रेषणीयम्।

'संस्कृतसाहित्यपरिषत्'

श्यामबाजार, कलिकाता।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




भारतवर्षस्य श्रेष्ठानाम् औषधालयानां चिकित्सालयानां च अन्यतम:

"आर्, सि, सेन एण्ड कों लिमिटेड्"

(यथाशास्त्रं निर्मितानि विशुद्धानि औषधानि सर्व्वदा लभ्यन्ते)

१ । **च्यवनप्राशस्य** प्रतिविंशतितोलकं मूल्यं रूप्यकद्वयं २) प्रेषणादिव्यय: ।≠० आणकषट्कम् ।

२ । **बृहच्चन्द्रोदयमकरध्वजस्य** सप्ताहार्थं मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्यय: ।≠० आनकपञ्चकम् ।

३ । **तुषारविन्दुतैलस्य** प्रतिदशतोलकम् मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्यय: ।≠० आनकषट्कम् ।

(सर्वेषाम् औषधानां मूल्यादिविषयक-विवरणपूर्णं पुस्तकं मूल्यं विनैव प्रेष्यते

**कविराज: राखालचन्द्रसेन: एल् एम् एस् ।**

**" श्रीसुधीरकुमार सेन:**

२५८ नं अपारचितपुररोड्, कलिकाता

———

सर्व्वत्र भारतवर्षे सुधीजनै: समादृतं,

कविराज-राखालचन्द्र-सेन एल्, एम्, एस्, कृतं

**कुन्तलकौमुदीतैलम्**

भवत्कुटुम्बमध्यवर्त्तिनीनां महिलानां केशप्रसाधनार्थं

विशुद्धोपादानजातं केशतैलमेतत् क्रीयताम् ।

भवत्-स्वदेशवासिना सुप्रसिद्धेन भिषजा निर्म्मितमेतत्

तैलम्, अतो भैषजगुणै: श्रेष्ठम् ।

(सर्वत्र गान्धिकानामापणेषु प्राप्तव्यम्)

**आर् सि सेन एण्ड कों लिमिटेड्**

२५८ अपारचितपुररोड्, कलिकाता


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

१८४७ शकीये माघे, ८म-वर्षस्य १०म-संख्या

## श्रीविश्वेश्वराष्टकम्

लेखकः—महामहोपाध्याय-श्रीप्रमथनाथतर्कभूषणः

असंख्यास्ते भक्ताः स्मरहर! समाधौ विकसिते
हृदब्जे पश्यन्तस्त्विदममलतनुं त्वां सुमतयः।
क्षमाः स्तोतुं नो चेदविषय सदा वाङ्मनसयो
स्तदा के विश्वात्मन्! वयमिह वराकाः हतधियः॥१॥
किमर्थं स्तौमि त्वां पितृवनचरं दिक्पटधरं
वितर्कोऽयं तर्कातिगविषयगः सद्भिरुदितः।
ध्रुवं काशीनाथागतिगतिकराचिन्त्यमहिमन्!
तवैतत् कारुण्यं यदियमधुना मे स्तुतिरतिः॥२॥
शिशुत्वं क्रीड़ाभिर्विगतमथ तारुण्यमखिलै-
रसद्वृत्तैर्योषिज्जनविषयोन्मादविषमैः।
जरेदानीं प्राप्ता जरयति शरीरेन्द्रियधियः
कृपासिन्धो शम्भो! कथय तव भृत्यः श्रयतु कम्॥३॥
नृलोके ये धन्या द्रविणविनयैश्वर्य्यमहिताः
कथं वा ते सेव्याः स्वयमकुशला ये स्वकुशले।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

जरा-शोक-व्याधि-प्रबलविषयाशा-हतधिय-
स्ततस्त्वामेवैकं शरणद ! गतोऽस्म्यद्य शरणम् ॥४॥
किमन्यैर्वा देवैः शतमखविरिञ्चिप्रभृतिभिः
सदा शङ्काग्रस्तैरधिकृतपदभ्रंशविषये ।
अये विश्वस्वामिन् जगदुदयरक्षाक्षयकर !
क्षमस्व व्यामोहं हर हर मतिं मेऽन्यविषयाम् ॥५॥
स्वभावः कालो वा प्रकृतिरथ मायाऽणुरथवा
जगत्सृष्टेर्मूलं रटतु बुधवृन्दं निजधिया ।
ममायं विश्वासः स्वजनभयभङ्गव्यसनिनो
तवैवेयं लीला लसति जगदीश ! प्रतिदिशम् ॥६॥
जगन्नाथानाथावन-शमनभीतिक्षतिकरीं
कृपादृष्टेर्वृष्टिं विसृज सृज भक्तिं मम हृदि ।
विना यां लोकेऽस्मिन् श्रवणमननध्यानविधयः
समस्ता व्यस्ता वा न खलु कुशला मोहदलने ॥७॥
प्रभो ! गौरीकान्त ! त्रिपुरहर ! विश्वेश्वर ! हर !
स्मरध्वंसिन् ! शीतद्युतिलसितभालासितगल !
अपारे संसारे चिरपतितमत्यन्तपतितं
प्रपन्नं मां दासं कुरु करुणया निर्भयमलम् ॥८॥

---

## मतिमञ्जरी

**वैदेशिकानां भारतीयविज्ञानप्रशस्तिः—**यदेव प्रकाश-मस्माभिरुच्यताम्, अद्यापि वस्तुनो वैदेशिकपण्डितकृतां प्रशस्तिमनु-पलभ्य न वयं प्रशस्तियाथार्थ्यमवधारयामः । अत एव संस्कृतविद्या-महिममुग्धानां केषाञ्चित् वैदेशिकविदुषां संस्कृतविद्यासम्बन्धि मतं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पाठकेषु उपहरामः। कतिपये दिवसाः किल मद्रदेशीय-मयलापुर-संस्कृतमहाविद्यालये 'भारताद् बहिः संस्कृतशिक्षे'ति विषयमधिकृत्य व्याख्यानमुपन्यस्तवतां ओलन्दाजाध्यापक-डिभान-एड्च्-ख्यावार्टनमहाभागानाम्। तैरेवं प्रतिपादितमास्ते यथा सम्प्रति यूरोपीयमनीषिणः भारतवर्षेण द्वारविशेषमाश्रित्य सम्बन्धमभिप्रयन्ति। यतो भारतीयसभ्यतैव मूलं यूरोपीयसभ्यताया इति सम्यगेव तैरधिगतमस्ति। भारतवर्षाद् यूरोपमुपगत्य नाना जातयः तत्र तत्र सभ्यतां विस्तारयामासुरित्यत्र संशयलेशोऽपि न पदं दधाति। यूरोपदेशः अन्तरा सेमेटिकसभ्यतया हिब्रुसभ्यतया वा अनुप्राणितोऽपि साम्प्रतम् आर्य्यसभ्यतामेवाभिलषति। ख्रीष्टधर्म्मप्रादुर्भावात् बहुपूर्व्वत एव एसिया-यूरोपप्रदेशेषु बहुत्रैव हिन्दुभावो बौद्धभावश्च प्रसृतौ समवर्त्तेतामिति बहुभिरेव प्रमाणैरुपपादितमेतैः। यूरोपीयदर्शनानां सर्व्वाण्येव मतानि प्रायेण हिन्दुदर्शनेषु समुपलभ्यन्ते। किञ्च बहुभिरेव भाषाभिरद्य संस्कृतग्रन्था अनूद्यन्ते। तदनुवादं द्वारीकृत्य भारतीयप्राचीनभावा यूरोपदेशमनुप्रविशन्ति। परन्तु अनुवादेषु गूढ़ं भावमपहाय भाषायामेव दृश्यते सविशेषाभिनिवेशः। ज्ञातव्ये किल मानवजातिविवर्त्तने यूरोपादर्शोन्नार्थनिर्व्वाहः परं भारतीयसभ्यतादर्शनादेव इति।

देशनायकपदाधिकृतेषु केषुचन स्वदेशीयमहाजनेष्वपि तथा तथा मतवादाः समुपलभ्यन्ते। किन्तु तेषां तत्र सुदृढ़ो निर्भर इति नो विश्वसितुमर्हामः। तथात्वे तेषां प्राचीनविद्याभिवृद्धये वा तदीयवैशिष्ट्यपरिरक्षणाय वा तत्समुज्जीवनाय वा यत्नो दृष्टः स्यात्। दूरे तावदास्तां तथा यत्नः केचिदेवमपि दरीदृश्यन्ते येषां प्राचीनसमृद्धिविनाशमेव प्रयत्नफलमद्यत्वे वयमनुभवाम इति।

**भारतीयशिक्षापद्धतेरनुवर्त्तनम्**—भारतीयशिक्षाप्रभृतीनां प्रशस्तिर्व्वा पुनरनुवर्त्तनप्रस्तावो वा बहुशो बहुत्रास्माभिरनु-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


श्रूयेते। परं तत्प्रस्तावफलं दृष्टान्तेनापि नोपगम्यते। किन्तु शुभमिदं वृत्तं यदस्मिन् संवत्सरे भारतीयमहासभायाः काञ्चिपुराधिवेशने आध्यक्ष्यमधिगत्य तदभिभाषणविवरणावसरे श्रीमतीभिः सरोजिनीनाइडूमहोदयाभिरेष विषयः सम्यगालोचित इति। तत्र प्रतिपादितं यथा—'यः खलु विषयः सर्व्वथा समपेक्षणीयोऽस्माकं तत्र शिक्षापद्धतौ स्वजातीयानामनुपेक्षणीयं माध्यस्थ्यमुपलभ्य सुतरामहं शङ्कितास्मि। वैदेशिकप्रभावेण बुद्धिः चिन्ताशक्तिश्चास्माकं परवशतया पराभवं प्रापिते, समुत्पादितश्च विरागो गौरवमयस्वीयविद्यापरिग्रहेषु। सम्प्रति वयमीदृशायाः कस्याश्चन शिक्षापद्धतेरधीनाः तदनुकरणमात्रं कुर्महे, या तावदस्मज्जातिगतभावविरोधिनी विनाशयति मानसीं शक्तिं, नितरामपाकरोति दूरदर्शितां, विघटयति च मौलिकतथ्याविष्कारसामर्थ्यपर्य्यायम्। सम्प्रति सन्ततिकल्याणसाधनाय तथा काचन शिक्षापद्धतिरपेक्षणीया या प्राच्यविद्यया समं प्रतीच्यनवजातीयदर्शनविज्ञानशिल्पसाहित्यादिनिहितप्रकृष्टवस्तुसम्बन्धेन साध्यमाना फलमत्युत्तमसुत्पादयितुमलं सम्पद्येत। यदि भारतीयमहासभा सत्यमेव निरुक्तं कृत्यमात्मना साधयेत्, तदैव तस्या अभीप्सितवस्तुलाभो निराबाधः स्या'दिति।

**धर्म्मस्य अन्यादृशी समुन्नतिश्च**—भारतीयराजनीतिमधिकृत्य चिन्तापरेषु बहव एव सनातनधर्मबन्धनं राजनीतिमूलकोन्नतेः परिपन्थि मन्यन्ते, किन्तु सिद्धान्तोऽयममूलक एवेति राजनीतिकप्रवराणां लालालाजपतरायमहाभागानां 'पिपुल्'पत्रिकानिबद्धनिबन्धसमुपहारेण वयं वेदयितुमिच्छामः। तदुक्तं तैः यथा—'विदिता मे बहवो राजनीतिज्ञा हिन्दुधर्मस्य विनाशसाधनमेव येषाम् असाधारणो भारतदुःखमोचनोपायः। ते तु केवलं हिन्दुधर्मं कतिपयनिर्दिष्टनियमानाम् अन्धपक्षपातस्य भ्रान्तसंस्कारस्य आचारभेदानां जातिभेदादीनाञ्च समष्टिमात्रं मन्यन्ते; ते प्रकाशमुद्घोषयन्ति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


यथा यावदस्य हिन्दुधर्म्मरक्षसो न प्रलयस्तावदाशापि वृथैव राजनैतिकजातीयस्वाधीनताया इति।

किन्तु तेषां सामाजिकपारिवारिकाचारव्यवहारादिषु समालोच्यमानेषु तावदिदमेव प्रतिपद्यते यथा—प्रकाशं यथा तथा वा ते वदन्तु, स्वेनाचारेण व्यवहारेण वा चिरन्तनहिन्दुसंस्कारानुवर्त्तनमेव तेषाम्। ते हिन्दुभिन्नेभ्यस्तु कन्यां न ददत्येव, परन्तु स्वजातीयात् स्वसाम्प्रदायिकाद्वा भिन्नभ्योऽपि कन्याप्रदानम् नानुमोदन्ते। कर्म्मविशेषप्रार्थनाद्यवसरे सौकर्य्यसम्पादनाय स्वीयं हिन्दुत्वं सडिण्डिमघोषमुद्घोषयन्ते च। प्रतिवादमन्तरेण नोपलक्ष्यते तेषामनुष्ठानतो हिन्दुत्वव्यतिरेकः। नहि तेषां निन्दा प्रशंसा वा मदीयवचनबीजं, केवलं तेषामिच्छाया मूलानुसन्धानमेव। नहि हिन्दुधर्म्मस्य विध्वंसो वा अविध्वंसो वा तेषामधीनः। बौद्धेस्लामखृष्टीयशिखब्राह्मार्य्यधर्म्माः सर्व्वे एव कदाचन कदाचन हिन्दुधर्म्मविनाशने बद्धपरिकरा अभूवन्। तथापि स राक्षसो न केवलमद्य यावत् सजीवः सतेजा अपि वर्त्तते। अयमेव बौद्धधर्मं भारताद् बहिः प्राव्राजयत्, इस्लामधर्मं परिवर्त्त्य स्वमते प्रतिष्ठापयामास, ख्रीष्टधर्मं वशीचकार। ब्राह्मार्य्यधर्मौ हिन्दुधर्मपादपस्य शाखाभूततया स्वीयावेव। सहस्रविघ्नसमापतनेन अद्यापि हिन्तुधर्मः तदीयचिरन्तनगौरवेण गरीयानेव। बाधया तस्य मर्य्यादा वृद्धिमाप्ता, साधका बहुलीभूताः, न कुत्रापि तदीयं लाघवमजायत।

नवाविष्कृत आमेरिकामहादेशः साम्प्रतमस्य गौरवेण मोहितः श्रद्धाञ्जलिमस्य बध्नाति। पाश्चात्त्येषु ख्रीष्टधर्ममन्तरेण न कोऽपि धर्मस्तथा समादरं लभते।

इदमेकं महद् वैषम्यं यत् सर्व्वस्ववतोऽप्यस्य आकिञ्चनत्वं, सरलस्यापि कुटिलत्वं, नितरामुदारस्यापि सङ्कीर्णत्वम्। अद्य यावत् न केनाप्ययमायत्तीकृतः, न वा केनापि पराभूतः। सर्वेषामेव मूलतः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

स्थितिस्थापकतास्य संलक्ष्यते। विवेकानन्दो वा रवीन्द्रनाथो वा महात्मा गान्धिर्वा अरविन्दो वा पियासेन् वा पल रिचार्ड् वा सर्वं एव एकेन वचसा स्वीकृतवन्तः यथा पाश्चात्त्यानां कृते नवीनवार्त्तानेन समाहृता, महदेकमुद्देश्यमत्र निहितञ्चेति। नास्य विनाशः कस्यापि शक्तिसाध्यः। ये तावदस्य निधनं कामयन्ते, ते न जानन्ति यथा किमिदमाशास्यत इति। यदि हिन्दुधर्मस्य नष्टावशेषे भारतस्य स्वाधीनताभित्तिस्थापनमन्तरेण गत्यन्तरं नास्ते, तदा भारतं कदापि न स्वाधीनं भवेदिति निश्चितमेव। येन महाशक्तिना बौद्धेस्लाम-खृष्टधर्मावलम्बिनः स्वधर्मप्रचारे दुर्द्दमोत्साहशक्तिसम्पन्ना अपि पराभूताः, तत्र निरुद्यमाः शक्तिहीनाः राजनीतिज्ञहिन्दुधर्मावलम्बिनः पराजयमन्तरेण किं वा आशासताम्।.........

राजनैतिकं हिन्दुं पृच्छामः यथा हिन्दुधर्मविनाशपदेन ते कमर्थं प्रतिपादयितुमिच्छन्ति। राजनीतिगोचरधर्मभेदापसारणमेव किमेषामुद्देश्यम्। तथात्वे तैः साकमस्माकमैकमत्यम्। किन्तु धर्मान्तरावलम्बिनः तत्र ऐकमत्यम् अवलम्बितुमकामा अपि भवेयुः। अतः हिन्दुधर्मापसारणेन अपरो धर्मः शक्तिसम्पन्नः कृतः स्यात्। वयन्तु मन्यामहे नेदमपि तेषामभिप्रेतमिति, यदि तथा स्यात्, तदायं कुसंस्कार एव नान्यत्!

यथा तथा वास्तु तेषामिदमवगन्तव्यं यत् हिन्दुधर्मः कथमपि नात्मनो ध्वंसं प्रसहेत। यदि तेभ्यो नाभिरोचते हिन्दुधर्मस्तदा ते धर्मान्तरमवलम्बितुं क्षमन्ते। किन्तु तेषामेतन्मनोरथमपि न वयं प्रतीमः। वस्तुतस्तु तेषामभिलषितं स्वयं त एव न जानन्ति। केवलमेकया वृथा धारणया विवेकबुद्धिरेषामन्धीकृतास्ते। सर्व्वतः खलु तदेव समीचीनं स्यात्, यदि ते स्वां धारणासन्ततिं दूरीकृत्य तथा प्रयतेरन् यथा हिन्दुधर्मः समुन्नतश्च शक्तिसम्पन्नश्च भवेत्। हिन्दुधर्मः सम्प्रति केवलं सामाजिकताया बन्धनमात्र, बन्धनमिदं यथा सुदृढ़तरं स्यात्,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तथा प्रयतितव्यम्। अस्ति तावदस्माकं धर्मे तथा किमपि किमपि वस्तु, यत् मानवीयबुद्धिकल्पनायाश्चरमविकाशेनैव सम्भवितुमर्हति, तत् सर्वं परिहाय अध्रुवस्यानुसरणं न किं मूढ़जनोचितम् इति।

लाला-लाजपतरायमहाभागानामिमं सिद्धान्तं सर्वथा वयमनुमोदामहे। तथा अत्र धर्मसम्बन्धमपहाय राजनीतिकोन्नतिकामिनां साभिनिवेशदृष्टिमभ्यर्थयामहे।

---

## धर्म्म-कर्म्म

लेखकः—श्रीयोगेन्द्रनाथसांख्यस्मृतितीर्थः

धर्मप्रवणे कर्मप्रवीणे भारतभुवनेऽस्मिन् ये तावन्तो महाजना जन्मान्तरीणागण्यपुण्यारुणकिरणानां प्रभावातिशय्येन दुर्लभजनुं मनुजजनुमधिचक्रुः। येषाञ्च पूर्वपुरुषाणामाचार्य्यवर्य्याणाम् अतुलकीर्त्तिकलापविमण्डितधर्मकर्मकलापटलं ज्ञानगवेषणापूर्णानन्तधर्मशास्त्रसुधाकरोज्ज्वलमद्यापि दुर्दशान्धतमसाच्छन्नेऽपि दिने शतशताब्दीय-प्रवलविप्लवघनवात्याः समतीत्य, समाकृष्य च पृथिव्या वर्त्तमान-सभ्यजातीयानां विस्मयविस्फारितनयनानि, वितनुते हिमाद्रिस्थिरतमं सनातनतनुत्वं लोकसमाजे विराजमानम्। भारतगौरवरविभारतीकवीनां खलु तेषां वंशावतंसायमानानामिदानीन्तनानां विद्यामण्डितपण्डितानां कीर्त्तिस्तम्भन दण्डायमानस्य सभामण्डपस्यैकांशे दण्डायमानोऽहमल्पशक्तिस्तादृशधर्म्मकर्म्मविषये किं वक्तुमर्हामि ? मन्ये च तत्र न किमपि नूतनत्वमभिधातुं शक्नोमि, परन्तु भ्रमप्रमादेन कृतास्पदं हास्यास्पदमेकमभिनवं नूतनत्वमेव प्रकटयामि। तथापि सहृदयानां महोदयानां तत्रभवतां भवतां विद्वद्-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


न्द्रानां तूषमिव सूर्पाणां दोषमपहाय गुणग्रहणे समाग्रहवतामवगत्य समुदारतां तद्गुणैः कर्णमागत्य चापलाय प्रणोदितः किञ्चिद् वक्तुमुपक्रमे। विद्वन्तोऽत्रभवन्तस्तत्र प्रमाणम्।

वक्तव्यञ्चात्र मेऽकिञ्चनस्य किञ्चन धर्म्मकर्म्मेति। कर्म्मेत्युक्ते यत् क्रियते (ग्राह्यत्वेनाग्राह्यत्वेन वा बुद्धिविषयीक्रियते) तत् कर्म्मेति व्याकरणशासनानुगतं सहजतो यद् बुद्धिविषयीभवति तदेव भवतु, न तु केनापि विशेषलक्षणेनाक्रान्तं न्यायतर्काद्यनुगतं साधारणबुद्धेरविषयीभूतम् असार्वजनीनम्। एवं सति "अहरहः सन्ध्यामुपासीत", "स्वाध्यायोऽध्येतव्यः", "स्वाध्यायस्तु ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥ एतानि विधिदिष्टानि नित्यान्याहुर्मनीषिणः। श्रुतिस्मृत्युदितं कर्म्म करणीयं प्रयत्नतः॥" इति श्रुतिस्मृतिभिरहरहर्विधेयतया प्रतिपादितानि सन्ध्यावन्दनादीनि नित्यकर्माणि, पापक्षयमात्रसाधनतया नैमित्तिकत्वेन कीर्त्तितानि प्रायश्चित्तव्रतादीनि नैमित्तिककर्माणि, 'स्वर्गकामो यजेत', "कृत्वैवं परमामापुर्निर्वृतिं त्रिदिवौकसः। एवमन्यैरपि सदा देव्याः कार्य्यं प्रपूजनम्॥ विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायिनीम्॥" इत्यादिश्रुतिस्मृत्यादिभिः काम्यतया समुल्लिखितानि यागादीनि काम्यकर्म्माणि च सर्व्वाणि संगृहीतानि भवन्ति। परन्तु "ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥ यो ब्राह्मणायावगुरेत् तं शतेन यातयेत्॥" इत्यादिशास्त्रैरनर्थहेतुतयाऽविधेयत्वेन कीर्त्तितं ब्रह्महत्यादिकमपि अग्राह्यत्वेन ज्ञानविषयीकरणोपदेशात् (पाप)कर्म्मशब्दग्राह्यं भवति।

तेन कर्म्म विधेयाविधेयतया द्विविधम्। ब्रह्महत्यादेः पापकर्म्मणः कार्य्यत्वासम्भवेऽपि तत्र ग्राह्यत्वाभावबुद्धिकरणसम्भवात् न लक्ष्यत्वासङ्गतिः। विधेयन्तु कर्म्म नित्यनैमित्तिककाम्यतया त्रिविधमिति स्फुटम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अनन्तशास्त्रप्रतिपादितमर्म्मण: कर्म्मण: क्षुद्रतमेऽस्मिन् प्रबन्धे विस्तरत: स्वरूपप्रकाशनं दुर्घटं स्वल्पधियो मे शक्तेरसाध्यमपीति निरस्तम्।

तत्कर्म्म सर्व्वैरेवाश्रमिभिरवश्यमनुष्ठेयं मोक्षोपयोगित्वादिति शास्त्रोपदेश:।

उपरिष्टादयमाशय: कथञ्चित् प्रकाशयितुं यत्यते, यथा—दृश्यते हि आध्यात्मिकादित्रिविधदु:खज्वालामालयाऽहरहरन्तर्दंदह्यमाना मानवा: सततं नितरां दु:खक्षयमेव वाञ्छन्ति अनिष्टञ्च परिजिहीर्षवो भवन्ति। स्वहृदयेन तदनुभूय त्रिकालज्ञा: सूक्ष्मदर्शिन: सहृदया: कपिलादयो मन्वादयश्च महर्षयस्तेषां तत्तद्दु:खनिवृत्तिकामनया इष्टानिष्टं निर्णीय तद्दु:खापायोपायजातमपि निर्णीतवन्त:। चित्तवृत्तेर्विभिन्नतया नानाविधमपि उपायजातं परार्थत्वात् यथार्थमिति मन्तव्यम्। तथाच महाजनोक्ति:—रुचीनां वैचित्र्याहृजुकुटिलनानापथजुषां, नृणामेको गम्यस्त्वमसि पयसामर्णव इव। इति

लोकेऽस्मिन्नपि दृश्यते गन्तव्यस्थानाधिगमे केऽपि वाष्पीयरथयानं सुष्ठु मन्यन्ते, केऽपि वा जलपोतमार्गं साधुतया स्वीकुर्व्वन्ति, अन्ये चाऽश्वयानं सुगमतयाऽधिकुर्व्वन्ति, परे च पद्भिर्गमनमिष्टार्थतयाऽभिमन्यन्ते। यैर्यदभिमन्यते मन्यतां गन्तव्यस्थानलाभस्तु सर्व्वेषामपि भवेत् इति। तथा नानामुनिप्रदर्शितेषु सत्सु कर्म्मसु सदाचारानुमतं लोकधर्म्माविद्विष्टं यदात्मन: प्रियतया मन:पूतत्वेन निर्णीतं तदेव उपासितव्यं जनै: हंसैर्यथा क्षीरमिवाम्बुमिश्रम्। तथाच—'श्रुति: स्मृति: सदाचार: स्वस्य च प्रियमात्मन:'। 'मन: पूतं समाचरेत्'। 'अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु।' इति। तत्र च सन्देहे निर्णायकं महाजनवाक्यं यथा—'महाजनो येन गत: स पन्था:।' 'येनास्य पितरो याता येन याता: पितामहा:। तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति॥' 'यद्यदाचरति श्रेष्ठस्तत्त-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

 Digitized by Arya Samaj Foundation Chennai and eGangotri 

देवेतरो जनः। स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते॥' 'येषु स्थानेषु यच्छौचं धर्म्माचारश्च यादृशः। तत्र तं नावमन्येत धर्म्मस्तत्रैव तादृशः॥' 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥' इत्यादि।

एतावता चेदं प्रतिपन्नमुपपद्यते—संसारेऽस्मिन् जीवा हि नितरां मायया समुपहिताः सदा त्रिविधदुःखतापेन दंदह्यमाना अपि तन्निराकरणकारणं निर्णेतुमसमर्थाः स्वेषामहितमपि हितत्वेन हितमप्यहितत्वेन मन्यमानाः किंकर्त्तव्यविमूढ़ा इतस्ततो विचरन्तोऽशेषक्लेशराशिमिव भुञ्जते। दयालवो महर्षयः परार्थं स्वार्थं मन्वानाः किं दुःखं किञ्च दुःखनिदानं को वा तन्निराकरणोपाय इत्यादिविषयं सम्यग्विचार्य्य निर्णीतवन्तः सन्तः संसारिणां लोकानां दैनन्दिनकृत्यमपि सर्व्वाभीष्टस्य ऐकान्तिकदुःखनिवृत्तिरूपपरमार्थस्य मोक्षस्य परम्परया निदानमाचक्षते। सुतरां महर्षिप्रदिष्टमेतत् प्रात्यहिककार्य्यजातं मुमुक्षूणामपि जीवानामेकान्तं करणीयमिति।

नन्वेवं कर्म्मपरम्परया कथमैकान्तिकदुःखोच्छेदः सम्भवति कर्म्मणां दुःखजनकत्वात् अदृष्टजननद्वारा चानन्तजन्मग्राहकत्वात् जन्मसत्तायाञ्च एकान्तदुःखनिरासासम्भवादिति वाच्यं सकामकर्म्मपरम्पराभिरपि नैष्कर्म्म्यजननद्वारा कर्म्मिणामैकान्तिकदुःखनिवृत्तेः सम्भवात्। तथाहि भगवान् श्रीकृष्णः प्रथममर्जुनाय कर्म्म कर्त्तुमुपदिशति। क्रियमाणे च कर्म्मणि नैष्कर्म्म्यं स्वत एवायातीति यदुक्तं तेन—'कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन'। 'कर्म्मणै व हि संसिद्धिमास्थिता जनकादयः'॥ 'शरीरयात्रापि च ते न प्रसिध्येदकर्म्मणः'। 'न कर्म्मणामनारम्भात् नैष्कर्म्म्यं पुरुषोऽश्नुते॥ न च सन्न्यसनादेव सिद्धिं समधिगच्छति॥" इत्यादि।

न चात्र कर्मणो निन्दाकथनं कथं सङ्गच्छते मोक्षोपयोगित्वेन तस्यावश्यकत्वात्, कर्मणो निन्दा च भगवतापि गीतायामुक्ता—"दूरेण

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ह्यवरं कर्म बुद्धियोगाद्धनञ्जय" । "ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ॥ सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ॥" इत्यादिना। अन्यत्रापि "प्रसजंस्त्विन्द्रियार्थेषु नरः पतनमृच्छति।" इति। परन्तु तत्त्वज्ञानस्यैव सर्व्वथा मोक्षसाधनत्वमिति शास्त्रेषु शतशः प्रतिपादयति, तद् यथा—"बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः"। 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते॥ बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते॥" "नान्यः पन्था विद्यतेऽयनाय"। इत्यादि। सत्यं भागवतार्थातिरिक्तस्यैव कर्मणः संसारबन्धजनकत्वं, न तु कर्ममात्रस्य, शास्त्रेषु च भगवद्भावानुप्राणितः सन्नेव कर्म कुर्य्यादित्युपदिशति। भगवति सर्वकर्मसमर्पणेन तस्य सार्थकतां प्रतिपादयति; तथा च गीतायामुक्तं—"यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः। तदर्थं कर्म कौन्तेय! मुक्तसङ्गः समाचर॥ यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत् तपस्यसि कौन्तेय! तत् कुरुष्व मदर्पणम्॥" इत्यादि। 'यज्ञार्थं' इत्यत्र 'यज्ञ' शब्देन भगवानुच्यते, टीकाकृद्भिस्तथा व्याख्यानात्। तेन 'कर्त्ताहं'मिति मन्यमानो यत् कर्म कुर्य्यात्तेन कर्मणा संसारबन्ध इत्यापद्यते। 'अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते।' इति भगवद्वाक्यात् तथा प्रतीतेः। शब्दादिषु संसारविषयेषु अत्यन्तासक्तिरेव दुःखकारणम्। अनासक्तेन सता कर्मणि कृते ततः नैष्कर्म्यमापद्यते। तथा चोक्तम्—'असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः।' इति। तत्र दृष्टान्तस्तावत् महात्मा ध्रुवः। तस्य महात्मनो वाक्येनैव एतत् स्फुटीभवति नाधिकं प्रलपितुमिच्छामि। तद्वाक्यं यथा—"राज्याभिलाषी तपसि स्थितोऽहं त्वां प्राप्तवान् देव! मुनीन्द्रगुह्यम्। काचं विचिन्वन्निव दिव्यरत्नं स्वामिन्! कृतार्थोऽस्मि वरं न याचे॥" मार्कण्डेयपुराणोक्तः समाधिनामा वैश्योऽपि अत्र निदर्शनं भवितुमर्हति। स खलु महाभाग आदौ पुत्रदारैः निरस्तोऽपि धनलोभादसाधुभिः, तत्प्रेमप्रवणात्मा च विगुणेष्वपि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


बन्धुषु। ततो मेधसमुनेरुपदेशेन मृण्मयीं दुर्गादेवीं सम्पूज्य निर्विसः ज्ञानं प्रार्थयन् तल्लाभेन परमपुरुषार्थमवाप। इति।

नित्यकर्मसन्ध्यावन्दनादितः यज्ञदानादिकाम्यकर्मपर्य्यन्तं सर्वमपि कार्य्यजातम् अवश्यकरणीयं न त्याज्यमिति भगवान् स्वयमेवाह स्म, यथा—"यज्ञो दानं तपः कर्म न त्याज्यं कार्य्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः। कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः॥"

न च नित्यकर्मसन्ध्यावन्दनादेरदृष्टाजननात्, प्रायश्चित्तव्रतादेश्च पापक्षयमात्रसाधनत्वश्रुतेः स्वर्गादेरजनकत्वान्न कर्त्तव्यत्वमिति वाच्यं —चित्तशुद्धिजननद्वारा सन्ध्यावन्दनादेरपि ब्रह्मलोकावाप्तेः, अकरणे प्रत्यवायजननात्, पञ्चशूनाजनिताज्ञानजपापनाशकत्वाच्च। तथाचोक्तम्—"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। सन्ध्यामुपासते ये तु नियतं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥" इत्यादि। प्रायश्चित्तव्रतादेश्च स्वर्गाजनकत्वेऽपि दुःखजनकपापनिवारकतया पापिनामवश्यानुष्ठेयत्वान्नानुष्ठानवैफल्यमिति।

किमधिकं लपामि भो भ्रातरः! कर्मभूमौ भारतभूमौ कर्म कर्त्तुमेव भगवता प्रेरिता वयम्। सत्कर्मानुष्ठानार्थमेव हस्तपदादिकं कर्मेन्द्रियं सदसद्विचारयितुं ज्ञानेन्द्रियं चक्षुरादिकं प्रददौ नः। अतस्तत्प्रदत्तवस्तुनः सद्व्यवहारं विधाय तस्मिन्ननृणा भवामः। सर्वदा कर्म्म सदनुतिष्ठ। एवं चिन्तयामो वयं—"प्रातरारभ्य सायाह्नं सायाह्नात् प्रातरन्ततः। यत्करोमि जगन्नाथ तदेव तव पूजनम्॥ जानामि धर्म्मं न च मे प्रवृत्तिः जानाम्यधर्म्मं न च मे निवृत्तिः। त्वया हृषीकेश! हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥ आवाहनं न जानामि नैव जानामि पूजनम्। विसर्जनं न जानामि क्षमस्व

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


परमेश्वर ॥ त्वयि मे चापराधस्य त्वमेव शरणं प्रभो। भूमौ स्खलित-पादानां भूमिरेवावलम्बनम् ॥" इति शम्।

---

## शिशिरविलासः

( पूर्वतोऽनुवृत्तः )

लेखकः—लक्ष्मीनारायण-श्रीरामशर्म्मा

सर्षपः कुसुमितो मधुपानां बोधयन्निव वसन्तलतानाम्।
पीतिमानमुपलेपयतीव चेतभूषु मधुरङ्गमहीषु ॥१७॥
निलिम्पकाश्मीरजसङ्गिचन्दनाङ्गनापयोदानुकृतिं दधत्यमी।
न नागरङ्गा न हरन्ति मानसं सुगन्धयो लोचनपद्धतिं गताः ॥१८॥
अस्मिन् स्वभावाच्चपलेक्षणाभ्यः कटाक्षनिक्षेपमिवैकविद्याम्।
आसाद्य यातीव समाप्तशिक्षः खं खञ्जनः शिक्षयितुं सुरस्त्रीः ॥१९॥

नन्वेष वेगसरणेन वसन्तराज-
मागामिनं किल समीक्ष्य लताश्रशालाः।
नव्या भवन्त्विति पुराणदलानि तेभ्यो
विश्लेषयत्यलघु नृत्यमिषेण वायुः ॥२०॥

मण्डलानि दधता ननु भूयस्ताण्डवस्य सरणिः पवनेन।
स्वीकृतोद्धतविधूनितधूलिशीर्णपर्णनिचयस्तनमूर्च्छम् ॥२१॥
शाखिनश्चपललम्बितशाखा व्याहतातिशयितध्वनिपूरम्।
मुक्तकीर्णसुमनः खगमालाविस्मृतस्खलितपर्णविभूषाः ॥२२॥
वेणवो ललितसन्ततनादैर्झर्झरध्वनिभिरुत्तमतालाः।
उत्तरङ्गहतिभिः कृततालं साह्यमस्य रचयन्ति नु नद्यः ॥२३॥

सम्पक्वान् दृढ़कणभूरिभारभुग्ना
नापाकश्रियमुपलम्भयन् समूहान्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सस्यानां प्रवितत-रंहसा प्रवातो
गृह्णीते परकृतिदत्तचित्तकीर्तिम् ॥२४॥
अश्वत्थो विगलितपर्णनग्नपिण्डः
शाखाभिः क्वचन च कम्पितैकपर्णः।
निःशेषं कठिनतपोव्यपेतरागः
सञ्जातः कपिलकचो यथा तपस्वी ॥२५॥
यद्वै ते सकलमहीरुहा लताभिर्वायूाशाः कठिनतरं तपश्चरन्तः।
विध्वस्ताभरणशरीरसाधनाद्यमाराधां दधति मधोऋर्तूत्तमस्य ॥२६॥
शय्यात्वं च्युतदलसञ्चयैः पशूनां
गोमृभ्यो धरणिरुहां तले स्थितेभ्यः।
आधारि ह्यपरहितार्थमङ्गभाजो
विभ्रंशेऽपि निजकृतिं नहि त्यजन्ति ॥२७॥
विभ्रष्टा दलनिचयाः पुनस्तरूणा-
मप्युच्चैर्मुहुरनिलेन नीयमानाः।
न स्थानं कथमपि तेऽधिगन्तुमर्हा-
विभ्रष्टस्य निजपदादियं दशा हि ॥२८॥
निःशेषं व्यपगतपक्वपीतपर्णा नूत्नाना दधति पलाशिनोऽङ्कुरांश्च।
उद्भेदान्तुसमये यथा हि रामा उल्लासार्थमिव समिद्धयौवनस्य ॥२९॥
भूयोभिर्लसतितरां समुत्सवाद्यैरानन्दप्रद ऋतुरेष देहभाजाम्।
प्राचीनं समवनयन्नवीनलक्ष्मीमात्तागूः सुरभिकृते तदीयबन्धुः ॥३०॥
कृत्वासौ भविलविभूतिसम्मुखीनान्
भूङ्तानवनिधरानशेषलोकान्।
प्रत्येतुं निहितमतिः समाप्तकृत्यो
भूयो नः शिशिरऋतुः शिवाय भूयात् ॥३१॥
अलिविहितविरावैर्जालकैर्भूरुहेषु
सुरभिदलमुपेतं वीच्य भूयो दलद्भिः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


इति विविधविलासैरानुगैन प्रयातः
शिशिरऋतुरुदारो भूतये वो विभूयात् ॥३२॥

---

## दूतकाव्यम् *

लेखकः—श्रीचिन्ताहरणकाव्यतीर्थः एम्-ए

महाकाव्यं, खण्डकाव्यं, चम्पूकाव्यञ्चेत्यादीनि बहुविधान्येव काव्यानि समलङ्कुर्वन्ति विराजन्ते सुरसरस्वतीकण्ठम्। तत्र च स्वल्पायतने खण्डकाव्ये पञ्चकानि, अष्टकानि, दशकानि, शतकानि, दूतकाव्यानि चान्तर्भवन्ति, स्वल्पावयवान्यपि यानि वस्तूनि प्रायेण निखिलान्येव कवित्वप्रतिभया रसालङ्कारान्तर्भूततया भावगाम्भीर्य्येण च स्वत एव सामाजिकानां चित्तचमत्कृतिमुपपादयन्ति सततम्। एतानि च Ode, elgegy प्रभृतिपाश्चात्यकाव्यसदृशवस्तूनां सुरभारत्यामनुमीयमानादभावादुद्घोष्यमाणं परीवादं कथञ्चित् दूरीकर्त्तुमलम्भवन्तीति मन्यामहे। एषु पुनर्दयितानां सविधे दूतप्रेषणमधिकृत्य प्रवृत्तानि दूतकाव्यानीति सम्भाव्यमानाभिधानानि मनोहरमनोहराणि वस्तुजातान्यधिकृत्यैवात्राद्य समासतः किञ्चिदालोचयितुमभिलषामः।

बहून्येव दूतकाव्यानीदानीमपि समुपलभ्यन्ते संस्कृतसाहित्ये सकलानि विकलानि वा। तेषु च यानि सौभाग्यतो मे दृष्टिगोचरतामुपगतानि येषां चोपलम्भवृत्तान्तो मयाऽऽकर्णितो वाचितो वा तेषाम् विवरणाभिधानान्यादौ अधस्तात् प्रकटयामः।

१। **मेघदूतम्**—कालिदासप्रणीतम् इदमेव प्रसिद्धं वस्तु संस्कृतसाहित्ये दूतकाव्येषु प्रधानतमं स्थानमधिकुर्वत् विराजते।

---

* परिषदी मासिकाधिवेशने पठितोऽयं निबन्धः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

अत्र शापग्रस्तेन यक्षेण प्रियासमीपे मेघरूपस्य दूतस्य प्रेषणमुपवर्णितम्।

२। **पवनदूतम्**—धोयीककविराजरचितम्। अत्र सेनान्वय-कुलतिलक-गौड़ाधिप-श्रीमन्महाराजलक्ष्मणसेनसविधे कुवलयवत्या नाम गन्धर्वनन्दिन्या लक्ष्मणसेनानुरक्तचित्तया मलयपवनरूपस्य दूतस्य प्रेषणमुपवर्ण्यते।

३। **हंससन्देशः**—वैष्णवकविवेदान्तदेशिकविरचितम्। अत्र रामकृतम् अशोककानने सीतासविधे हंसरूपदूतप्रेषणमुपन्यस्तम्। कवेश्चास्याभ्युदयकालः १२६८ तम खृष्टाब्दात् परम् १३७६ तम खृष्टाब्दाच्च प्रागिति प्रतिभाति।

४। **हंसदूतम्**—( कलिकातास्थ वसुमतीकार्य्यालयतो मुद्रितम् ) वङ्गीयकवि-रूपगोस्वामिविरचितम्। अयन्तावत् शकीय-पञ्चदशशताब्द्यां प्रादुर्भूतः विविधान् वैष्णवग्रन्थान् विनिर्म्मितवान्। अत्र मधुरापुरं गतस्य कृष्णस्य सविधे ललिताख्यया गोप्या हंसरूपस्य दूतस्य प्रेषणमधिक्रियते। *

५। **मनोदूतम्**—चैतन्यदेवमातुल-विष्णुदासरामराम-द्विजप्रणीतम्। संसारविषयतः मनसः कृष्णसमीपे दूतरूपेण प्रेषणम् भगवदभिमुखीकरणञ्चात्रोपवर्णितम्। सर्वथातीव रमणीयमिदं वस्तु।

६। **जैनमेघदूतम्**—( भावनगरस्थ-जैनात्मानन्दसभातः प्रकाशितम् )—अञ्चलगच्छीयमेरुतुङ्गाचार्य्यविरचितम्। कविवरोऽयं शकीय-पञ्चदशशताब्द्यां प्रादुरासीत्। अत्र तावद्ग्रन्थे संसारविरक्तस्य समाश्रितरैवतगिरेः श्रीमन्नेमिकुमारस्य सविधे तदीय-

* यत्तूक्तं श्रीमताकुप्पुस्वामिशास्त्रिणा यथात्र कृष्णेन राधासमीपे दूतस्य प्रेषणमुपवर्ण्यते इति तत् भ्रमवशादेव इति प्रतिभाति ( A Descriptive Catalogue of Sans. Mss. in Oriental Mss. Library, Madras, Vol XX No. 11903 ).

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


कान्तया तद्विरहक्लिष्टया मेघो दूतरूपेण प्रेषित इति वर्ण्यते विषयः ।

७ । **पवनदूतम्**—सूरिवादिचन्द्रकृतम् (काव्यमालायां त्रयोदशगुच्छे प्रकाशितम्)। अस्यकर्त्तुश्चास्य कालः खृष्टीयसप्तदश-शताब्दी। अत्र उज्जयिनीपतेर्विजयनरेशस्य अशनिवेगाभिधेयविद्या-धरहृतायाः स्वमहिष्याः तारायाः सविधे पवनद्वारा सन्देशप्रेषणम् उपवर्णितम् ।

८ । **पदाङ्कदूतम्**—नवद्वीपाधिपतेः प्रख्यातनाम्नः कृष्ण-चन्द्रनृपतेः पितुः रघुरामरायमहोदयस्य सभापण्डितेन कृष्णचन्द्र-सार्वभौमेन कविवरेण १६४५ मिते शकहायने निर्म्मितमेतत्। अत्र च मथुरां प्रस्थितस्य कृष्णस्य सविधे गोपीभिः कृष्णपदाङ्क एव दूतत्वेन प्रेषित इत्युपवर्ण्यते। अतितरां प्रसिद्धमेतद्वस्तु वङ्गेषु ।

९ । **मनोदूतम्**—१८१४ मिते वैक्रमवत्सरे तैलङ्गव्रज-नाथेन निर्म्मितमेतत्। तत्र दुर्य्योधनसभाप्रापितया केशाकर्षण-विह्वलया द्रौपद्या कृष्णसमीपे मनोरूपदूतस्य प्रेषणमुपवर्णितम्। (काव्यमालायां त्रयोदशगुच्छे प्रकाशितमेतद्वस्तु ।)

१० । **तुलसीदूतम्**—वैद्यनाथभट्टाचार्य्येण १७०६ मिते शाके प्रणीतम् एतत्। वृन्दारण्याद् गोपीभिर्मथुरायां कृष्णसमीपे तुलसी दूतत्वेन प्रेषिता इत्यस्य वर्णनीयो विषयः। तुलसीद्वारा नारायणः सन्तोषमेति इति चात्र ध्वनिः।

११ । **कीरदूतम्**—गोपालकविरचितम् कालश्चास्य न निर्णेतुं पार्य्यते अत्रान्तिमश्लोके कालवर्णनस्य अस्पष्टत्वात्। तथाच—

दोर्दण्डेन वशीकृताः क्षितिभुजो यस्येह वङ्गावनौ
यस्याशेषगुणप्रदीप्तयशसा प्रच्छादितं क्ष्मातलम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

वर्तन्ते परिषत्सु यस्य कवयः श्रीकालिदासोपमाः
काव्यं कीरवचोहरं वितनुते तस्यैव सभ्यो बुधः ॥

इत्यतः निश्चयेन किमपि प्रख्यापयितुं नालम्भवामः। परं महामहोपाध्याय-हरप्रसादशास्त्रिमहोदयैस्तावदेवमनुमीयते यथा विवादार्णवसेतुग्रन्थस्यान्यतमसंकलयित्रा नवद्वीपाधिपतेः सभापण्डितेन रामगोपालेनानेन भाव्यम्। (१) अत्र च वृन्दारण्यात् गोपीभिः कृष्णसमीपे मथुरायां कीररूपस्य दूतस्य प्रेषणम् उपन्यस्तम्। (अमुद्रितस्य ग्रन्थस्यास्य खण्डमेकं परिषदि वर्त्तते।)

१२। मेघदूतसमस्यालेखः—मेघविजयोपाध्यायकृतः—

१३। कोकिलसन्देशः—* उद्दण्डशास्त्रिकृतः अत्र काञ्चीनगरीस्थेन कामिना केनचित् कोकिलमुखेन प्रियासविधे केरलेषु सन्देशः प्रेषित इत्युपवर्णितम्। वासुदेवकृत-भृङ्गसन्देशमुपलभ्यैतेन कविना निर्मितमेतदित्याहुः।

१४। भृङ्गसन्देशः—† वासुदेवकृतः। यत्रा कयाचित् प्रियतमातः दूरं नीतेन कामिना भृङ्गद्वारा प्रियासकाशे सन्देशः प्रेषित इत्यत्र विषयः।

१५। हंससन्देशः—‡ भट्टवामनकृतः। अत्र तावत् शापविप्रयुक्तेन यक्षेण हंसद्वारा प्रियासमीपे सन्देशः प्रेषित इत्युपवर्ण्यते।

१६। चातकसन्देशः— ब्राह्मणः कश्चिदतिदीनः

(१) Notices of Sanskrit Manuscripts—H. P. Shastri—Vol. I. Preface.

* Descriptive Catalogue of Sanskrit Mss.—Oriental Ms. Library Madras Qol. xx. No. 11835.

† Ibid No. 11865. ‡ Ibid No. 11912.

¶ १६—२० संख्यकानां विवरणम् J. R. A. S. (1884) P. 4119 ff इत्यत्र वर्त्तते। तत्रैव च Pp. 404 ff पृष्ठासु शुकसन्देशः साकल्येन प्राकाश्यं नीतः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

टिपुप्रभृति-तुरुष्कैराक्रान्ते मालावारप्रदेशे तत्स्थानं परिहाय अनन्त-शयनं समाश्रित्य महाराजेन रामवर्म्मणा संलापं व्यधात्। परमकस्मात् पीड़ाग्रस्तः सन् राजानम् अनिवेद्यैव स्वगृहं प्रत्यावृत्तः, स पुनः रोगोपशमे काव्यमिदं राज्ञः समुत्सृष्टवानिति प्रसिद्धिः।

१७। भ्रमरसन्देशः—वासुदेवकृतः। वासुदेवोऽयं युधिष्ठिर त्रिपुरदहनादिकर्त्ता वासुदेवविजयविरचयिता वा तुल्य इति न निर्णीतम्।

१८। शुकसन्देशः—लक्ष्मीदासकृतः। अत्र स्वप्नविप्रयुक्तेन कामिना केनचित् शुकद्वारा प्रियासविधे सन्देशस्य प्रेषणमुपवर्णितम्।

१९। सुभगसन्देशः—अत्र कुमारिकातः स्नातकस्य कस्यचित् दूतरूपेण प्रेषणमुपवर्णितम्।

२०। हंससन्देशः—ग्रन्थकर्त्तुर्नाम नोपलब्धम्। दार्शनिकमिदं वस्तु। तस्यायमाद्यश्लोकः—

"कश्चिन्मायामृगवशगतः कर्मणा मुह्यमानो
भक्त्या शम्भोश्चरणगतया मुह्यमानो विषण्णः।
रामो यद्वज्जनकसुतया दण्डकारण्यभूमौ
चेतेऽप्राप्ते क्वचन पुरुषः कल्पयामास वासम्॥"

२१। नेमिदूतम्—(काव्यमालाया द्वितीयगुच्छे प्रकाशितम्) विक्रमकविकृतम्। जैनमेघदूतस्य एतस्य च तुल्य एव वर्णनीयो विषयः।

२२। शीलदूतम्—चारित्रसुन्दरगणिविरचितम्।

२३। इन्दुदूतम्—(काव्यमालायां प्रकाशितम्) विनयविजयगणिकृतम्।

२४। चेतोदूतम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


२५ । रथाङ्गदूतम् ।

२६ । उद्धवदूतम्—माधवशर्म्मविरचितम् । कृष्णसमीपादागताय उद्धवाय कृष्णविरहवेदनामसह्यां विनिवेदयन्त्या गोप्याः सविधे उद्धवस्य गोपीसमीपप्रेषितश्रीकृष्णदूतरूपेणात्मप्रकटनं गोपीनामुपसान्त्वनञ्चोपवर्णितम् । विषयोऽयमेव श्रीमद्भागवते दशमस्कन्धे सप्तचत्वारिंशत्तमेऽध्याये समुपवर्णितः ।

२७ । उद्धवसन्देशः—श्रीकृष्णेन मथुरातो गोकुले राधासविधे दूतत्वेन उद्धवस्य प्रेषणमत्रोपवर्णितम् ।

२८ । चन्द्रदूतम्—जम्बूकविकृतम् ।

२९ । मनोदूतम् ।

३० । मेघदूतम्—मन्त्रिविक्रमकृतम् ।

३१ । पिकदूतम्—व्रजपुरात् गोपीभिः मथुरायां कृष्णसमीपे पिकरूपस्य दूतस्य प्रेषणमत्र उपवर्णितम् ।

३२ । लक्ष्मीकटाक्षदूतम् ।

३३ । भक्तिदूतम् ।

३४ । विप्रसन्देशः—लक्ष्मणसूरिविरचितः । ( तञ्जानगरे मुद्रितमेतत् ) कृष्णानुरक्तचित्तया रुक्मिण्या स्वापहरणार्थं कृष्णसमीपे दूतत्वेन वृद्धब्राह्मणस्य प्रेषणम् । विषयोऽयमेव श्रीमद्भागवते दशमस्कन्धे द्विपञ्चाशत्तमेऽध्याये समुपवर्ण्यते ।

एवं च आधुनिकैर्म्महामहोपाध्याय-कृष्णनाथसार्वभौमादिभिर्विरचितानि वातदूतादीन्यपि वर्त्तन्ते ।

दृश्यते चात्र दूतकाव्यविवरणे यथा एकस्यैव पदार्थविशेषस्य दौत्यं विषयीकृत्य विभिन्नैः कविवरैः पृथक् पृथक् काव्यं निर्म्मितमिति । ( सावशेषम् )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# वार्त्ताचतुष्टये

## भवभूतिपरिचयः *

लेखकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः

अद्य किल वयमनभिनवमपि वार्त्ताचतुष्टयं प्रपानीयकमिव पुरातत्त्वरसपिपासूनां परिषत्सदस्यानां पुरतः समादाय समुपस्थिताः। न जाने तेषामिदं कियतीं तृप्तिं विधास्यति। अतिगहनं नाम पुरातत्त्वकाननं, तत्र प्रमादपरिखिन्ना अपि रात्रिन्दिवाभियानसमुत्सुकस्य भाविनोऽप्रमत्तस्य पुरावृत्तप्रकाशनचतुरस्य प्रागचरितभूमिभागे असंस्तुतवस्तुरूपकण्टकद्रुमाचिते अभिनवालोचनापरशुलीलां विदधानानाम् आटविकत्वं सम्पादयन्तीति मनसिकृत्वा कृतोऽयमुद्यमः। कृतश्च निबन्धविरचने परिश्रमः; यदि तेन विदुषां मनांसि परितोषं प्रयान्ति—ननु कृतार्था वयम्; अथवा यदि दैवदुर्विपाकात् फलम् अन्यथैव परिणमति, तदा तु जोषमासिष्यामहे। यतः अभिमानैकधना हि गुणवन्तः। निर्गुणानान्त्वयमेव गुणः यदभिमानेन तेषां संस्तवो नास्ति। कण्टकाचितत्वमपि कमलमृणालस्य गुणाय, महतो वर्णसमृद्धिरपि किंशुकानां नोपकरोति, ये पुनः कण्टकिनोऽपि निर्गन्धप्रसवास्तेभ्यः शाल्मलितरुभ्यो नमः।

अस्य वार्त्ताचतुष्टयस्य 'भवभूतेः परिचयः' प्रथमा वार्त्ता; द्वितीया तु 'प्राचीनसमाजवैशिष्ट्यम्'; तृतीया 'केचन विलुप्तग्रन्थाः', चतुर्थी तु 'भारते प्रथमनाट्याभिनयः'। तद् यावदस्यादित आरभ्यते तावदत्र भवद्भिः आर्य्यमिश्रैरवधानं दीयमानमभ्यर्थये।

### ( क )

### भवभूतेः परिचयः।

कविप्रकाण्डः श्रीकण्ठो भवभूतिः स्वकृते मालतीमाधवे वीर-

---

* परिषदो मासिकाधिवेशने पठितोऽयं निबन्धः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


चरिते च आत्मपरिचयं दत्तवान्। तस्मात् तु ज्ञायते यदसौ महाकविः दक्षिणापथस्थितपद्मपुराभिजनः, पंक्तिपावनस्य सोमपोथिनश्च गोपालभट्टस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवश्चासीत्। जातुकर्णी अस्य जननी ज्ञाननिधिश्च गुरुरासीत्। अयं भट्टगोपालस्य पञ्चमपौत्र आसीत्। ज्ञाननिधिरित्यस्य गुरोर्नाम विरुदमात्रं वा तत् सम्यक् नावधारयितुं शक्यते। स्वर्गतसुगृहीतनामानः विद्यासागरपादाः स्वकृतोत्तरचरितटीकायां—"जातूकर्णगोत्रसम्भवत्वात् भवभूतिजनयित्री जातूकर्णी इत्यभ्यध्यायि" एवं लिखितवन्तः, सम्भवत्येतत् यतः मातृनामग्रहणं शिष्टाचारविरुद्धं, अपि च हरिवंशस्य द्विचत्वारिंशाध्याये अन्यत्रापि पुराणेषु जातूकर्णस्य नाम श्रूयते ;—

व्याघ्रः कात्यायनश्चैव जातूकर्णः कपिञ्जलः।
उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः॥

इति श्लोकेन हेमाद्रिरपि जातूकर्णमुपस्मृतिकर्त्तारमाचचक्षे। परमयं जातूकर्णो गोत्रप्रवर्त्तक आसीन्नवेति न ज्ञायते। दिव्यावदानस्य त्रयस्त्रिंशाध्याये यजुषः शाखासु अन्यतरा जातूकर्णशाखा पठ्यते, तद्यथा तत्रैव—

"अध्वर्य्यूणां मते ब्राह्मणाः सर्वे ते अध्वर्य्यवो भूत्वा एकविंशतिधा भिन्नाः। तद्यथा—कठाः कणिमा वाजसनेयिनो जातूकर्णाः प्रोष्ठपदा ऋषयः। इतीयं ब्राह्मणाध्वर्य्यूणां शाखा। एकविंशत्यध्वर्य्यवो भूत्वा एकोत्तरं शतधा भिन्नम्।" अत एव भवभूतेर्मातामहस्य जातूकर्णशाखाश्रयित्वात् भवभूतेर्मातुः जातूकर्णीति नामाभवत् इत्यनुमानमपि सर्वथा सङ्गतमेव। प्रख्यातविद्यावैभवानां भि, एस्, आप्टे महोदयानां मते अधुना नारओयार इति ख्यातः मालवान्तर्गत सिन्धुतीरवर्त्तिभूभाग एव पुरा पद्मावतीनगरीति नाम्ना परिचित आसीत्। मालतीमाधवे अस्याः पद्मावतीनगर्य्या उल्लेखो दृश्यते। अस्याः समीपे पारालवणामधुमत्यभिधानाः तिस्रः नद्य आसन्, अधुना

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ताः पारालुणमधुवराख्याः सञ्जाताः इत्यपि आप्ते महोदयेन कथ्यते। आसाञ्च पारादीनामुल्लेखो मालतीमाधवस्य नवमाङ्के—

पद्मावतीविमलवारिविशालसिन्धु
पारासरित्परिकरच्छलतो बिभर्त्ति।

* * * *

* * * *

तथा—सैषा विभाति लवणा ललितोर्म्मिपङ्क्तिः

इत्यादि श्लोकयोस्तथा—"अयञ्च मधुमतीसिन्धुसम्भेदपावनो भगवान् भवानीपतिः अपौरुषेयप्रतिष्ठः सुवर्णविन्दुः इत्याख्यायते" इति वाक्ये परिदृश्यते। यात्वयन्तु मालवप्रदेश उत्तरापथवर्त्ती अस्य दक्षिण-प्रान्तश्च विन्ध्यपर्वतपादशायी, अतःपरमेव दक्षिणापथस्यारम्भः। दक्षिणापथान्तर्गतविदर्भनगरीसमीपे (Berar) पद्मपुरे भवभूति-रजायत। पण्डितप्रवरः कार्णिंहामोऽपि (Cunningham) मतमेतत् समर्थयति। तदानीन्तु कुण्डिनपुरं विदर्भराजधानी आसीत्। मालतीमाधवे पाटलावत्यभिधानायाः कस्याश्चित् सरितः तथा श्रीपर्व-तस्योल्लेखो दृश्यते। पाटलावती पद्मावतीनगरीसमीपे एव आसीत्। तिव्वतीयभाषायां खीष्टीयाष्टमनवमदशमशताब्दीलिखितेषु पुस्तकेषु ( Skya-nar-idan-ma ) क्यनरदन्मशब्दः प्राचुर्य्येण परिलक्ष्यते। अयञ्च तद्देशीयभाषायां पाटलावत्या * एव नामान्तरं, परं तत्रापि पाटलावत्याः अवस्थितिस्थानं न निर्दिष्टम्। स्वर्गत-शरच्चन्द्रदास-महोदयेनोक्तं यत् तिव्वतीयभाषायां श्रीपर्वतस्य ( Dpal-gyi-ri ) पल्-ग्यि-रि इति नामान्तरं दृश्यते, तिव्वतीयग्रन्थेषु च तस्य दक्षिणा-पथे अवस्थितिः निर्णीतास्ति। भवभूतिविरचितरूपकेषु तस्य यथा गोदावरीजनस्थानदण्डकादिषु अनुरागातिशयोऽवलोक्यते

* भवतु अमुष्माद् गिरिशिखरात् पाटलावत्यां निपत्य माधवस्य मरणाग्रेसरी भवामि।
( मालतीमाधव ९ )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तथैव पद्मावतीनगर्य्यां दृढ़परिचयः। यत्र यत्र भवभूतिः पर्वतं अरण्यं वा वर्णितवान्, यत्र यत्र स दण्डकादीनां नामोल्लिखितवान्, तत्र तत्रैव तस्य पर्वतादिभिः सहजपरिचयः दण्डकादिषु च नैसर्गिकप्रणयानुबन्धः निपुणमभिव्यक्तः। प्रसङ्गतः क्वचिन्नातिप्रसङ्गतश्च भवभूतिः भीषणाभोगरुक्षं काननं चरत्प्रस्रवणसलिलं श्यामलं पर्वतकुलं नदद्वारिराशिनदीश्च वर्णयन् सुखमनुपममुपभुङ्क्ते। प्रकृतेः रौद्रमूर्त्तिवर्णनायां कोऽप्यन्यः कविः भवभूतेः प्रतिबलो नास्ति। अतो मन्ये निविड़काननसङ्कुले पर्वतपार्श्ववर्त्तिनि कस्मिंश्चित् स्थाने एवासीत् पुरातनं पद्मपुरं नाम नगरम्। पद्मपुरात् पद्मावतीनगरी बहुयोजनेषु तिष्ठति। भवभूतिकाले वाष्पीयशकटादिविहीने पद्मपुरात् यदि कोऽपि मासेनापि पद्मावतीं गन्तुम् अशक्नोत्, तर्हि तस्य गमनशक्तिरवश्यमेव प्रशंसनीयासीदिति वक्तव्यमेव। परमिदमेव विशेषेण लक्षितव्यं, यत् पद्मावत्यपि भवभूतेः सविशेषपरिचयम् अनुबध्नाति, स्नेहप्रकर्षञ्चानुभवति। यथा दण्डकादीनाम् आजन्मपरिचितशैशवविहारभूमीनां प्रसङ्गादेव महाकवेरस्य मनः सरसायते, नयने आर्द्रभावं गच्छतः, शरीरञ्च पुलकमातनोति, समग्रा कवित्वशक्तिः समुज्जृम्भते तथा पद्मावतीकुण्डिनपुरादीनां प्रसङ्गादपि। न केवलं कविः पद्मावत्या परिचितः परमस्याः नदीभिः प्रत्यन्तपर्वतैरट्टालिकाभिश्च। न केवलं भगवतः शिवस्य सुवर्णविन्दुनामलिङ्गमूर्त्त्या असौ परिचितः परमयम् शिवमिमं "अपौरुषेयप्रतिष्ठ" इति विशेषणेन विशेषयन् अयं भूतलात् स्वयमुत्थितः न केनापि प्रतिष्ठितः इति इतिहासमपि वक्ति। न केवलमितिहासं वक्ति, भक्त्यतिशयमपि दर्शयति। सुवर्णविन्दुरिति नामोच्चारणसमनन्तरमेव स शिवमुपगम्य सौदामिनीमुखेन स्तौति,—

जय देव भुवनभावन जय भगवन्नखिलवरद निगमनिधे।
जय रुचिरचन्द्रशेखर जय मदनान्तक जयादिगुरो॥ (मा,मा,८)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


कैश्चित्स्मृतं स्पष्टमनुल्लिखितमपि अन्यदप्येकं स्थानं कवेः परिचित-मुपलभ्यते। भवभूतेः रूपकत्रये कालप्रियनाथस्य उल्लेखः अस्ति। स खलु उज्जयिनीप्रसिद्ध-शिवविशेषः। परमस्मिन् विषये सर्व्वेषां मतसङ्गतिर्नास्ति। मालतीमाधवटीकाकृत् जगद्धरः "कालप्रियनाथस्य" इत्यस्य टीकायां—"कालप्रियनाथस्य तद्देशदेवभेदस्य" इति लिखितवान् विद्यासागरपादा अपि तन्मतमनुसृत्य 'कालप्रियनाथः पद्मपुरप्रसिद्धः शिव' इति लिखितवन्तः।

परं कालप्रियनाथस्य उज्जयिनीस्थितत्वे प्रबलतरप्रमाणानां सद्भावात् जगद्धरविद्यासागरयोः मतं सदोषमेव इत्यन्ये। तथाच पठ्यते बालरामायणे—"अयमुज्जयिनीनिवासी भगवान् महाकालनाथः।" कथासरित्सागरे च उज्जयिनीवर्णनायां दृश्यते श्लोकः,—

"यस्यां वसति विश्वेशो महाकालवपुः स्वयम्।
शिथिलीकृतकैलासनिवासव्यसनो हरः॥"

कालिदासोऽपि रघुवंशस्य षष्ठे सर्गे—"असौ महाकालनिकेतनस्य" इत्यादिश्लोकेन, मेघदूतस्य पूर्वमेघे च—"अप्यन्यस्मिन् जलधर महाकालमासाद्य काले" इत्यादिश्लोकेन उज्जयिनीप्रसिद्धः शिव एव महाकाल इति निर्दिदेश। स्कान्दे च—

तथा पुण्यतमं देवि महाकालवनं शुभम्।
यत्रास्ते श्रीमहाकालः पापेन्धनहुताशनः॥

इति शिवस्य महाकाल इति नामान्तरं समुपलभ्यते। बहव एव विद्वांसः महाकाल इति कालप्रियनाथस्यैव नामान्तरमित्याहुः। परम् एतस्य मतस्य समर्थने प्रमाणविशेषो नास्ति, यतः अधुनापि उज्जयिन्यां यः शिवोऽस्ति, स महाकालनाम्ना एव प्रसिद्धः, न तु कालप्रियनाथनाम्ना। किञ्चित्साद्दृश्यात् उभयोरैकत्वप्रतिपादनं न युक्तमिति मन्यामहे वयम्। भवतु कविः स्वजन्मभूमौ पद्मपुरे तन्निहित-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्थानेषु च प्रणयवान् इत्यत्र किमपि अद्भुतं नास्ति, परं कथं स पद्मावतीनगर्य्यामपि तथासक्तचित्त इत्येव अस्माकं प्रश्नविषयतामवगाहते।

वयन्तु मन्यामहे यत् महाकविरसौ विदर्भेषु लब्धजन्मा माधववत् आन्वीक्षिकीप्रभृतिविद्याः शिक्षितुं स्वयं यौवने पद्मावतीमगच्छत्, तत्र च तस्य बहुकालावस्थानात् जन्मभूमौ विदर्भदेश इव पद्मावत्याञ्च संरूढ़रागोऽयमभवत्। अपि च महाकविरसौ मालतीमाधवे कामन्दकीप्रभृतीनां बौद्धप्रव्राजिकानां यदाचारादिकं वर्णितवान्, तदपि स तत्रैव ददर्श। यतः प्राचीनकालादेव यथा मालवप्रदेशे न तथा दाक्षिणात्ये बौद्धानां प्रचार इति श्रूयते।

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।
तीर्थयात्रां विना गच्छन् पुनः संस्कारमर्हति॥

इत्यादिधर्म्मशास्त्रनिर्देशोऽपि अङ्गादीनां कादाचित्कं बौद्धभूयस्त्वं निर्द्देशयति इति च केचन ऐतिहासिकाः। अन्ये च ऋग्वेदादिष्वपि पुरा वङ्गकीकटादीनामनार्य्यजनाध्युषितत्वात् तत्र तत्र गतिप्रतिषेधो विद्यत इति वचनमिदं वेदवाक्यानुवादपरमिति मन्यन्ते। परम्परे तु सौराष्ट्रादीनामपि अत्र उल्लेखो दृश्यत इति बौद्धभूयस्त्वमेव तत्तद्देशस्य निन्दितत्वे हेतुरिति प्रत्यवतिष्ठन्ते।

सौराष्ट्रप्रदेशस्तु मालवस्य प्रत्यन्तस्थित एव। मालतीमाधवे तान्त्रिककापालिकानां ये व्यापारा वर्णितास्तेऽपि महाकविना अत्रैव मालवे प्रत्यक्षीकृताः। दाक्षिणात्येऽपि तान्त्रिकाणां प्रभाव आसीदिति नास्ति सन्देहः, परं मालवान्लगर्ताब्बुदपर्वतादिषु (आरावल्ली) पुरा भूयांसः तान्त्रिका आसन्, किमधिकं तत्राधुनापि बहवः कापालिका वसन्ति। प्राचीनकालादेव आन्वीक्षिकीविद्यायाः उत्तरापथे समधिका चर्चासीत्, अतः तादृशविद्याशिक्षार्थं दक्षिणापथात् उत्तरापथे आगमनं युज्यत एव। वैदिकसदाचाराणां भवभूतिकृतग्रन्थे य उल्लेखोऽस्ति, स तु कविना स्वदेश एव बाहुल्येन परि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


लक्षितः। अध्ययननिरतस्य माधवस्य भागधेयेन समं कवेरपि भागधेयस्य सादृश्यमासीत् न वा, बिम्बभूतस्य भवभूतेर्माधव एव प्रतिबिम्बः, उतान्यथा, तत्तु सर्व्वज्ञो जगदीश एव जानाति, परमेतदपि ऐतिहासिकानां कुतूहलमातनोति। भूतार्थतः किं भवभूतेर्नामासीत् तदपि न निर्द्धारितम्। केचिद् वदन्ति "साम्बा पुनातु भवभूतिपवित्रमूर्त्तिः" इति गिरिजां स्तुवते राज्ञा परितुष्टेन भवभूतिरिति उपाधिर्दत्तः। केचिच्च "ऋचो यजूंषि सामानि सा हि श्रीरमृता सतो" इति श्रीशब्दस्य त्रयीत्वावगमकत्वं निर्व्वाच्य श्रीकण्ठशब्दं व्युत्पादयन्ति। तत् कोऽयमासीत् भवभूतिः? दृश्यते हि विश्वकोषे यत् मध्यप्रदेशान्तर्गते इन्दोरनगरे हस्तलिखितमेकं मालतीमाधवपुस्तकमधिगतम्। तस्य तृतीयाङ्कपरिसमाप्तौ "इति कुमारिलशिष्यकृते" इत्यादि षष्ठाङ्कपरिसमाप्तौ च "इति कुमारिलस्वामिप्रसादप्राप्तवाग्वैभवश्रीमदुम्बेकाचार्य्यविरचिते मालतीमाधवे षष्ठोऽङ्कः", ग्रन्थशेषे च "इति भवभूतिविरचिते मालतीमाधवे दशमोऽङ्कः" इति लिखितमस्ति। वाक्पतिराजकृतप्राकृतभाषामयगौड़वहकाव्यस्य प्रकाशकृदपि पण्डितवरः भि, एस्, पाण्डुरङ्गमहोदयः (V. S. Pandurang's Gandovaho Introd. P. 206) एतदवलम्बनेन भवभूतिं कुमारिलभट्टान्तेवासितया निर्द्धारयति, अपि च कुमारिलस्वामिनः ख्रीष्टीयसप्तमशताब्द्याः शेषभागे स्थितत्वात् भवभूतिं श्रीमदुम्बेकाचार्य्यं वा ख्रीष्टीयाष्टमशताब्द्याः प्रथमभागे स्थापयति।

चिद्विलासयतिकृते शङ्करविजये सुरेश्वरापरनाम्नः मण्डनमिश्रस्य उम्बेकाचार्य्य इति नामान्तरं दृश्यते। आनन्दगिरिकृते शङ्करदिग्विजये पुनः मण्डनमिश्रः भट्टकुमारिलस्य स्वसृपतिरासीदिति अवलोक्यते। अतः मण्डनोम्बेकभवभूतयः एकस्यैव विभिन्नाभिधानानि इति प्रमाणपदवीं नीतम्। अपि च भवभूतिः कुमारिलस्य शिष्यः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



भगिनीपतिश्चासीत् इत्यप्यवगम्यते। एवं भट्टकुमारिलः शङ्करस्य समकालीनः। राजतरङ्गिण्याः चतुर्थतरङ्गस्थितचतुर्दशाधिकशततमश्लोके—

कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्॥

इत्युल्लेखदर्शनात् चतुर्विंशत्युत्तरसप्तशततमखृष्टाब्दे काश्मीराधिपतिना ललितादित्येन पराजितस्य कान्यकुब्जपतेः यशोवर्मणः समकालीनं भवभूतिं दृष्ट्वा शङ्कराचार्य्यञ्च खृष्टीयाष्टमशताब्द्याः शेषभागे आविर्भूतं मत्वा पण्डिताः सर्वमेतदुपेक्षन्ते। अपरे च केचन भवभूतेः मीमांसादर्शने तथाविधपाण्डित्यानवलोकनात् मतमेतत् नाद्रियन्ते। साम्प्रतमस्माभिस्तु तादृशः प्रमाणविशेषः प्राप्तः, येन एतावन्तं कालं व्याप्य पण्डितैरुपेक्षितं मतमेव सत्यतया प्रतिभाति। भवभूतेर्दर्शनशास्त्रज्ञता यथा तद्रचितरूपकत्रये विलोक्यते, तेनायं सर्वेष्वेव दर्शनेषु वेदेषु च कृतश्रमो महापण्डित आसीदिति अनुमानं सर्व्वथा युज्यते।

प्रथमन्तावदिदमेव वक्तव्यं, यत् भगवच्छङ्कराचार्य्यप्रादुर्भावकालविषयिणीनां विप्रतिपत्तीनामभावो नास्ति। अत्र विप्रतिपत्तीनामांशिकपरिचयो दीयते।

१। पुण्यपत्तनतः अष्टनवत्यधिकाष्टादशशततमखृष्टाब्दे (26th April) प्रकाशितायां केशरीपत्रिकायां—"एकत्रिंशदुत्तरषड्विंशतिशततमयुधिष्ठिरराजवत्सरे वैशाखे शुक्लपञ्चम्यां श्रीमच्छङ्करावतारः" इति केनचित् निर्द्धारितम्।

२। पाश्चात्यैतिहासिकपण्डितनिखिलनाथरायमहोदयः शृङ्गेरिमठात् विशिष्टोपकरणं संगृह्य निर्द्धारितवान् यत् ऊनाशीत्यधिकचतुःशततमखृष्टपूर्व्वाब्दे श्रीमच्छङ्कराचार्य्याः प्रादुरासन्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


३। भाण्डारकरमहोदयानां मते अशीत्यधिकषट्शततमख्रीष्टाब्दे श्रीमच्छङ्करावतारः।

४। विश्वकोषमते चतुरशीत्यधिकषट्शततमख्रीष्टाब्दात् प्रक्रम्य षड़शीत्यधिकषट्शततमख्रीष्टाब्दमध्ये श्रीमच्छङ्करावतारः।

५। एन् (N.) भाष्यकार महोदयस्य मते ख्रीष्टीयषष्ठ-शताब्द्याः प्रागेव शङ्करोत्पत्तिर्बभूव।

अपराणि च बहूनि मतानि सन्ति परमत्र बाहुल्यभयात् तानि नोल्लिख्यन्ते, विस्तरतस्तु विश्वकोषे शङ्करशीर्षकनिबन्धे अवलोकितव्यम्। (क्रमशः)

---

## सारस्वतमहोत्सवः

(वाराणसी-वङ्गीयच्छात्रावासतः प्राप्तः)

भारतीयतनये दयावती भारतीह भुवि सा समागता।
वापिकाप्रभृतयो महोत्सवे पूजयन्ति ननु तामनारतम् ॥१॥
"आसनं" स्वहृदये तु वापिका राजहंसवरमज्जनच्छविम्।
काकलीं परभृतो मनोहरां "स्वागतञ्च" मधुरं प्रकल्पते ॥२॥
सुप्रसन्नसलिला सदुत्पला "पाद्य"दानमपि सा सन्तापहम्।
सञ्चिताम्बुकणपुष्प-कम्बुना "स्वर्घ्यं"मेव ननु शङ्खपुष्पिका ॥३॥
निम्नगापि मृदुगामिनी मुदा "आदराचमनकं" प्रयच्छति।
वल्लरी च मकरन्दबिन्दुभिः पुष्प एव "मधुपर्क"माहृतम् ॥४॥
पर्णराजिविगलद्धिमाम्बुभिः "स्नानवारि" विमलं महीरुहः।
दीप्तशुभ्रकरसंहतीः शशी सन्तनोति "वसनं" सितं शुभम् ॥५॥
कुन्दराजिमवदातमौक्तिकं हार"माभरणकं" लताबधूः।
चन्दनागुरुसुगन्धमावहन् "गन्ध"दानममलं वनानिलः ॥६॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पुण्डरीककुसुमं प्रकाशितं पादयोः सुमनसश्च दीर्घिका ।
सालवृत्तरससम्भवं वनं "धूप"दानसुरभिं समाततम् ॥७॥
रक्तपद्ममुकुलानि पद्मिनी "दीप"पङ्‌क्तिमतुलानि यच्छति ।
ओषधिश्च रसनारसप्रदं पक्वशस्यवि"निवेदनं" परम् ॥८॥
"वन्दनां" नयनयोः सुखावहामन्तरीक्षगततारकावलिः ।
कल्पतेऽनिलविधूतमञ्जरीं "चामरञ्च" सहकारपादपः ॥९॥
एहि मातरतुले ! तव प्रियं बोधयस्व मदमत्तभारतम् ।
नो पतेत्तव पथस्थिरं यथा याचनेति वरदे ! तथा कुरु ॥१०॥

---

## शारीरकभाष्यीय-प्रश्नोत्तरम्

### लेखकः—कश्चन विद्यार्थी

विगतपौषसंख्यायां संस्कृतसाहित्यपरिषत्पत्रिकायां 'शारीरकभाष्योयप्रश्न' इति शीर्षकं प्रबन्धं दृष्ट्वाऽत्यन्तमेव मोदामहे। एवं भाष्यादिपर्यालोचनेन हि सत्यं सर्वेषां बुद्धिः सम्यगेव निकष्यत इति सर्वविदितमिदम्। अत्र स्वल्पैरेवाक्षरैरष्टाविंशतिप्रश्नानां सङ्कलनेन नूनं दाक्षिणात्यरामलालमिश्रास्त्रिणः स्वस्य विषयसंग्रहपाटवं दर्शयन्ति। अतो वयमप्यत्र स्वल्पैरेवाक्षरैरेषां समालोचनार्थम् प्रवर्तामहे। शांकरभाष्ये मुद्रितोपलभ्यमानपुस्तकैकरूप्येण परिदृश्यमानेषु एषु पाठभेदेषु यदि उपपत्तिरस्ति, तर्हि तु प्रश्नानामेतेषां नावसरो भविष्यति। अत्र-( २अ०-१पा०-७सू० ) अवरोहाभ्युपगमात् असम्पूर्णोपपत्तिरित्यत्रासम्पूरणोपपत्तिरिति शोधनं यत् कृतं तत् पूर्वोत्तरसन्दर्भानुगुणं योग्यमेव प्रतीयते। एतेन—२-२-१४ प्रासांशपरामर्शस्य नित्यानुवादतयाप्युपपद्यमानत्वान्न तद्बलेन प्रत्यभिज्ञाऽपोदितुं शक्यत इत्यत्रापोहितुमिति, तथा परिशिष्येत् इत्यस्य परिशिष्येत इति पाठशोधनमपि व्याख्यातं भवति। अवशिष्टेषु

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रश्नेषु तु अस्माकं प्रतिभाति न काप्यनुपपत्तिर्वर्तत इति। तत्र प्रथमप्रश्ने—१-१-१० सूत्रे ततः कदाचित् प्रधानकारणवादानुरोधेनापि ईक्षत्यादिश्रवणमकल्पयिष्यदित्यत्र यदि प्रतिवादो कर्तृत्वेन विवक्ष्यते, तर्हि श्रवणमित्यस्य कर्मतयाऽन्वयः सम्भवत्येवेति नात्र पाठान्तरकल्पनमपेक्षामहे।

(२) अन्यतरपरिग्रहे तु युक्तम् ब्रह्मपुच्छं प्रतिष्ठेत्यत्रैव ब्रह्मनिर्देश आश्रयितुमित्यत्रापि विभक्तिप्रतिरूपकाव्ययत्वेनोपपत्तिः।

(३) सोऽकामयत बहुस्यां प्रजायेयेतीयं श्रुतिरुदाहृतेत्यत्र ह्यधिकस्येतिशब्दस्याभावेऽपि न क्षतिः; इतिशब्दरहितांशमात्रस्य प्रकृतोपयोगविवक्षणात्।

(४) "असगतिदोस्यादानेषु" इति भौवादिकासधातुविवक्षणेनोपन्यसेत् इति प्रयोगोऽभ्यसेत् इति प्रयोगश्चोपपद्यते। उपसर्गवशात्त्वर्थभेदस्य विवक्षितस्य निर्वाहः सम्भवत्येव।

(५) १-३-१४ "तदविलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपाद्यते" इत्यत्र प्रतिपद्यत इत्येव पाठो विवक्षित इति सर्पादिविलयनेन रज्ज्वादोनिति द्वितीया नानुपपन्नेति नात्रापि श्रीरामस्वामिशास्त्रिकल्पितस्य पाठभेदस्यास्त्यपेक्षा

(६) १-२-३२ ततश्च राजसूयादिचोदनोपरुन्ध्यात् इत्यत्र तमितिकर्माध्याहारेण यथाश्रुतपाठनिर्वाहात् न पाठान्तरकल्पनाऽपेक्ष्यते।

(७) १-४-३ अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमात् इत्यत्रास्य पदस्य प्रागवस्थाविशेषणत्वे नौचित्यमस्ति। एतत्पूर्ववर्त्तिवाक्ये हि "यदि जगदिदमनभिव्यक्तनामरूपं बीजात्मकं प्रागवस्थमि"ति इदं पदं जगत एव विशेषणं वर्तत इति, अस्य पदस्याप्यत्रत्यस्य तद्विशेषणत्वस्यैवौचित्यात्। न हि प्रागवस्थाया इदंशब्दविशेषणता सम्भवत्यपि, तस्याः परोक्षत्वात्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


(८) १-४-१० किन्तु बन्धमोक्षप्रतिपिपादयिषा स्वैवेत्यत्र द्वितीयस्तुशब्दो हिशब्दार्थ इति सम्प्रदायः। दृष्टं हि बहुषु स्थलेषु हिशब्दार्थे तुशब्द इति।

(९) १-४-१४ "प्राक् सृष्टेरद्वितीयं सदासीत्" इति लट्प्रयोगो न्याय्य एव। पूर्ववर्त्तिसन्दर्भो हि "यथाभूतो ह्येकस्मिन् वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्माऽद्वितीयः कारणत्वेन व्यपदिष्टस्तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते।" इति वर्तमानतया निर्देशेनापि वर्तत इति नायं नियमः, यत् भूतकालेनैव निर्देशः कारणीय इति न दोषाः।

(१०) २-१-१ प्रख्यातप्रणेतृकासु स्मृतिष्ववलम्बरन् इति कर्मण एवाधिकरणत्वविवक्षया सप्तम्या अस्त्येवोपपत्तिः।

(११) २-१-२ तत्त्वज्ञानायोपकुर्वन्तीति तत्त्वज्ञानमुत्पादयितुं पुरुषस्योपकुर्वन्तीत्यर्थः। "क्रियार्थोपपदस्य कर्मणि स्थानिनः" इति चतुर्थीति न दोषः।

(१२) २-१-४ "अनवगम्यमानमेव होदं लोके समस्तस्य वस्तुनश्चेतनत्वं शब्दशरणतया केवलयाभ्यदेशेन"त्यत्र हि उत्प्रेक्ष्येति पाठे प्रतिवादिनेति यदध्याहर्त्तव्यम्, तत्स्थाने प्रतिवादीति यद्यध्याह्रियेत, तर्हि न कोऽपि दोषो भविष्यतीति नात्रापि पाठान्तरकल्पनावश्यकता।

(१३) २-१-१४ "फलवत्सन्निधावफलं तदङ्गमितिवत्," इत्यस्यानन्तरं श्रूयते, "न तु स्वतन्त्रं फलाय कल्प्यते" इति। अत्र हि विश्वजिन्न्यायादिना स्वतन्त्रं फलार्थत्वं न कल्पयितुं योग्यमित्येव वर्णनीयम्, अतः कल्प्यत इत्येव पाठो युक्तः, न तु कल्पत इति

(१४) १३-१-२६ "कथमिवानुपचरितं तद्भावमद्यमानानामनुगतोऽनुशयो प्रतिपद्यते।" अत्र प्रतिपद्येतेति लिङ्प्रयोगो न साधीयान्। यतः—'योह्यसक्ति यो रेतः सिञ्चति, तद्भूय एव भवती'ति श्रुत्यर्थस्याक्षेपः। तत्र भवतीति लट् प्रयोग एव वर्तते, न लिङ्प्रयोगः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


३-२-३ स्वप्ने पाञ्चालानभिगतस्यास्मिन् प्रतिबुद्धाचेतिति-वाक्येऽस्मिन् पदेन देश एव परामृश्यते। "न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशान्तरं पर्येतुं विपर्येतुं च ततः सामर्थ्यमस्ति" इत्येतदर्थोपपादनार्थमेव हीदं वाक्यम्। अत्रास्मिन् पदेन विवक्षणीयो देशः कुरुदेश एव, न पाञ्चालदेशः; दाक्षिणात्य रामस्वामिशास्त्री तु पाञ्चालदेशं परामृशन् भाष्यार्थमेवान्यथा-मन्यते।

३-२-७ "स्वप्नजागरितयोस्तूपाधिसम्पर्कवशात् पररूपापत्ति-मिवापेक्ष्य तदुपरमात् सुषुप्तेः स्वरूपापत्तिर्वक्ष्यते।" इत्यत्र सुषुप्ते-रिति पञ्चम्येव युक्ता, न तु सुषुप्ते इति सप्तमी। पररूपतापत्तौ उपाधिसम्पर्क इव स्वरूपापत्तौ उपाधिसम्पर्कोपरमरूपसुषुप्तिरेव प्रयोजिकेति ह्यत्र विवक्षितम्।

३-२-९ सामञ्जस्यमीयुः इत्यत्र ईयुरिति पदं साध्वेव, सिद्धान्त-कौमुद्यां इट-किट-कटी गतौ इत्यत्र कटीशब्दे ईकारप्रश्लेषेण ईधातुमपि स्वीकृत्य ईयुरिति प्रयोगसाधुता सम्यगेव समर्थिता।

३-२-२१ उत्तरमधिकरणं प्रकाशवच्च, एतत् व्यर्थमेव एवमपि भाष्यकाराणां शैली यत् विना इति शब्दम्, क्षुद्रेण क्षुद्रेण वाक्येन विवरणं नाम अत्रापि उत्तरमधिकरणम् प्रकाशवच्चेति वाक्यसमाप्त्य-नन्तरम् एतदुभयमिति वाक्यप्रवृत्त्या न दोषः।

३-२-२१ श्रुत्या चैवं जातीयकानां गुणानामुपासनार्थत्वेऽव-कल्प्यमाने इत्यत्र श्रुत्येति तृतीयान्तश्रवणात् कर्मप्रयोगविवक्ष-णात् अवकल्पमाने इत्येव पाठो युक्तः, नावकल्प्यमान इति।

३-२-२२ इति शब्देन त्वत्र प्रतिषेध्यं किमपि समर्प्यते नेति नेतीतीति परत्वात् नञ्प्रयोगस्य। अयमस्य भाष्यस्याशयः— अथात आदेशो नेति नेति इति वाक्ये नञ्शब्दनिषेध्यं किमिति शङ्कायां इतिपदबोध्यमेव तन्निषेध्यमिति। इतिशब्दबोध्यं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


किमिति शङ्कायान्तु इतिशब्दश्चायं सन्निहितवचन इत्यादिभाष्याद् अत्र नञ्शब्दस्य निषेधवाचकत्वम् इति शब्दस्य ततः परत्वं च गमकमिति भावः पर्यवस्यति। अत्र च नञ्पदस्येतिपरत्वव्यवस्थापनमेकमेवापेक्ष्यते। अथात आदेशो नेति नेतीत्यस्येव हि विवरणमत्र क्रियते, न तु—"नह्येतस्मादिति नेत्यन्यदित्यस्येति। ततश्च इति शब्देन त्वत्र प्रतिषेध्यं किमपि समर्प्यते नेति नेतीतीतिपरत्वात् नञ्प्रयोगस्येति भाष्ये नेति नेतीत्यतःपरमन्यत्पदं च्युतमिति कल्पनया दाक्षिणात्य-श्रीरामस्वामिशास्त्रिण उक्तभाष्यार्थमेव सम्यङ् न विचारयन्ति स्मेति ज्ञायते।

एतेन (३·४-५ ) साधनवीर्यविशेषात् त्वतीन्द्रिया कस्यचिच्छक्तिराविर्भवति, तत्प्रतिबद्धा परस्य तिष्ठतीति भाष्यमपि व्याख्यातम्। अत्र तत्प्रतिबद्धा इति समस्तपदमेव, न तु तत् प्रतिबद्धेति भिन्नं पदम्। एवञ्च तत्पदस्य स्थाने सा-पदमपेक्षितमिति कल्पनं त्वराति शयं वाक्यार्थनिर्णये गमयति।

४·१-६ कर्मभूयं भूत्वा फलं करिष्यन्तीत्यत्र 'भूत्वा' इत्यस्य भूप्राप्ताविति चुरादिनिष्पन्नस्य विवक्षणे प्राप्तेरत्यर्थविवक्षणात् नात्र कर्मभूयमित्येति पाठकल्पनस्यापेक्षा वर्तते।

४·३-१५ अनियमः सर्वासां इत्यत्राविशेषेणैवेषां विद्यान्तरेष्ववतारिता। इदं भाष्यं सर्वेषामेवैषां विदुषामन्यत्र परस्मात् ब्रह्मणो गतिः स्यात् इति भाष्यानन्तरं तत्समर्थनार्थं प्रवृत्तम्। तथाच समर्थ्यसमर्थकयोरेकविषयत्वमपेक्षितमिति एषामित्येव पाठोऽत्र समुचितः। अनियमः सर्वासामिति सूत्रेऽपि भाष्यकाराः—यस्याग्निविद्यावतां देवयानं पन्थानमवतारयन्तो "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति विद्यान्तरशालिनामियं गतिरिति सर्वविद्वत्साधारण्यमेव गतेः प्रतिपादयन्तीति एषामिति पाठ एवात्र युक्तः। गतिरिति त्वर्थत एवानुषङ्गेण वा सिध्यतीति न कोऽपि दोष इति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# वल्लीविलासम्

( पूर्वतोऽनुवृत्तम् )

लेखकः—स्वर्गतः रामसत्यकाव्यव्याकरणवेदान्तदर्शनतीर्थः

इत्थं वृत्ते विधुरमनसा भृङ्गराजो विशीर्णां
कान्तां खिन्नां पवनमथितां वीक्ष्य शोकाभितप्तः ।
आपन्नेऽपि प्रियतमजने हर्षतुङ्गोमात्तमाङ्ग
कारुण्यांशग्रहणकृपणं तं रसालं बभाषे ॥२०॥

हे हे चूतद्रुम किमु भवान् सङ्गिनीमङ्गनानां
रत्नं पश्यन्नपि वसुमतीधारितां सुस्थ एव ।
के पार्श्वस्थां कमललतिकां वारणोत्खातमूलां
शुष्कप्रायां पथि निपतितां नाभिनन्दन्ति कष्टम् ॥२१॥

नैतद् युक्तं तव रसनिधे निर्दयत्वं रसाल !
यत्ते चित्तं रचयति सदा वज्रखण्डप्रचण्डम् ।
एषा दीना सुललितलता सुन्दरो स्नेहसारा
कां नो शोभाकर ! कृतवती गात्रशोभां त्वदीयाम् ॥२२॥

किं ब्रूषे त्वं मधुकरकुलाङ्गार ते लम्पटस्य
पापिन् पापप्रणयभवनस्यार्त्तिरिष्टा ममेति ।
रे रे चूताधम कठिनतासार ! सारल्यहीन !
चान्द्रीं कान्तिं स्पृशसि वपुषा त्वं कथं मूढराज ! ॥२३॥

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# शिवसन्तोषस्तोत्रम्

( पूर्व्वतोऽनुवृत्तम् )

लेखकः—कविराज श्रीश्यामादासवाचस्पतिः ।

यत् कौशलं भुवननिर्म्मितिकर्म्मणीश !
संदृश्यते न कुशली जड़ एष तेन ।
संशेरते जड़धियो जड़धीप्रसङ्गात्
सत्तां तवागणितसूर्य्यविड़म्बिमूर्त्ते ! ॥४॥

इत्थं चार्वाकादिमतं निरस्य इदानीं यस्मिन् यत्प्रयोजनं यादृशं तत्तु जड़ेन दुर्घटमिति संशयवादिमतमपाकर्त्तुमाह—यदिति । हे ईश ! भगवन् ! प्रयोजनानुरूपजगन्निर्माणसमर्थ ! इति यावत् । भुवननिर्मितिकर्मणि, निखिलजगत्सर्ज्जनकार्य्ये । यत् कौशलम्; नैपुण्यम् । संदृश्यते, सर्वत्रैवाव्यभिचरितत्वेनानुमीयते । भगवदिच्छामन्तरेण अश्मादेः पदकाठिन्यम्, चामरवल्लाङ्गूलवत्त्वम्, हस्तिनः शौण्डादण्डानां काठिन्यं, मातरि स्नेहः, कलापिकलापे तथाविधालौकिकवैचित्र्यञ्च नैव सम्भवतीति भावः । तेन कौशलेन, एष जड़ः, चेतनाहीनः क्षित्यादिभूतवर्गः । न कुशली, नैव समर्थः । यदृच्छया स्रिष्टस्य जड़वर्गस्य न हेतुत्वम्; कौशलस्याभिप्रायरूपत्वेन तस्य बुद्धिपूर्वकत्वनियमात् जड़ानाञ्च तदभावादिति भावः । तथाहि—जड़धियः, मन्दमतयः पुरुषाः । जड़धीप्रसङ्गात्, स्थूलबुद्धिसम्बन्धात् । नास्तिक-तद्ग्रन्थादिसेवनादिति भावः । तव सत्ताम्, अस्तित्वम् । संशेरते, संशयनाशकप्रमाणसद्भावेऽपि दिग्भ्रान्तवत् सन्दिहन्ति । तादृशसंशयापनोदनाय सम्बोधनान्तरमाह—अगणितेति । अगणिताः असंख्याताः ये सूर्य्याः सहस्रांशवः, तेषां विड़म्बिनी मूर्त्तिर्यस्य तत्सम्बोधनम् । "कोटिसूर्य्यप्रतीकाशं कोटिचन्द्रसमप्रभम्" इत्याद्युक्तेः ॥४॥

---

## ग्रन्थपरिचयः

**महिम्नः स्तोत्रम्**—पण्डितप्रवरेण पूर्णानन्दवंशकरीरेण तन्त्रज्योतिषादिशास्त्राभिज्ञेन श्रीसतीशचन्द्रसिद्धान्तभूषणमहोदयेन

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सम्पादितेनानेन वङ्गाक्षरमुद्रितेन व्याख्याविवृत्यनुवादादिसमलङ्कृतेन पुस्तकेन दुर्बोधमपि स्तोत्रमिदं सुबोधं जातं संस्कृतभाषाज्ञानविहीनानामपि जनसाधारणानामिति महदानन्दकारणमस्माकं यदिदानीमास्थावन्तः पाठकाः स्तोत्रस्यास्य सम्यगर्थज्ञानलाभात् साकल्येन स्तोत्रपाठफलभाजो भविष्यन्ति। दुर्गोत्सवतत्त्वादिविविधग्रन्थसम्पादकोऽयं पण्डितधौरेयः सुविदित एव सुरसरस्वतीसेवकानाम्, यथापूर्व्वं नवीनया भूमिकया विविधसूचीपत्रेण च समलङ्कृतोऽयं ग्रन्थः सर्वथा सनातनधर्म्मावलम्बिनां चित्ताकर्षकः स्वत एव भविष्यतीत्यलं पल्लवितेन। ग्रन्थकारेणैव प्रकाशितोऽयं ग्रन्थः कलकत्तायां सुलभः। मूल्यं रूप्यकमात्रम्।

आह्निककृत्य (प्रथमभाग)—श्रीश्यामाचरणकविरत्नेन सम्पादितम् पुस्तकमेतत् वङ्गाक्षरेण मुद्रितम्। कलकत्तायां सुलभम्, मूल्यं सार्द्धरूप्यकम्। पण्डितप्रवरेण विहिताशेषश्रमेण ससूत्रकवेदचतुष्टयालोचनपटुना स्वधर्म्मनिष्ठासम्पन्नेन कविरत्नमहोदयेन सम्पादितस्यास्य पुस्तकस्य संस्करणानां बहुत्वमेव सारवत्तायाः सूचकम्, प्रख्यापितञ्चानेनैवास्य सनातनधर्म्मावलम्बिषु सुधीप्रवरेषु प्रचारबाहुल्यम्—आकाङ्क्षितञ्चेतोऽप्यधिकम्। सर्व्वेषां सनातनधर्म्मावलम्बिनां सनातनधर्म्मरक्षणविधौ यतमानानां यथैतादृशानि पुस्तकानि नवोपनीतानां बालकानां सुलभानि भवन्ति तथैव यतितव्यम्। प्रायशो दृश्यन्ते वङ्गाक्षरमुद्रिता ग्रन्था विशेषतश्च वैदिकक्रियोपदेशकाः संख्यातीतभ्रमविलसिताः, फलञ्चैतत् व्यवसायैकदृष्टीनां सम्पादकानां श्रमकृपणतायाः, किन्तु आनन्दविशेषजनकमेतदेव यत् मन्त्रानुवादसहितो ग्रन्थोऽयं वङ्गाक्षरमुद्रितोऽपि सर्वथा विश्वासमर्हति सुधीप्रवराणाम्। सर्वथापेक्षितप्रमाणवचनानामाकरोल्लेखश्च लभ्यते। बहुषु स्थलेषु विशेषेण बालकानां बोधसौकर्य्याय वङ्गभाषयैव सर्वं व्याख्यातम्। विलुप्तप्राये वैदिकक्रियानुष्ठाने वेदज्ञानविरले वङ्गदेशे सदालोचनयुतस्यास्य ग्रन्थस्य प्रचारबाहुल्यं भूय एवाभीप्सामः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


## पुरस्कारप्रतिश्रुतिः

देवभाषापरिषदो मन्त्रिणा विज्ञापितम्, यथा 'देशभक्ति'विषयमुपजीव्य यैः विद्यार्थिभिः संस्कृतभाषामयनिबन्धो विरचय्य एप्रिलमासस्य त्रिंशद्दिवसाभ्यन्तरे सम्प्रेषयिष्यते निम्नलिखितसङ्केतानुसारेण, तेभ्य आपेक्षिकनिबन्धोत्कर्षमनुसृत्य क्रमेण १२॥)—६)—८)—७॥)—६)—५)—४॥)—३)—२॥)—२) रूप्यकाणि ऐकैकश्येन वितीर्य्येरन् इति।

प्रेषणसङ्केतः—देवभाषापरिषन्मन्त्री—सिवान—सारन्।

## प्रार्थना—

संस्कृतभाषायां पदार्थानां न्यूनान्यधिकानि वा लक्षणानि ये निम्नलिखितसङ्केतानुसारेण विलिख्य सम्प्रेषयेयुः, तेषां नामनिर्देशेन सहैव तानि लक्षणानि मुद्रापयेरन्। लक्षणप्रेषकेभ्यश्च मुद्रापितग्रन्थस्यास्य एकैकसंख्या सादरं वितीर्य्येत। लक्षणेषु पुरस्कारयोग्यतायां सत्यां लक्षणप्रेषका अवश्यमस्माभिः परिद्रष्टव्याश्चेति विज्ञापयति विहारान्तर्गत—जामालपुर—पोष्टनिर्दिष्ट—पुट्टीग्रामवास्तव्या श्रीमनभरोदेवी।

## सन्देशाः

**परिषदो मासिकाधिवेशनम्**—माघस्य विगतनवमदिवसे परिषदो मार्गशीर्षपौषयोरधिवेशने सुसम्पन्ने। तत्र श्रीमता अशोकनाथभट्टाचार्य्य बि, ए, महोदयेन अद्वैतमततात्पर्य्यशीर्षकः श्रीमता चिन्ताहरणकाव्यतीर्थ एम् ए महोदयेन च धोयीककविशीर्षको निबन्धः पठितः। उभावेव निबन्धौ स्वस्वविषयप्रतिपादननैपुण्यमाश्रित्य लेखकाभ्यां लिखिताविति तयो रमणीयतायामविवादः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



**उपाधिलाभे सम्माननम्**—माघमासीयशुक्लैकादश्यां रविवासरे काशीस्थ-टीकमानिसंस्कृतमहाविद्यालये श्रीकाशिराज-सभापतित्वेन जातायां तदीयवार्षिकोत्सवसभायाम् अस्मिन्नेव संवत्सरे प्राप्तमहामहोपाध्यायोपाधिकाय श्रीमते फणिभूषणतर्कवागीशमहोदयाय गौरवसूचकमभिनन्दनपत्रं फलपुष्पसमन्वितं सभापतिना समर्पितमिति वृत्तेनानेन नितरां मोदामहे। स्थाने खलु कृतमभिनन्दनमिदं श्रीमद्भिरिति स्वल्पेनाक्षरेण पुनरपि वयमुद्घोषयामः। अधस्तदभिनन्दनश्लोकाः सन्निविश्यन्ते यथा—

यो वामाचरणं दधाति हृदये स्नेहस्फुरन्मानसो
यत्र प्रेमपरायणश्चिरमपि श्रीदेवकीनन्दनः।
पञ्चास्यः सुमनःसु यः परशुभोल्लासो चिताभूतिमान्
सोऽयं श्रीफणिभूषणो विजयते सोपाधिकः साम्प्रतम्॥
न्याये वैशेषिके च स्फुरति मतिरतिश्रेयसी तावकीना
संख्यावान् सांख्यतत्त्वे पुनरसि निपुणस्त्वं हि मीमांसयोश्च।
जानीषे जैनशास्त्रं मतमपि सुमते सौगतं वैष्णवञ्च
प्रौढिं धत्से च मन्वादिभिरभिलषिते धर्मशास्त्रेऽपि वाढम्॥
आविष्कुर्वन् रहस्यं जनयसि विदुषां विस्मयं तेषु तेषु
व्याख्यानं न्यायभाष्ये किमपि रचितवान् वङ्गभाषामयञ्च।
छात्रास्ते कीर्तिराशिं दिशि दिशि दधते पाठनापाटवेन
प्रायो नालोकयामो भुवि भवदुपमा लेशमप्यादधानम्॥
वितीर्णं सम्राजा गुणगणविदा संप्रति 'महा-
महोपाध्याये'ति प्रकृतमुपनामात्रभवते।
विदित्वा ते योग्यादरविधिमिमं तुष्टहृदयैः
क्रियन्ते सत्कारा विसविशदकीर्त्या विलसतः॥

**राजोपाधिलाभः**—अस्मिन् संवत्सरे परिषत्सदस्यानां वदान्यप्रवराणां श्रीमतां देवेन्द्रनाथमल्लिकमहाभागानां राजोपाधि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

सम्मानप्रदानेन सम्राजा गुणज्ञताया: सम्यक् परिचयो दत्त:। आशास्महे यथा मल्लिकमहाभागा: सम्मानपदमिदमुपगम्य इतोऽपि परतरं गुणगरिमाणमात्मना अनुगृह्य निरुपाधिरूपस्य परमेश्वरस्य महान्तं सन्तोषमाधास्यन्तीति।

---

## चित्रपरिचय:

एतत्पत्रिकासञ्चिकायां येषां महात्मनाञ्चित्रमूर्त्ति: प्रकाश्यते। ते भट्टपल्लीवास्तव्या महामहोपाध्याय-⁄शिवचन्द्रसार्व्वभौमपादा: मूलायोड़संस्कृतमहाविद्यालयस्य न्यायशास्त्राध्यापका: अध्यक्षाश्चासन्। न्यायशास्त्रेषु तेषामसाधारणी विद्वत्ता सुविदितैव नैयायिकधुरन्धराणाम्। अद्यतनेषु सुप्रथितनैयायिकेषु प्रायेण सर्व्वेष्वेव तदीयशिष्यतागौरवमभिवीक्षामहे। एते अष्टादशवर्षे वयसि भट्टपल्ल्यां स्वभवनेषु विद्यार्थिन: समध्यापयितुमारेभिरे परेण च कियता कालेन पाण्डित्यप्रथिम्ना सहैव मूलायोड़विद्यालयमधिकृत्य आपरलोकप्रयाणात् तत्रैव न्यायदर्शनादिशास्त्राणि समध्यापयाञ्चक्रिरे। तदधिकारकाले मूलायोड़विद्यालयस्य परमोत्कर्ष: समपादि। एते स्वयं महामहोपाध्याय राखालदासन्यायरत्नानाम् अन्तेवासिन: समवर्त्तन्त। चारित्रमपि निदर्शनमासीदेषां महताम्। न्यायशास्त्राध्यापनायां तथा समुत्कर्ष: सुतरामेव दुर्लभतां धत्ते। न्यायशास्त्रीयविचारादिशैली च तेषामसाधारणीति बहुत्रैव सप्रकाशम्। दैवविश्वासादिरपि समीचीनस्तेषामुपदिशति स्म परेषु महिमानम्। अद्य बहवस्तदीयाश्छात्रा अपि पाण्डित्येन सुप्रथिता: महामहोपाध्यायोपाधिपदभाजो विशेषेण तद्गौरवमभित: प्रकाशयन्ते। किं बहुना तेषामभावतो भारतवर्षमिदं सुदीनमिवाभाति। कदा पुनस्तादृशां महात्मनां सम्भव: स्यादिति समास:।

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই

# কেশরঞ্জন-তৈল

এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে ; কেশ-রঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ-গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি একটাকা, ডাকব্যয় সাত আনা।




স্নায়বিক দুর্ব্বলতার আশু প্রতিকারক

## সঞ্জীবন রসায়ন

বলবর্দ্ধক, মেধাবর্দ্ধক-ও স্মৃতিবর্দ্ধক মহৌষধ

স্নায়বিক দুর্ব্বলতার জন্য যাঁহাদের উদ্যম, উৎসাহ-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে' অজীর্ণ অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে "সঞ্জীবন রসায়ন" অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহা দ্বারা বমন, উদ্গার, হিক্কা, আধ্মান (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবারিত হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য, ও স্নায়বিক দুর্ব্বলতা নিবারণ জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে''সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ৶৹ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজি শিক্ষা** পরিবর্দ্ধিত

### শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভক্ত অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষেও ইহা একখানি নিত্য ব্যবহার্য্য গ্রন্থ। নাড়ীপরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি প্রস্তুত-বিধি, বিষচিকিৎসা, দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা এবং দ্বিতীয়খণ্ডে মহর্ষিদের গৌরবস্বরূপ—"সুশ্রুত-সংহিতা" এই সংস্করণে সন্নিবেশিত হইয়াছে। মূল্য ২॥০ টাকা। ডাকমাশুল ও প্যাকিং ৸০ বার আনা।

কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং লিমিটেড,

২৮।১ ও ১৯নং লোয়ার চিৎপুর রোড কলিকাতা।

CC-0. In Public Domain. Gurukul Kangri Collection Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# The Sanskrit Sahitya Parishad

A JOURNAL PUBLISHED IN SANSKRIT

DEVOTED TO THE STUDY

OF

## History, Literature & Philosophy

OF

## Ancient India

**Annual subscription........ Rs. 3. Foreign......7s.**

As the most popular and widely read Sanskrit Monthly this is t best medium for advertisement. Advertisements are published in languages.

Monthly Rate of Advertisement :—

| | Full page | Half pag |
|---|---|---|
| For one year | Rs. 6 | Rs. 3 |
| For one issue | ,, 8 | ,, 4 |

For further particulars apply to the Manager,

SANSKRIT SAHITYA PARISHAD,

Shambazar, Calcu



प्रकाशको मुद्रापकश्च—श्रीदुर्गामोहनकाव्यसांख्यपुराणतीर्थ एम्. ए.

संस्कृतसाहित्यपरिषत्, श्यामबाजार, कलिकाता।

मुद्रापणस्थानम्—सिद्धेश्वरप्रेस, २८ नन्दकुमारचौधुरीसेकेण्डलेन,

कलिकाता।


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

१८४७ शकीये
फाल्गुने
March, 1926

Reg. No. C. 1073.

८म वर्षस्य
११श संख्या
Vol. VIII. No. 11

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्




सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सहसम्पादकः—श्रीदुर्गामोहनभट्टाचार्य्य एम्. ए.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

# কে-শ-র-ঞ্জ-ন-তৈ-ল

Digitized by Arya Samaj Foundation Chennai and eGangotri

এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে; কেশরঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ-গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি একটাকা, ডাকব্যয় সাত আনা।




স্নায়বিক দুর্ব্বলতার আশু প্রতিকারক

## সঞ্জীবন রসায়ন

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ

স্নায়বিক দুর্ব্বলতার জন্য যাঁহাদের উদ্যম, উৎসাহ-স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে অজীর্ণ অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে "সঞ্জীবন রসায়ন" অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহা দ্বারা বমন, উদ্গার, হিকা, আধ্মান (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবারিত হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য, ও স্নায়বিক দুর্ব্বলতা নিবারণ জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবন রসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ৷৵০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজি শিক্ষা** পরিবর্দ্ধিত

শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় ৯টটী খণ্ডে সমগ্র পুস্তক বিভক্ত অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষেও ইহা একখানি নিত্য ব্যবহার্য্য গ্রন্থ। নাড়ীপরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি প্রস্তুত-বিধি, বিষচিকিৎসা, দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা এবং দ্বিতীয়খণ্ডে মহর্ষিদের গৌরবস্বরূপ—"সুশ্রুত-সংহিতা" এই সংস্করণে সন্নিবেশিত হইয়াছে। মূল্য ২৷৷০ টাকা। ডাকমাশুল ও প্যাকিং ৷৶০ বার আনা।

কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং লিমিটেড,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

২৮।১ ও ১৯নং লোয়ার চিৎপুর রোড কলিকাতা।

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषद्ग्रन्थमाला

| | मूल्यम् साधारणानाम् | सदस्यानाम् |
|---|---|---|
| **कालीतन्त्रम्**—सटीकानुवादम् | ॥৶০ | ॥০ |
| **शङ्करीसङ्गीतम्**— | ।৶০ | ।০ |
| **मुक्तिवादः**—गदाधरभट्टाचार्य्यविरचितः सटीकाद्वय-भाष्यानुवादसहितः | ২) | ১॥০ |
| **দুর্গোৎসবতত্ত্বম্**—রঘুনন্দনভট্টাচার্য্যকৃতম্ শারদীয়দুর্গোৎসবপ্রমাণপ্রয়োগতত্ত্বরূপম্ | ২৲ | ১॥০ |
| **पितृदयिता**—अनिरुद्धभट्टकृता सामवेदीय-सन्ध्याश्राद्धादिपद्धतिरूपा | १।० | १) |
| **দুর্গোৎসবনিবন্ধকদম্বম্**—দুর্গোৎসববিবেকাদিগ্রন্থ-পঞ্চকাত্মকম্ | ॥০ | ।৵০ |
| **कारकोल्लासः**—भरतमल्लिककृतः सीदा-हरणकारकनिर्णयरूपः | ৶০ | ৶০ |
| **ऋग्वेदभाष्योपक्रमणिका**—सायणकृता आङ्गलभाषाटिप्पणसमेता | ॥।০ | ॥৶০ |
| **গ্রহযাগতত্ত্বম্**—রঘুনন্দনভট্টাচার্য্যকৃতম্ | ।৵০ | ৵০ |

## मुद्राप्यमाणग्रन्थाः—

१। प्रशस्तपादभाष्यम्—जगदीशसूक्तिसहितम्, सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम्।

२। प्रभाकरविजयः—नन्दीश्वरविरचितः प्रभाकरसम्प्रदायानुसारिमीमांसाग्रन्थः।

## मुद्रापणार्थं गृहीता ग्रन्थाः—

१। यात्रातत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम्।

२। तीर्थतत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम्।

३। छान्दोग्यमन्त्रभाष्यम्—गुणविष्णुकृतम्।

४। आनन्दलतिका—सपत्नीक-कृष्णनाथविरचितं काव्यम्।

५। पवनदूतम्—धोयीकविकृतम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# Calcutta Oriental Series

1. युक्तिकल्पतरु:—भोजराजप्रणीत:। अत्र राजनीति:, नगरादिनिर्म्माणरूपा वास्तुविद्या, छत्रचामरलङ्कारादिनानाविधोपकरणलक्षणम्, रत्नपरीक्षा, शस्त्रयुक्ति:, गवाश्वगजादिपशुपरीक्षा, नावादिविविधयानलक्षणम् इत्येवमादयो विषया निर्णीता: Rs. 2-8

2. चाणक्यराजनीतिशास्त्रम्—(pp. xxxi+82) with a Foreword by Johan van Manen, Secretary, Asiatic Society of Bengal 0-14-0

4. **Inter-state Relations in Ancient India**, Part I by Dr. Narendra Nath Law, M. A., B. L., P. R. S., Ph. D. Rs. 2

5. मुक्ताफलम्—वोपदेवकृतम्, हेमाद्रिकृतटीकया समलङ्कृतम्, खण्डद्वयात्मकम्। अपूर्व्वोऽयं वैष्णवग्रन्थ:। (With a Foreward by Dr. N. Law, M. A., Ph. D. (pp. xlvii+361) Rs. 6

6. चाणक्यकथा - रविनर्त्तकप्रणीता वङ्गानुवादसहिता Re. 1

9. वक्रोक्तिजीवितम्—राजानककुन्तलविरचितम् ग्रन्थकृत्प्रणीतटीकासहितमलङ्कारशास्त्रम् (Edited with Critical Notes Introduction by S. K. De, M. A., D. Lit.) Rs. 2

13. **Economic Life and Progress in Ancient India** by Narayan Chandra Banerjee, M. A., Lecturer, Calcutta University. (Demy 8 vo. 325+xvi pp.) Rs. 6

14. **Early History of the Spread of Buddhism and the Buddhist Schools** by Dr. Nalinaksha Dutt, M. A., B. L., P. R. S., Ph. D., Lecturer, Calcutta University. (Demy 8 vo. 314+xi pp.) Rs. 7-8

15. ব্রহ্মসূত্রম্—'ভাগবতভাষ্য-সহিতম্– শ্রীহরিদাসবিদ্যাবাগীশ-ভাগবতাচার্য্যসঙ্কলিতম্। প্রত্যেকটি সূত্রের সহিত শ্রীমদ্ভাগবতের শ্লোক উদ্ধৃত করিয়া দেখান হইয়াছে যে শ্রীমদ্ভাগবত ব্রহ্মসূত্রের ভাষ্য (277 pp.) Rs. 2-8

13. **Foundation of Indian Poetry** (being a survey of the origin and development of theories of Indian Poetics from the earliest period) by Dr. J. Nobel of Berlin (188 pp.) Rs. 5

17. **Padma Purana** by Prof. H. Sarma M. A. It shows that Kalidasa has drawn materials for his a Sakuntala and Raghuvamsa from the portion of the Padmapurana edited here. (Demy 8vo. lii+100 pp.) Rs. 2

18. **Studies in Indian History and Culture** by Dr. Narendra Nath Law M. A., B. L., Ph. D. (Demy 8vo. 430 pp.) Rs. 8

## THE INDIAN HISTORICAL QUARTERLY
### (A HIGH CLASS ORIENTAL JOURNAL)

Each issue 200 pp. Super-Royal Octavo. Edited by Dr. Narendra Nath Law, M. A., B. L., P. R. S., Ph. D. containing contributions from the foremost oriental scholars of India, England, France, Germany.

Annual Subscription Rs. 6 (exclusive of postage 0—12—0)

The Calcutta Oriental Press, 107, Mechuabazar Street, Calcutta.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४७ शकीये फाल्गुने ८म-वर्षस्य ११श-संख्या


## मतिमञ्जरी

**अ-भा-संस्कृतसाहित्यमहासम्मेलनम्**—पाठकमहाभागाः! ऐषमः संस्कृतसाहित्यपरिषदा वङ्गप्रतिनिधिभूतया समाहूतम् अखिलभारतवर्षीयसंस्कृतसाहित्यमहासम्मेलनं निखिलसंस्कृतविद्याधिष्ठाने कलिकातामहानगरे दशमशुभाधिवेशनेन पदं करिष्यतीति श्रूयते, तदर्थं कापि स्वागतकारिसमितिः सुसन्नद्धा वर्त्तते, यत्र वङ्गालङ्कारभूताः पण्डितमहत्तमा भट्टपल्लीयश्रीयुक्तपञ्चाननतर्करत्नपादाः सभापतयः, कलिकातास्थराजकीयसंस्कृतमहाविद्यालयाध्यक्षाः श्रीमन्त आदित्यनाथमुखोपाध्यायाः कलिकाताविश्वविद्यालयाध्यापकाः श्रीमन्तः अनन्तकृष्णशास्त्रिवेदान्तविशारदाश्च मन्त्रिणः, परे च उपसभापतय उपसम्पादकाः कोषाध्यक्षाः साधारणसभ्याश्च समजायन्त। विविधसामयिकपत्रिकासु साम्प्रतमेव तद्वृत्तं प्रकाशितमुपलभ्यते। कार्य्यकारकाश्च सुयोग्याः सम्मेलनकृत्योपयोगिव्यापारेषु प्रतिस्वं प्रयतन्ते। सम्मेलनमूलसभापतिनिर्व्वाचनन्तु अद्यापि न जातं, सम्मेलनकार्य्यकारिसमितिसदस्यानां मत-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मुपादाय इतःपरं तन्निर्व्वाचनं करिष्यते। सम्मेलनाधिवेशननिर्व्वाहोपयोगिद्रव्याणि संग्रहीतुं स्वागतकारिसमितिरनुरूपप्रयत्नपरा सन्दृश्यते, समुपलभ्यते च प्रारम्भ एव तत्र तत्र साफल्यसूचनमन्याहृशम्। वङ्गेषु अद्यापि वर्त्तते संस्कृतशास्त्रेषु तथा गरिमविज्ञानं लोकानां येन नेदमायासविशेषमुत्पादयिष्यति प्रयत्नपराणाम्। एवं स्थितिष्वपि साफल्यहेतुषु अतीतवृत्तमनुस्मरतामस्माकं परिकम्पते हृदयम्। शान्तं पापं प्रतिहतममङ्गलं भूयादभिमतदेवताप्रसादात्।

अथेदानीं सम्मेलनकृत्यमधिकृत्य किञ्चिदिव ब्रूमहे—अखिलभारतवर्षीयसंस्कृतसाहित्यमहासम्मेलनमिदं गौरवस्थानं सर्व्वस्यास्य भारतवर्षस्य। अत्र सम्मिलितानां सकलप्रदेशीयसंस्कृतज्ञपण्डितानां किमपि देयमादेयञ्च वरीवर्त्ति। न केवलमितरसभाधिवेशनमिव अस्याधिवेशनं सफलमुपलक्षयामहे। अत्र सुयुक्तिसहानि शास्त्रीयतत्त्वानि समुद्घाटितानि भवेयुः, यैरुपस्थापितैरद्यतनानां नवीनविज्ञानसमुन्मेषः शास्त्रेषु पदमादध्यात्।

विषयविशेषाणां भेदमुरीकृत्य सभाधिवेशनविभागः कर्त्तव्यः, नह्येकत्र सर्व्वेषां समन्वयेन केवलमनर्थकोलाहलैः बहिरिव सभासार्थक्यमापादनीयम्। तथा कृते न्यायमीमांसास्मृतिवेदान्तादिविषयाणां केषामपि प्रत्येकमनुरागाद्यभावेन निबन्धादीनामानर्थक्यं नोपतिष्ठेत, परन्तु नैयायिकैः पण्डितैः सम्भूय नैयायिकनिबन्धानां मीमांसापारदृश्वभिर्मीमांसिकनिबन्धानाम् अन्यैश्च तत्तज्ज्ञैस्तत्तद्विषयनिबन्धानामाकर्णनेन परिशीलनेन समालोचनेन च तत्तद्गुणदोषाः तत्त्वतः प्रकाशेरन्। अतो विषयविशेषान् विभज्य खण्डसभाव्यवस्था प्रवर्त्तकैः प्रवर्त्तनीया। तत्र तत्र च शास्त्रीयावान्तरविषयानाश्रित्य प्रतिभाप्रसूतवादप्रतिवादैः तत्त्वनिर्द्धारणादिप्रयत्नः प्रवर्त्तयितव्यः।

नानाप्रदेशेभ्यः बहुभिः प्रयत्नैरपि शास्त्रविशेषज्ञाः समामन्त्रणीयाः, न केवलं कौशलेनात्मप्रतिष्ठामभितः प्रवर्त्तयन्तो मानवन्तः स्वल्पज्ञाः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तेषामिव सविवेकमेकैकशो विभिन्नसभासु आध्यक्ष्यमुपपादनीयम्। सत्यपि कर्म्मव्यापृतानामभिप्राये निबन्धार्थं पुरस्कृतिविशेषणमननुकूलमुपलभामहे। दृष्टं हि बहुशः पूर्व्वं पुरस्कृतिविशेषणमुपलभ्य पराभवशङ्कितया महान्तोपि निबन्धारः सुनिबन्धनिष्पादने न प्रयतन्त इति। एवं हि सम्मेलनेन तथा प्रकृष्टनिबन्धो नासाद्येत। परं प्राप्तानामुत्तमनिबन्धानां यथावसरं प्रचारविशेषणमेवास्माकमनुमतम्।

देशान्तरेभ्यः समापतितानां सुसत्कारप्रबन्धस्तथा स्वागतकारिसमित्या कर्त्तव्यः यथा वङ्गीयानामातिथेयताजनश्रुतिः केवलं श्रुतिस्थिता न प्रतीयेत।

सामयिकसन्देशपत्रद्वारा सत्यपि बहुलप्रचारे वैयक्तिकतया मन्त्रिभिः पत्रप्रेषणद्वारा शास्त्रनिष्णाता विज्ञापनीयाः, यथा तेषां सविशेषमत्र दृष्टिराकृष्टा स्यात्। वैयक्तिकविरोधपरिहारेण तेषां तेषां सुविश्रुतसंस्कृतविद्यापीठादीनां सहायतासम्पादनाय मन्त्रिभिरितस्ततः प्रयत्नशतमास्थेयम्। स्वीयस्यात्मात्मनपत्रपं प्राप्तुकामानामपि तदिदमानुषङ्गिकं मत्वा कर्म्मसु प्रवर्त्तितव्यम्, यथा नाम तदीयपितृपितामहाद्यधिष्ठानस्य भारतवर्षस्य गौरवं देशान्तरीयैश्च स्वदेशवासिभिश्च अद्यापि निरवसादं सुबोधं स्यात्। व्याख्याने वा शास्त्रार्थे वा पुराणशास्त्रादितत्त्वव्याख्यानकृत्ये वा साहित्यचर्च्चायां वा भारतस्य किमपरन्यादृशं नैपुण्यं लोकेषु प्रतिपादयितव्यम्। अभिनयकलायां प्राचीनकालेऽपि भारतस्य कथं समृद्धिरासीदित्यपि प्राचीननाट्यप्रयोगेण प्रकाशयितव्यम्; अधुनापि प्राचीनरीत्या नाट्यनिर्म्माणादिकौशलमस्तीत्यपि साम्प्रतिकनाट्याभिनयेन बोधयितव्यम्। सर्व्वप्रदेशीयपण्डितानां सभाकालादर्व्वाक् परस्परं परिचयव्यवस्था कर्त्तव्या। इत्येतत् सर्व्वं सुविविक्तं सम्पादयितुं शक्यश्चेत् सम्मेलनं सफलतां यायात्, अन्यथा तु प्रबन्धकारिणां परिश्रमश्च द्रव्य-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

विनियोगश्चेत्युभयमकाण्डे प्रयुक्तं फलपरिशून्यमनुशोच्यतामेव दधीत।

अन्ते तावदस्माभिः सम्मेलनमूलसभापतिविषये किञ्चिदुक्त्वा विरम्यते। यत्र प्रान्ते सम्मेलनाधिवेशनं यस्मिन् संवत्सरे सम्पद्यते तदा तदधिवेशने तत्प्रान्तीयः सभापतिः न स्यादिति स्थिते देशान्तरादेवं सभापतिः निर्द्दिष्टव्यः यस्य शास्त्रविशेषे प्रौढ़ं पाण्डित्यं साधारणशास्त्रीयविषयेषु च बहुषु अभिनिवेशः। अन्यथा सम्मेलने व्यवहर्त्तव्यानां नानाविषयाणां विज्ञानविरहे सर्वाध्यक्ष्यं तत्र नोपयुज्येत। नियमस्तावदयं सभाया यत् सर्व्वत्रैव विषये सभ्यैः सभापतिः प्रमाणीकर्त्तव्य इति। अतस्तत्तद्विषयविज्ञानराहित्ये कथमिवायं प्रमाणभूतस्तत्र तत्र सम्भवेत्। सभापतीनामभिभाषणनिबन्धे च तथास्माभिः निगूढ़तत्त्वमभिकाम्यते, यद्धि साधारणेषु दुर्लभतां धत्ते, अन्यथा को वा साधारणसभादौ आध्यक्ष्यमध्यासीनो वाक्प्रपञ्चं नोपादत्ते, किमस्माकं तत्र गौरवबुद्धिस्तथा प्रसृता भवति? अपि च सभानियन्त्रणशक्तिरपि तेषामावश्यकी यया प्रवृत्ते परस्परं कोलाहलादौ सद्विषयानुरागिणीं मतिमास्थाय कोलाहलप्रशमनं तैः सुशकं भवेत्, गौरवबुद्ध्या च तेषु स्वत एव लोकानाम् आश्रवभावः समुदियात्।

तदेवं स्वागतकारिसमितिरस्माभिरर्थ्यते यथा सम्मेलनमिदं सर्व्वथा सफलं विधातुं प्राणैः पणैः सुविविच्य कृत्यं क्रियताम्, अतीतवैफल्यं यथा लोकानां स्मृतिपथे पान्थायमानमतःपरमपि न तत्र पान्थायेत तथैव प्रतिपदमापन्मुक्तिकामनया दैवञ्च पुरुषकारश्चेत्युभयमवलम्ब्यतामिति कृतं पल्लवितेन।

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# भारतवधूविषादः

लेखकः—मो. वि. सुब्रह्मण्यार्यः

हन्तेदानीं गहनजड़िमाऽऽक्रामतीवाऽन्तरं मे
मेधा तीक्ष्णाऽप्यहह ! विजहातीव मां मन्दभाग्याम् ।
आर्यावर्तात्मम चिरगृहाद्दूरनिष्कास्यमाना
कालेयोपप्लवगुरुतया मोहिताऽहं भ्रमामि ॥ १

आर्यावर्तः किमयमुत नेत्यद्य शङ्के यमोश:
कारुण्याब्धिः प्रकृतिसुभगं शैलनद्यादिरम्यम् ।
प्रादान्मोदादविरतकृतश्रेयसां सत्फलं मे
निष्प्रत्यूहं बहुतिथमहं यत्र कालं व्यनैषम् ॥ २

नैवेयं स्याद् भरतवसुधा नाऽपि जम्बून्तरीपं
काव्येषु प्राङ्मधुरमधुरं यत्परं गीयते स्म ।
मर्त्यामर्त्यप्रभुभिरसकृत् संगतैर्यत्र मित्रैः
श्रेयःप्राप्त्यै सकलजगतां संविधानं व्यधायि ॥ ३

ईक्षे नूनं चिरपरिचितानम्बरस्पर्शिनोऽद्रीन्
हिमापीड़ान् विपिनवसनान् सिन्धुमालान् समृद्धान् ।
रत्नैर्धात्वोषधिमधुफलैर्भूरिसत्त्वैश्च धात्रा
शत्र्वापातादिव समवितुं भारतं स्थापितांस्तान् ॥ ४

सत्स्वेतेषु क्व नु बत गतास्साधवो ये दरीस्था
यद्वा तद्वा स्वयमुपनतं प्राश्य तृप्ताः प्रशान्ताः ।
ब्रह्मात्मैक्याधिगमविभवाञ्छात्रकान् स्वानशासुः
मार्गं धर्माचरणमनु तैः श्रेयसे सेवितव्यम् ॥ ५

प्रेक्षे सिन्धूर्वनजवदना दीर्घशैवालकेशीः
फेनस्मेरा मुकुलसकुचाः सुन्दरावर्तनाभीः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

अब्धिं हंसामलसुवसना: कामिनीवत् सनाथं
यान्तीर्वेगात् घनवनपटाच्छादिताशास्वरूपा: ॥ ६
सन्त्येवेता:—क्व नु मुनिजनोच्छोषिता वल्कला वा
वन्यद्रव्यावहृतरणयो वेदघोषास्तटे वा ।
घट्टे घट्टेऽप्युपजनपदं नित्यकर्मानुषक्ता:
स्नाता जपप्रासुकुलितदृश: श्रोत्रिया: क्वाऽद्य याता: ॥ ७
प्रेक्षे हा ! प्रत्युत जलतटे धीवरान् जालहस्तान्
निष्ठीवैर्वाऽप्यलमधुपयोदूषकान् ब्रह्मबन्धून् ।
पानाद्यर्हे पयसि महिषक्षालनासक्तगोपान्
जीर्णं चीरं मलिनममलं कुर्वतो धावकान् वा ॥ ८
प्रेक्षे नूनं घनवनभुव: श्रीयुता (१) नीरदाभा:
सूर्याचन्द्रौ चकितचकितं यत्र यात: श्रमेण ।
नानाशाखि(२)प्रथितविभवा मन्मथोत्पादिका या:
व्रातानन्ता(३)र्जुनखगशिवा:(४) श्रीपतेर्यान्ति साम्यम् ॥ ९
सन्त्येतास्तु,—क्व नु वनचरा: केवलश्वापदघ्ना
वानप्रस्था: क्व नु तदुटजा: क्वाऽऽज्यधूमस्तप: क्व ।
तत्कन्याभि: करधृततृणैर्वर्धिता वा मृगा: क्व
स्वेच्छारोहा: क्व नु वनभुवोऽकृष्टपच्या यवा: क्व ॥ १०
प्रेक्षे सम्प्रत्यहह ! मृगयाजीवनारण्यकान् वा
कृषाणान् टी(५)रोपणकृतिपरान् लावकान् वा द्रुमाणाम् ।
साशङ्कं वाऽपरहितजनतो धावत: कृष्णसारान्
शान्तेऽरण्येऽप्यतितुमुलदान् तैल(६)यानान् रथान् वा ॥ ११

(१) शोभा, लक्ष्मीश्च । (२) वृक्षा वेदाश्च । (३) वनपक्षे वृक्षविशेषा: । (४) वन-पक्षे शृगाला: ।

(५) Tea plantations. (६) Petrol-driven motor cars.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रेक्षे ग्रामानुपवनवृतानुर्वरक्षेत्रमध्ये
स्वस्थान् दूरान्नगरतुमुलात् शैलमूले च नद्याः ।
तीरे नीड़ान्तरविहगवत् सुस्थितान् सस्यवृन्दैः
स्पृष्टान् धर्मानुसरणहितान् प्रेक्षणीयान् प्रशान्तान् ॥ १२
इष्टापूर्ते क्व नु बत गते धर्म्यवृत्तिः क्व वा क्व
क्षेत्रेऽमोघं कृषिकयतनं शाद्वलं क्व क्व गावः ।
वृद्धानां क्व प्रथितपरिषत्(७) क्वोद्यमा (८) वायमुख्याः
विद्याशाला क्व नु हितकलाबोधिनी क्व प्रशान्तिः ॥ १३
हा धिक् ! प्रेक्षे विजननिलयान् गाश्च कङ्कालशेषाः
क्षेत्रं कृष्टं शिशु जरठकैः भ्रातरक्तांश्च यूनः ।
न्यायस्थानव्ययितविभवान् ग्रामिणश्चाऽऽङ्गवाणी-
भूषाविषभ्रमितधिषणान् बालकान् किं करोमि ॥ १४

( अवशिष्यते )

---

# अभिनवप्रत्नतत्त्वाविष्करणम्

आविष्कारकः—श्रीघगघूतिशर्म्मा *

अधुना वङ्गेषु प्रत्नतत्त्वविदामशेषसम्मानदर्शनात् तल्लिप्सुनानेन जनेन लोकचक्षिगिरिकन्दराण्यतिदुर्गमाण्यन्विष्य कतिचिद् धर्म्म-समाजादिविषयकाण्यभिनवतत्त्वानि (१) प्रागाविष्कृत्य 'विद्योदय'-नामके स्वाधिकारभुक्ते पत्रे प्रकाशितानि। सकृत्तदाविष्करणेन यद्यपरस्य प्रत्नतत्त्वनैपुण्यं न तथा सर्व्वसमादरार्हं स्यादिति पुनस्तदा-

---

(7) Village Panchayats. (8) Weaving.

* आविष्कर्त्तुरोष्ठप्राम्भावज्ञापनाय तयोष्ठ्यवर्णान् प्रति कृताविचारदोषक्षालनायात्र ईषद्वदनव्यादानकृदूकारमात्ररक्षणम् ।

(१) येषु पत्रेष्वेतानि तत्त्वान्यधिगतानि तेषु सर्व्वत्रैव कल्किदेवनामाङ्कमवलोक्य मन्यते कलिशासनप्रारम्भ एवैतान्यनुशासनानि निबध्य तत्र तत्र स्थानेषु रक्षितानीति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विष्करणप्रयासिनानेन तेषु तेषु गिरिकन्दरेषु साम्प्रतं कृताभियानेन बहुधान्विष्य कतिचिदतिरित्तानि तत्त्वान्याविष्कृतानि। किन्तु नूतनाप्रसिद्धात्मसम्पादकयुगलस्य बहुलौष्ठ्यवर्णाभिधेयस्य तत्परिचय-जिज्ञासुभ्यः साधारणेभ्योऽसकृद्विज्ञापनप्रसङ्गेन पुनः पुनरौष्ठ्यवर्णो-च्चारणप्रयत्नकृतवदनव्यादानव्यापारविकृतयन्त्रे वार्द्धक्यक्षीणवपुषि 'विद्योदये' सहसा भवलीलां विहाय नाकं गते, नवाविष्कृतानि तानि तत्त्वानि कुत्र वा प्रकाशयिष्यन्त इति चिन्तोद्वेलितहृदयो वङ्गेषु वर्त्तमानसंस्कृतमुखपत्रभूतायाः 'संस्कृतसाहित्यपरिषत्'पत्रिकाया गैर्वाण-विद्योत्साहित्वगुणकथाभिः कर्णमागत्य तत्प्रकाशप्रेषण चापलाय प्रणोदितोऽयं जनः। यद्यपि 'विद्योदय'दुष्परिणामकारिणो-ऽन्यतरस्यैतस्य तत्त्वाविष्कर्त्तुर्नामान्तर्भुक्तमौष्ठ्यवर्णप्राचुर्य्यं तारुण्या-च्छक्तिशालिन्यास्तस्याः न कमपि मर्म्मपीड़ां जनयिष्यति, तथापीरत-नामहेतुकविद्योदयविनाशदर्शनात्तस्या मनसि कोऽपि नामातङ्को भवेदित्याशङ्कयानेन स्वनामनिहिता ओष्ठ्यवर्णाः कण्ठ्यवर्णैः परि-वर्त्त्यन्ते *। अत इदानीमेतेषामाविष्कृततत्त्वानामनुपादेयत्वमन्तरेण नान्यत् किमपि प्रकाशयोग्यत्वं विद्यत इति विचिन्त्य सानुनयं तत्र प्रार्थ्यते तत्रभवत्याः कृपाकटाक्षपातः।

१। समाजविषयकतत्त्वानि--

(क) निपुणो हि समाजसंस्कारकः समाजग्रहणव्यपदेशेन म्लेच्छ-संसर्गादिदोषदूषितसमाजभ्रष्टजनेभ्यो विपुलवित्तान्यादाय तेषामत्य-ल्पांशमात्रेणैवाशङ्कितविरोधानां सतीर्थानां वदनानि निरुध्याधिकांशं चात्मपोषणार्थं नियोज्य समाजसमक्षं ढक्कानिनादैरात्मन औदार्य्यनीतिं प्रचारयेत्।

* यद्येतदौष्ठ्यवर्णच्छेदनाविष्कर्त्तुः "च्छिन्नौष्ठ" परिचयो भवेत् तथाप्येतत्तत्त्वप्रचारकत्वमपि परमोपयोगित्वं वर्त्तेत इति कोपि न हृदयनिर्वेदः। अपि च स्वनामप्रसिद्धस्य कवेः "श्रीकण्ठा"भिधेयत्वाद यदि कोऽपि कण्ठयुक्तोपाधिरेतद्दुर्लभाविष्करणपुरस्काररूपेणास्मै प्रदीयत इत्या-शयैव कण्ठ्यवर्णा योज्यन्ते।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


(ख) शास्त्रतत्त्वज्ञो हि जनः कुत्रापि विषये किमपात्मनः स्थिरमतमपोषयन् स्वल्पदक्षिणाग्रहणेनैव सर्वत्र स्वाभिमतं यच्छेत्। अत्र खलु मतचाञ्चल्यजनितं लोकगर्हणमुन्मत्तप्रलापवदुपेक्षणीयम्।

(ग) उदारनीतिविप्रो वित्तादिगर्वदृप्तेभ्यो नीचकुलसम्भूतेभ्यो जनेभ्यः परमचातुर्य्येण वर्णोत्कर्षमरोचिकां प्रदर्श्य तदनुकूलशास्त्र-वचनैर्दुर्व्याख्यातैरपि वहिस्तेषां वर्णोन्नतिं सम्पाद्य सामाजिकाचरणा-दिषु तेषां पूर्वभावं संरक्षन् स्वौदार्य्यप्रकाशस्वरूपेण दुर्लभनागरवास-जनकं प्रभूतं धनं तेभ्यो गृह्णीयात्।

(घ) समाजतत्त्वज्ञो हि जनो भोजनसंसर्गाद्याचारेषु शास्त्रोप-दिष्टेषु तद्रक्षणमूलकं स्वकौलीन्यं सदैव विस्मृत्य प्रभूतपणार्जन-निमित्ते परिणयकर्म्मण्येव तत्कौलीन्यरक्षणाय सर्वथा यतेत। उद्वाहे च शुल्कादानप्रदानपर्य्यन्तं तं कौलीन्यं सर्वथा संरक्ष्य तदनन्तरसम्पाद्ये अङ्गभूते भोजनविधौ तु जातिवर्णविशेषनिराकरणेन तत्कौलीन्यस्य "सपिण्डीकरणं" कुर्य्यात्।

(ङ) समाजसंसत्सु गगनविदारिणीभिर्वचनपरम्पराभिरस्पृश्यत्व-वर्जनादिकं समुदारमतं करचरणसञ्चालमुद्घोष्य कार्य्यकाले तु स्थाणुरिव तिष्ठेत्।

२। धर्म्मविषयकतत्त्वानि—

(क) त्यागस्य धर्म्मत्वात् धर्म्मविषयत्यागे कथं धर्म्महानिः? तद् गृहीतम्लेच्छान्नानां कृतम्लेच्छसंसर्गाणां परिवर्जितात्मधर्म्मा-चाराणां त्यक्तस्वधर्म्माणामपि जनानां न कथञ्चित् स्वधर्म्मभङ्गप्रसङ्गः। एवं च यदि कोऽपि धर्म्माचारभ्रष्टो जनः समाजे धर्म्मराज्याधिष्ठितो भवेत्, तत्र किमप्यसामञ्जस्यं न सम्भवति।

(ख) आचाररक्षणचिन्ताविरहितानां मुख्यीभूतेश्वरतत्त्वानां यवनादिधर्म्मविशेषाणां तत्तच्छास्त्रोक्ता वहिराचारा धर्म्मनियामका भवन्तु, तत्र न क्षतिः आचारमूलकस्य तु सनातनधर्म्मस्य आचारो

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नाम कोऽपि धर्म्मसङ्कोचहेतुर्न वर्त्तेत। तथात्वे धर्म्मस्य लघुत्वं स्यात्।

(ग) आलोकस्फुटनार्थं यथा तिमिरेण प्रयोजनं तथा धर्म्मरक्षणार्थमावश्यकोऽधर्म्मसञ्चयः। एवं सञ्चितेष्वधर्म्मेषु यदि धर्म्मोऽपि निमज्जेत् तदा न हानिः।

(घ) प्रतिमानवगतात्मनः परमात्मनो ह्यंशभूतत्वात् परमात्मतत्त्वनिर्देशको धर्म्मो न आत्मचिन्ताविहीनो भवेत्। अत एव कालवशादधःपतितस्य धर्म्मस्योत्कर्षार्थं यदि कोऽपि चेष्टेत, तत्रात्मनः कीदृगभ्यर्च्चनं भवेदित्यादि विचिन्तयेत्। अपि च यदि धर्म्मप्रतिष्ठापने आत्मप्रतिष्ठापनं न स्यात्, तदा धर्म्मप्रतिष्ठापनं मृषैव।

(ङ) ब्रह्मणाद्दय धर्म्मराज्येऽभिषिक्तैः स्वामि * गुरुभिरात्मीयजातीयानपरगुरूनर्द्धचन्द्रं दत्त्वा निःसार्य्य विषयिसिंहानामुपरि प्रभुत्वं स्थापनीयम्। अर्थबलाभावादुत्तमर्णादिभिस्तीक्ष्णदंष्ट्राग्रैर्दष्टा इतस्ततो धावन्तो ये केचन किञ्चिच्चातुर्य्यगुणोपेता रजोबहुले कुत्रचिद् धर्म्माधिष्ठाने प्रविष्टास्तत्रत्ये गैरिकरसपूर्णे महाभाण्डे पतिता गैरिकवर्णानुरञ्जितवसना एतां देवदुर्लभां स्वामिपदवीं प्राप्तुमर्हन्ति।

२। गार्हस्थ्यविषयकतत्त्वानि—

(क) क्लेशकरसत्कर्म्मकरणापेक्षया परेषां विशेषतः स्वप्रतिपक्षाणां वास्तवस्य कल्पितस्य वा दोषसमुच्चयस्य वदनशतेन परिकीर्त्तनं गृहस्थानां साधुत्वपरिचायकं भवति।

(ख) आत्मोन्नत्यै परप्रतारणं न दोषत्वेन गणनीयम्। तत्र विवेकभ्रूक्षेपस्तृणाय मन्तव्यः। तत्कृते यदि लोकविगर्हणं भवेत्, तत् केनापि धर्म्मव्यपदेशेन प्रशमनीयम्। तत्राप्यशक्तौ गुप्ताचरणविधिरवलम्बनीयः।

---

* "स्वामिजी" इति भाषा।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



(ग) व्यापकत्वं हि प्राधान्यकारणं भवति। अतो ब्राह्मण-क्षत्रियवैश्यशूद्रधर्म्मव्यापको ब्राह्मणादिवर्णचतुष्टयस्य यः कोऽपि वर्णो भवेत्, स इतरेषां श्रेष्ठो भवति। तथाहि शूद्रो यदि शास्त्रज्ञो राजोपाधिको विपुलशस्यशाली समुच्चराजपदाधिष्ठितो भवति, स ब्राह्मणेऽपि प्रभवति। एवं ब्राह्मणादीनां प्रत्येकं स्वस्ववर्णे कर्म्मव्यापकत्वात् श्रेष्ठम् भवति। तथाहि यदि कोऽपि ब्राह्मणो यजनाद्यतिरिक्तानि गुरुत्व-* दासत्व-वाणिज्य-घटकत्व-देवज्ञत्व-कुसीदजीवित्व-व्यवहारजीवित्वादीनि कर्म्माणि समाचरति, स केवलयजनादि-रताद् ब्राह्मणाच्छ्रेयान् भवति। एवमन्यत्र मन्तव्यम्।

(घ) आत्म-नामप्रतिष्ठायै पितृपुरुषाणां नामानि सर्वथा विस्मर्त्तव्यानि। यद्यपि कोऽपि पितृपुरुषनामरक्षणाय यतेत, आत्मनामरक्षणं तत्र परमलक्ष्यं भवेत्। एवं मातापितरौ प्रति वस्तुतः कदाचरणं विधाय सभासमक्षं गलदश्रुनयनं तयोर्महिमानं घोषयेत्, अथवा स्वविरचितेषु ग्रन्थेषु तावुद्दिश्य परमभक्तिसूचकमुत्सर्गपत्रं सन्निवेशयेत्। अपि च पितृविषयस्वत्वाधिकारे पितरौ बहुमानेन स्मर्त्तव्याः। पितृश्राद्धादिषु च पितृतृप्त्यर्थं न तथा यतेत, यथात्मतृप्त्यर्थम्।

(ङ) परकर्म्मणां सम्यग्विचारणमन्तरेण तत्र जुगुप्साव्यञ्जकं नासिकाकुञ्चनं गृहस्थानां परमविज्ञत्वप्रतिपादकं भवति। तथाहि ये यावदपरपाण्डित्ये नासिकां कुञ्चन्ति, ते तावद् विज्ञपण्डिता भवन्ति, ये यावदपररचनासु नासिकां कुञ्चन्ति, ते तावद् विज्ञसम्पादका भवन्ति। एवमन्यत्र।

(च) आत्मनोऽन्यत्वेन प्रतिभासनं गृहस्थानामपरविधं विज्ञत्वं भवति। तथाहि विज्ञो धनी अलीकदारिद्र्यं प्रदर्श्यात्मानं याचकादिभ्यो रक्षति, विज्ञो दरिद्रस्त्वलीकधनवत्त्वख्यापनेन नियतलोक-

* गुरुत्वपदेन दीक्षागुरुत्वं घटकत्वेन च विवाहघटकत्वं बोद्धव्यम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


निर्य्यातनादात्मानं रक्षति। अधार्म्मिकश्चात्मानं धार्म्मिकत्वेन विज्ञाप्य समाजे महाविघ्न इव परिचीयते।

(छ) आत्मनो विभववत्त्वेऽपि निर्धनस्यापि भ्रात्रादिज्ञातिशत्रोः कृते पैतृककर्णांशमात्रापरिहारो गृहस्थानामपरविधं विज्ञत्वं सूचयति। यतस्तत्परिहारे दायाधिकारासामञ्जस्यहेतुको धर्म्मभ्रंशः स्यादपि च शक्तिहीनत्वमल्पाधिकारनिमित्तकं प्रकाश्येत। एवं यदि कोऽपि तथाविधज्ञातिवैरिणाधिकृतस्य पैतृककर्णांशमात्रस्य कृते सर्वस्वपणो धर्म्माधिकरणं गच्छति स सामाजिकैर्विज्ञतमत्वेन परिगण्यते।

(ज) परितोषरहितस्तृणं हि संसारविषवृक्षस्य मधुमयं फलम्। अतो विज्ञमात्रेणैव तद्ग्रहणाय यतनीयम्। एतत्फलाधिकारिणं गृहस्थं न कदापि लक्ष्मीर्मुञ्चति।

(झ) साधारणकार्य्येषु स्वयमौदासीन्यमवलम्ब्य तत्कर्म्मानुष्ठानदत्तजीवितानामपरेषां छिद्राण्यन्विष्यात्मनः कर्त्तृत्वपरिचयं दद्यात्।

एतद्व्यतिरिक्तानि कतिचिन्नीतिविषयकतत्त्वानि प्राप्तानि। अङ्गीकृतराजकर्म्मणाविष्कारकेण स्वाधिकारवहिर्भूतानि तान्यभिनवान्यपि पूर्ववत् हेलया परित्यक्तानि। इति

---

## वार्त्ताचतुष्टये

### भवभूतिपरिचयः

( पूर्व्वानुवृत्तः )

लेखकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः

भवतु साम्प्रतं वयं कथं भगवन्तं शङ्करं भवभूतेरर्वाचीनं न मन्यामहे, तदेव दर्शयामः। मालतीमाधवे भवभूतिः "पदवाक्यप्रमाणज्ञः", इति आत्मानं विशेषितवान्। चतुःसूत्रीसमनन्तरमेव ब्रह्मसूत्रस्य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ईक्षत्यधिकरणस्य—"ईक्षतेर्नाशब्दम्" इतिसूत्रस्य भाष्योपोद्घाते भगवता शङ्कराचार्य्येण लिखितम्—

"तत्र पदवाक्यप्रमाणज्ञेनाचार्य्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वदर्शनाय वाक्याभासयुक्त्याभासविप्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्ते।" वयन्तु मन्यामहे यत् भवभूतिः शङ्करप्रयुक्तं पदवाक्यप्रमाणज्ञशब्दं स्वकृतौ व्यवहृतवान्। उन्मत्तप्रलपितमिदं मत्वा मामुपहसिष्यन्ति, नासीत् किं महाकवेः तादृशमपि रचनापाटवं येन स तादृशवाक्यांशं स्वयमेव विरचयितुं शक्नोति स्म, अथवा शङ्कराचार्य्य एव भवभूतिव्यवहृतं वाक्यांशं स्वग्रन्थे न व्यवहृतवान् अत्रापि किं प्रमाणमस्ति इति। सत्यं महाकवे रचनापाटवस्य अनेन लघुत्वं नापाद्यते, न चापि शङ्करे भवभूतिग्रन्थात् शब्दसङ्कलनं किमपि आश्चर्य्यम्। परमत्र सर्वमन्यथैव। असकृदधीतशास्त्राणामध्येतृषु कदाचित् दुर्णिवारः प्रभावः परिलक्ष्यते, येन महान्तोऽपि, स्वयमसामान्यरचणाचतुरा अपि अधीतग्रन्थानामंशविशेषान् स्वकृतौ समुल्लिखन्ति, अभ्यास एवात्र वलवान्। अभ्यासपारवश्येन भवभूतिरपि स्वकृतौ परकृतवाक्यांशान् अन्तरान्तरा निवेशयामास। अधस्तात् तस्य प्रमाणमुपस्थाप्यते।

महाकविकालिदासेन एकस्मिन् स्थाने सकृत् परकृतवाक्यं अपरिवर्त्त्य उद्धृतं यथा विक्रमोर्वश्यां राज्ञो मुखेन, राजा—"कालस्य कारणमिति" महाभारतीयशान्तिपर्वस्थितं वाक्यम्। भवभूतिरपि वात्स्यायनकृतकामसूत्रस्य कन्यासाम्प्रयोगिकाध्यायात् सकृत् कानिचिद्वाक्यानि समुद्धृतवान् यथा—"कुसुमधर्म्माणो हि योषितः सुकुमारोपक्रमाः। तास्वनधिगतविश्वासैः प्रसभमुपक्रममाणाः सम्प्रयोगविद्वेषिण्यो भवन्ति।' एवं किल कामसूत्रकारा मन्त्रेन्ति" इति मालतीमाधवे सप्तमाङ्के बुद्धरक्षितामुखेन। परं बहुत्र भवभूतिना परकृतवाक्यानि पदानि वा—अपरिवर्त्त्य ईषत्परिवर्त्त्य वा प्रयु-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्यानि, तानि तु केवलं निपुणैरेवोन्नेयानि। तेषां केषाञ्चिद् वाक्यानां पदानाञ्चात्र उदाहरणं दीयते।

१। "साक्षात्कृतधर्म्माणो महर्षयः तेषामनृतसाराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचित् व्याहन्यन्ते।" ( उत्तरचरिते सप्तमाङ्के।)

१। "साक्षात्कृतधर्म्माण ऋषयो बभूवुः।" (निरुक्ते १।२०।२)

"आप्तः खलु साक्षात्कृतधर्म्मा यथा दृष्टस्यार्थस्य चिख्यापयिषया प्रयोक्ता उपदेष्टा।" (न्यायदर्शनस्य आप्तोपदेशः शब्दः इति प्रथमाध्यायगतप्रथमाह्निकस्य सप्तसूत्रस्य वात्स्यायनभाष्ये।)

२। "नहि असाम्प्रदायिकानि अस्त्राणीति पूर्वेषामपि अनुशुश्रुम। (उत्तरचरिते षष्ठाङ्के।)

२। "इति शुश्रुम पूर्वेषां येनस्तद् व्याचचक्षिरे।" (केनोपनिषदि १।३)

३। अङ्गादङ्गात् स्रुत इव निजो देहजः स्नेहसारः। (उत्तरचरिते षष्ठाङ्के।)

३। अङ्गादङ्गात् सम्भवसि
हृदयादधिजायसे।
आत्मा वै पुत्रनामासि
त्वं जीव शरदां शतम्॥
(वेदमन्त्रः)

४। पुण्ये मतङ्गयज्ञाग्नौ
सख्यं निर्वृत्तमावयोः।
ममैव हृदयं तेऽस्तु-
तवैव हृदयञ्च मे।
(महावीरचरिते पञ्चकाङ्के।)

४। ॐ यदेतद्धृदयं तव
तदस्तु हृदयं मम।
यदिदं हृदयं मम
तदस्तु हृदयं तव॥
(वेदमन्त्रः)

५। अन्धतामिस्रा ह्यसूर्य्या नाम ते लोकाः तेभ्यः प्रतिविधीयन्ते, ये आत्मघातिन इत्येवम्

५। असूर्य्या नाम ते लोकाः
अन्धेन तमसावृताः।
तांस्ते प्रेत्याभिगच्छन्ति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ऋषयो मन्यन्ते। (उत्तरचरिते चतुर्थाङ्के।)

ये के चात्महनो जनाः॥ (वाजसनेयसंहितोपनिषत्)

६। अपूर्वपाषण्ड! काण्डीर! काण्डपृष्ठ! कथमस्यामपि दिशि प्रगल्भसे? (वीरचरिते तृतीयाङ्के)

६। काण्डपृष्ठाः श्रोत्रियाश्च
निष्क्रियाभि हवींष्यथ।
एकपङ्क्त्यामशिष्यन्ति
युगान्ते जनमेजय॥
(हरिवंशभविष्यपर्वणि २।७)

७। प्रचिनु चित्तप्रसादनोश्चतस्रो मैत्र्यादिभावनाः। प्रसीदतु ते विशोका ज्योतिष्मती नाम चित्तवृत्तिः। तत्प्रसादजं ऋतम्भराभिधानम्......इत्यादि। (वीरचरिते तृतीयाङ्के)

७। मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातः चित्तप्रसादनम्। (पातञ्जलदर्शने स,प, ३४)। विशोका वा ज्योतिष्मती (तत्र स,पा,३७)। ऋतम्भरा तत्र प्रज्ञा (तत्र स, पा' ४८)

क्वचित्तु भवभूतिना परकृतवाक्यं किञ्चित् परिवर्त्य गृहीतम्।

तद्यथा।

१। गुणाः पूजास्थानं गुणिषु नच लिङ्गं न च वयः। (उत्तर ४)

१। पदं हि सर्वत्र गुणैर्निधीयते। (रघुवंश ३)

२। कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरो। (मालती २)

२। पर्य्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः॥ (रघुवंश ५)

३। कटाक्षैर्नारीणां कुवलयितवातायनमिव। (मालती २)

३। कुवलयितगवाक्षं लोचनैरङ्गनानाम् (रघु ११)

४। तस्याः सखे नियतमिन्दुसुधा-मृणाल-ज्योत्स्नादि कारणमभून्मदनस्च वेधाः। (मालती १)

४। अस्याः सर्गविधौ प्रजापतिरभूत् इत्यादि। (विक्रमोर्वशी)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


| | |
|---|---|
| ५। शरीरनिर्म्माणसदृशः ननु अस्य अनुभावः। (वीर १) | ६। नह्याकृतिः सुसदृशं विजहाति वृत्तम्। (मृच्छकटिक ८) |
| ६। दुःखसंवेदनायैव रामे चैतन्यमर्पितम्। | ६। मोहादभूत् कष्टतरः प्रबोधः (रघु) |

एवं शतशः उदाहरणानि सन्ति वाहुल्यभयात् सर्वेषां तेषामुल्लेखात् विरम्यते।

अधुना भवभूते रूपकत्रयस्याङ्कसादृश्यमन्यकविग्रन्थांशैः दर्श्यते। यद्यथा—

| | |
|---|---|
| १। वीरचरिते सप्तमाङ्के विमानविहरणम्। | १। रघुवंशे त्रयोदशसर्गे विमानविहरणम्। भट्टिकाव्यस्य द्वाविंशसर्गस्य २४—२८ श्लोकाश्च। |
| २। उत्तरचरिते पञ्चमाङ्के चन्द्रकेतुविक्रमः। | २। पद्मपुराणस्य पातालखण्डे वर्णितः चन्द्रकेतुविक्रमः। |
| ३। उत्तरचरिते षष्ठाङ्के आग्नेयादीनामस्त्राणां प्रयोगः। | ३। किरातार्जुनीयस्य षोड़शसर्गे आग्नेयादीनामस्त्राणां प्रयुक्तयः। |
| ४। मालतीमाधवे द्वितीयाङ्के। | ४। वासवदत्तायाः उपाख्यानं वृहत्कथातः संगृहीतम्। |
| ५। मालतीमाधवे व्याघ्रयुद्धम्। | ५। मृच्छकटिके हस्तिविद्रावणम्। |
| ६। मालतीमाधवे पञ्चमाङ्के कन्यारत्नोपहारप्रदानम् वधसाधनञ्च। | ६। दशकुमारचरितस्य सप्तमाख्यायिका। |
| ७। मालतीमाधवयोः समागमः। | ७। दुष्मन्तशकुन्तलयोः समागमः। |

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



| | |
|---|---|
| ८। मालतीमाधवस्य नवमाङ्कः। | ८। विक्रमोर्वश्याः चतुर्थाङ्कः। |
| ९। उत्तरचरिते छायासीता। | ९। भासकृतस्वप्नवासवदत्ते स्वप्नदृष्टा वासवदत्ता। |
| १०। उत्तरचरिते अध्ययनविघ्नात् आत्रेय्या अगस्त्याश्रमगमनम्। | १०। स्वप्नवासवदत्ते अध्ययनविघ्नात् ब्रह्मचारिणः लावाणकं परित्यज्य मगधगमनम्। |

एवं बहुशः परं तत् सर्वं वाहुल्यभिया परित्यज्यते।

भवभूतेः परवाक्यग्रहणनैपुण्यं यद्दर्शितं तदेव प्रमाणयति यद् तेन प्रयुक्तः पदवाक्यप्रमाणज्ञः इति वाक्यांशोऽपि शाङ्करभाष्यादेव गृहीतः। उम्बेकाचार्य्यापरनामा मण्डनमिश्रः शास्त्रवादे शङ्करेण पराजितो भूत्वा तच्छिष्यत्वं स्वीचकार एतदपि शङ्करदिग्विजयादवगम्यते। अतोऽस्माकं सिद्धान्तः यत् शङ्करोऽपि भवभूतिसमकालीन एव। वामनकृतध्वन्यालोकलोचने उत्तरचरितस्य श्लोकः समुद्धृतः दृश्यते। वामनस्तु खीष्टीयसप्तमशताब्द्याः शेषभागे प्रादुरभूत्। अतः शङ्करेण भवभूतिगुरुणा, यशोवर्म्मणा च भवभूतिप्रतिपालकेन खीष्टीयषष्ठशताब्द्या वा प्रथमार्द्धे प्रादुरभावि। भवभूतिस्तु पद्मपुरे विदर्भान्तःपातिनि जातः मालवविषये पद्मावत्यां च शिक्षां प्राप्तः। ततस्तेन कुमारिलभट्टात् सम्यग् वेदान् अधीत्य यशोवर्म्मपरिषदलङ्कृता। उपरते च यशोवर्म्मणि तेन विद्वज्जनबहुला उज्जयिनी समाश्रिता। तस्योज्जयिनीवासकाले एव शङ्करस्य भाष्यादिकं प्रचारितमभूत्, सोऽपि तत्सर्वमधीतवान् परं वेदान्तस्य प्राचीनव्याख्यां मानयन् अपि तदायं शङ्करमतं सम्यक् श्रद्दधे न वेति महान् संशय इति। यतो दृश्यते हि मालतीमाधवे श्लोकः—

वह्निः सर्व्वाकारप्रवररमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


जनं विद्वानेकः सफलमतिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते ।

यस्य मन्ये प्रसङ्गसङ्गतार्थमन्तरेणापि गुणीभूतमर्थान्तरमस्ति, तेन तु विद्वान् इति पदेन शङ्कर एव आक्रान्तः। भवतु अनुमानमेवैतत्। उज्जयिनीस्थ एव भवभूतिः मण्डनापरनामा वीरचरितादि-रूपकत्रयं प्रणिनाय। तेषु च वीरचरितमादौ ततश्च मालती-माधवं ततश्चोत्तरचरितं प्रणीतम्।

कुमारिलात् पाठग्रहणात् प्रागेव स तस्य स्वसारमुपयेमे। इयमेव भारत्यभिधाना लीलापरनाम्नी भूतलावतीर्णा भारतीति सर्व्व-विद्यानिष्णातासीत्। प्रणीते तेन रूपकत्रये तस्य प्रौढ़ावस्थायां स सकलवादिवादं खण्डयता भगवता शङ्करेण स्वयमागत्य जितः, शिष्योकृतश्च। अस्मिन्नेव प्रसिद्धे वादे भारती मध्यस्था बभूव। शङ्करेण पराजितः स गार्हस्थ्याश्रमं परित्यज्य सुरेश्वर इति नाम जग्राह विविधवेदान्तनिबन्धांश्च प्रणिनाय। अस्य रूपकत्रये महा-कवेः अश्वमेधादिविधानपरिज्ञानवशात् पूर्व्वमीमांसायां वीरचरिते जामदग्न्योपदेशे सांख्ययोगयोः, आन्वीक्षिक्याम् अत्यादरदर्शनात् न्यायदर्शने वैशेषिके च, यत्र तत्र वैदिकवाक्यकलापानामुद्धारदर्शनात् वेदेषु, तथा कामशास्त्रादिषु च परमप्रावीण्यमवलोक्यते। अनेन विवर्त्तवादो वेदान्तप्रसिद्धः परिगृहीतः। अधुना स्वर्लोकप्राघूणिक-महामहोपाध्याय-सतीशचन्द्रविद्याभूषणपादानां मते शङ्करात् प्रागपि विवर्त्तवादोऽवर्त्तत। यतः तेनैव तत्प्रणीत—"भवभूतिः तस्य काव्यञ्च"ति शीर्षकवङ्गभाषामयग्रन्थे बौधायनकृतवेदान्तभाष्ये परम-प्राचीने विवर्त्तवादः समर्थित इति कथितम्। ये केचन विद्वांसः बौधायनकृतवेदान्तभाष्यमधीतवन्तस्तैस्तु एतदेव द्रष्टव्यं यत् भव-भूतिव्यवहृतदर्शनशास्त्रप्रसिद्धपारिभाषिकशब्दाः तस्मिन् वर्त्तन्ते

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न वा। तत्र प्रधानत इमे दर्शनशास्त्रप्रसिद्धाः पारिभाषिकशब्दाः भवभूतिप्रणीतरूपकेषु दृश्यन्ते। तद्यथा—

अभ्युपस्थानं, तटस्थः—( मा, मा १।१७ श्लोके )

प्रत्यभिज्ञा, उपाधिः—( मा, मा १।२७, १।२८ श्लोकयोः )

परिच्छेदातीतः, अविषयः—( मा, मा १।३३ )

परिच्छेदव्यक्तिः, निष्ठाशून्यं—( मा, मा १।३४ )

अनवग्रहः, वैकृतविवर्त्तदारुणः—( मा, मा १।४२ )

विवर्त्तमानाम् ( मा, मा १।४५ )

प्रत्ययोत्पत्तिसन्तानं, वृत्तिसारूप्यम्—( मा, मा ५म )

व्याघ्राघ्रातमृगीन्यायः—( मा, मा ५।२९ )

परां कोटिं—( मा, मा ६।३ )

निरवग्रहः—( मा, मा ९म )

सन्तानवाहिनी—( उ, च ४।८ )

ये शब्दा मालतीमाधवे प्रयुक्ताः कविना ते वीरोत्तरचरितयोः विशेषेण उत्तरचरिते भूयसा प्रयुक्ताः। अधुना वेदान्तिनः भवभूतेः कश्चित् परिचयं दत्त्वा विरंस्यतेऽस्माभिः। अनेन खलु वीरचरितोपक्रमे—

अथ स्वस्थाय देवाय नित्याय हतपाप्मने।
त्यक्तक्रमविभागाय चैतन्यज्योतिषे नमः॥

इत्युक्ता अभीष्टदेवः नमस्कृतः। अपि चायं अरुन्धत्या जनकं "परं ज्योतिस्ते प्रकाशताम् अयं त्वां पुनातु देवः परोरजा य एष तपति" इत्याशीर्भिः योजयति। वीरचरितस्य सप्तमाङ्के तु ज्योतिःशब्दस्य भूयान् व्यवहारः परिलक्ष्यते।

एको रसः करुण एव निमित्तभेदाद्-
भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान्।
आवर्त्तबुद्बुदतरङ्गमयान् विकारान्
अम्भो यथा सलिलमेव तु तत्समग्रम्। (उ,च,३।४७)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तथा—विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणेव विवर्त्तानां क्वापि विप्रलयः कृतः ॥ (उ,च,६।६)

एषा श्लोकद्वयी अत्युत्कटं वेदान्तगन्धं विकिरति। परमतोऽपि उत्कटतरमस्ति । तद् यथा मालतीमाधवे—

"यत् सत्यमधुना सन्दर्शनं नेति कल्पोऽपि विशेषः। मम हि सम्प्रति सातिशयप्राक्तनोपलम्भसम्भावितात्मनः संस्कारस्यानवरतप्रबोधात् प्रतायमानस्तद्विसदृशैः प्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानस्तन्मयमिव करोति वृत्तिसारूप्यतश्चैतन्यम्।" भामत्यादिष्वपि इतोऽपि दार्शनिकशब्दाड़म्बरप्रघटितनिविड़तरबन्धवद्ध वाक्यकदम्बकमस्ति वा न वेति मनांसि अस्मद्विधानां सुतरां संशेरते। अतः परमपि किञ्चिद् वक्तव्यमस्ति, यदि भवभूतिमण्डनमिश्रयोरभिन्नत्वं प्रतिपादितं भवेत्, तदा वश्यवाचः कवेः भवभूतेः—

"यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्त्तते।"

इति श्लोकार्द्धस्य सद्व्याख्या भवितुमर्हति। मण्डनपत्नी स्वयमवतीर्णा सरस्वतीति विद्यावत्तया लोके प्रसिद्धाभूत्। यदि इयं वाग्देवी इत्यस्य इयं प्रसिद्धा लोके सरस्वत्या अवतारत्वेन वाग्देवी भारती पत्नीत्वेन वश्येवानुवर्त्तते इति व्याख्या स्यात्, तर्हि कवेर्वाक्यानां पूर्व्वपरसङ्गतिर्भवेत्। अन्यथा पूर्व्वश्लोके "वाचममृतामात्मनः कला"मित्यभिधाय परश्लोके एव तस्या वश्यरमणीत्वेन कल्पयितुमन्याय्यत्वात्। यातु पण्डितैरुपेक्षितस्य मतस्य समाधाने प्राप्तं मया विश्वकोषात् महामहोपाध्यायसतीशचन्द्रविद्याभूषणस्य च भवभूतिशीर्षकग्रन्थात् पर्य्याप्तमुपकरणम्, अतः धन्यवादार्हौ मे विश्वकोषसंग्रहकारः स्वर्गत-विद्याभूषणमहोदयश्च। अधुना यद्यनेन निबन्धेन पण्डिताः परितोषं प्राप्नुवन्ति, तदैव चरितार्थो भविष्यति मे प्रयत्न इति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# वसन्तबान्धवम्

लेखकः—श्रीसातकड़िकाव्यस्मृतितीर्थः

कान्तकान्तविरहेऽतिदुःसहे काचिदिन्दुवदना नवाङ्गना ।
वामहस्तनिहितानना चिरं चिन्तितेव रहसि स्थिता बभौ ॥१

सा समीक्ष्य मधुमाससमागतं जातु मोहवशगा क्षितिं गता ।
तत्क्षणे च वरदुःखदायिनीं चेतनां गतवती शनैः शनैः ॥२

किन्तु नापदमलां स्वभावजां चित्तवृत्तिमबला पुरातनीम् ।
का हि कामकवलं समागता कामिनी न चलति स्वभावतः ॥३

इत्यचेतनमपि प्रचेतनं स्निग्धबन्धुमिव तं त्वरान्विता ।
प्रष्टुमीशकुशलात्मिकां कथां सादरं समुपचक्रमे तदा ॥४

यत्नतः प्रथमतस्तपस्विनी संनिरुध्य मनसोऽतिधावनम् ।
स्वागतादिवचनं निवेद्य तं पृच्छति स्म कुशलं सबान्धवम् ॥५

सर्व्वमत्रभवतो निरामयं वर्त्ततेऽपि सहबान्धवेन सन् ।
किं नु तेऽद्य गमनं निरत्ययं जातमेव मम नाथ सन्निधौ ॥६

चन्दनाद्रिपवनोऽपि सर्वतो भ्राम्यतीह भवता समं पुनः ।
पश्यति स्म मम जीवितेश्वरं कुत्रचित् किमिति कामिनं कदा ॥७

कीदृशोऽस्ति मम मानसेश्वरो वेत्सि तद् यदि तु सत्वरं वद ।
त्वां समीक्ष्य किमयं स्मरत्यदः स्वान्तराज्यमसमाप्तशासनम् ॥८

नो गतोऽसि यदि मत्प्रियान्तिकं गच्छ तत्र कृपया तदाशु तम् ।
ज्ञापयामि च वियोगिनीमिमां योगिनीमिव निमीलितेक्षणाम् ॥९

साधवो हि विनयेन याचिता जीवितेऽपि विगतस्पृहा इति ।
संवदन्ति विबुधास्तदद्य ते सन्निधौ मम पतिप्रयाचनम् ॥१०

त्वां प्रदीप्तमृतुराजमिष्टदं कीर्त्तयन्ति कवयः कथाविदः ।
राज्ञ एव सविधे प्रयाचनं सुप्रसिद्धमिति याच्यसे मया ॥११

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तन्नवन्तमुषसि प्रतिक्षणं काकपुष्टकुलमुक्तवाकुलम् ।
कूजितेन मधुरेण सादरं स्तौति वन्दिपुरुषो यथा नृपम् ॥ २

संनिपीय कुसुमासवं मुदा गुञ्जनेन मृदुनालिपङ्क्तयः ।
वेदयन्ति सदयं सदागतं त्वामलं समभिनन्दनं मुहुः ॥१३

जीर्णपर्णनिचयं परित्यजन् सज्जितोऽद्य नवपल्लवैस्तरुः ।
त्यक्तजीर्णवसनः प्रसाधनं नेच्छतीह वद कः सदागमे ॥१४

केऽपि पुष्पनिकरेण भूषिता व्यञ्जयन्ति भवदागमे मुदम् ।
तोषयन्ति च भवन्तमप्यलं पुष्पवृष्टिभिरिव प्रजा नृपम् ॥१५

पुष्पिताः सुललिता लताः सुखं मत्तभृङ्गनिवहेन चुम्बिताः ।
स्मारयन्ति सुतरां पतीनहो पान्थकान्तकुलकामिनीकुलम् ॥१६

पश्य मित्रमधुना रतीश्वरस्त्वां सभाजयितुमागतः स्वयम् ।
कोऽथवात्र निजबान्धवागमे नाभ्युपैति तरसा गतिं बुधः ॥१७

सत्कृतिश्च भवतो विधानतः संविधातुमयमिष्टबान्धवः ।
पौष्पमप्यनलजालवर्षुकं स्फालयन्निह चापमुद्यतम् ॥१८

संनिविश्य हृदयाटविं सुखं नाथहीनमबलाकुलस्य किम् ।
प्राणपक्षिपटलं समाकुलं सत्वरो मृगयितुं समिच्छति ॥१९

[युग्मकम् ।]

काननेऽत्र मृगयां यदीच्छसि पञ्चबाण ! शृणु मामकं वचः ।
अग्रतोऽस्य गहनस्य नायकं वेदयस्व सहसा समागतिम् ॥२०

अन्यथा त्वमबलावधेनसि दारुणे विनिपतिष्यसि ध्रुवम् ।
नायकोऽत्र समुपागमिष्यति वेत्स्यति तु भवतः कियद्बलम् ॥२१

दारुणो हि भवतः शितासुगो दुर्बलस्य मम जीवखञ्जनः ।
दुर्बले हि मृगया विगीयते कुत्सितस्य नृपतेरिव क्रिया ॥२२

मानिनीहृदयकानने घने तुङ्गदुर्गकुचशैलदुर्गमे ।
सन्ति मानसुमृगाः समुद्धताः हन्त कान्तकरुणाक्षणाशनाः ॥२३

तान् निहत्य मृगयाकृतार्थतामात्मनः सुमहतीं सुसाधयेः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मानिनीशपरितोषनात्तदा पुण्यमेव सुतरां भविष्यति ॥२४
विक्रमोपि वलिना विशोभते हे रतीश ! वलिनस्ततः सुखम् ।
शक्तिरत्र कियती परीक्ष्यते चान्यथानुतपनं भवेद् ध्रुवम् ॥२५
मामनङ्ग ! कृपणाङ्गनां प्रति हन्त शून्यहृदयामनागसम् ।
युज्यते न धनुषः समुद्यमः कः करोति ननु पिष्टपेषणम् ॥२६
त्वां समीक्ष्य सहसा समागतं दूरगञ्च परिचिन्त्य वल्लभम् ।
मानसं विगतधैर्यमद्य मे प्राप्तमेव शरणं तदन्तिकम् ॥२७
किं करोमि शरणं श्रयामि कं क्व प्रयामि दहनं विशामि किम् ।
चिन्तयेत्थमधुना समाकुला माधवाङ्ग नितरां ज्वलाम्यहम् ॥२८
हे वसन्त ! विपदीह यद्भवान् स्वागतः सपदि तत् त्वया समम् ।
मित्रभावमियमिच्छति त्विमां मात्र मित्र ! रमणोत्युपेक्षताम् ॥२९
वान्धवो हि विपदागमे स्वयं नित्यमेत्य शरणं भवेद्बुधः ।
इत्यमस्ति चिरवाद इत्यतो वन्धुकृत्यमिदमद्य साधयेः ॥३०

---

## किमहं हतभाग्यः ।

लेखकः—श्रीसिद्धगोपालकाव्यतीर्थः ।

शिरीषवृक्षस्य कस्यचिच्छाखासु संलीना कोकिला कलं चुकूज, मध्याह्नकालिकप्रचण्डातपसंतप्ता च काचिद्धरिणी तरुमूलमाश्रित्य स्तनन्धयं स्वशिशुं स्तन्यं धाययति स्म ।

पक्षिणीं वीक्ष्य हरिणी प्रोवाच—“सुभगे, धन्यासि त्वं पीयूषमिव वर्षति तव मधुरगानं श्रोत्रेषु, तच्छ्रावं श्रावं म्लानमपि चेतो विकसति । वायोरपि तीव्रतरा ते गतिः । यथेच्छं नभसि विहरसि वा, भूतलेऽवतीर्य सुमधुरं जनमनोमोहकं गायसि वा । मेघैरुड्डयनस्पर्धां कुर्वाणा गिरीन् महासागरांश्चातीत्य देशदेशान्तरेषु द्वीपद्वीपान्तरेषु चाटाट्यसे । अहं तु भूतल एवावरुद्धा सर्वमपि जीवनमत्रैव यापयिष्यामि ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तच्छ्रुत्वा परभृता बभाषे—नानादेशेषु विचित्राणां वस्तूनामवलोकनं महदानन्दसन्दोहविषयो नूनम्। परं यदाहमत्र स्थिता त्वदीयशिशुं स्वमातरं वत्सालिङ्ग्य रक्ताभेन मनोहरेणौष्ठकयुगलेन तव स्तन्यं धयन्तमवेक्षे तदा विचारयामि पश्चतो म इम उत्पाद्य सदैवं भूतलं एवावस्थिताहं ब्रह्मानन्दसहोदरं दिव्यं रसमिमं सकृदप्यास्वादयेयं सकलमपि जीवितफलमवाप्नुयाम्।

वातपूरितशाखान्तरालजेन स्वनेन वनस्पतिर्जगाद—हरिणी कथमधन्या। शिरीषहतक एव दुर्भगतमः। प्राणिषु जवनतया खलु त्वम्, प्रातरेकत्र सुप्तोत्थिता यदा वेगेन धावसि तदा पृथिवी तव चरणयोरधस्तादुत्पततीव, सायञ्च त्वं योजनानां शतेन विप्रकृष्टे देशे दृश्यसे। शिरीषस्तु वर्षाणां शतेतीति यत्र तदीय-बीजमङ्कुरितम् तत्रैव वार्द्धक्यं यापयति। प्रभञ्जनो मम शाखाः कम्पयति, मामात्मना सह नेतुं यतते ननम् परं समान्तत्रैव त्यक्त्वाग्रे गच्छति, कलं रुवन्तो विहगा मामतिक्रम्योत्पतन्ति, प्रातः सायञ्चान्वहं पशवः पानीयं पातुं मम समीपतः सुन्दरं सरोवरमभिगच्छन्ति। वसन्तमनु ग्रीष्मो, ग्रीष्ममनु वर्षाः, तास्वनु शरच्छरदमनु हेमन्तो, हेमन्तमनु शिशिरश्च, शिशिरमनु पुनर्वसन्त इति ऋतवः क्रमेण यान्ति पुनः पुनश्च तामेवं परम्परामनुसरन्ति। एवं शतकृत्वस्ते व्यतीयुः परमहं रेखामात्रमपि न व्यत्येमि, मम जन्मशय्यैवानन्तसमाधिस्थले परिणंस्यति।

ततो वृक्षमूलाद्विनिर्वदियाय—तत्र स्थितायां पाषाणशिलायां बद्धेन बालुकाकणेन स्व-पाषाणमयकारातोऽवोचि—कथं खलु शोच्याः श्रीमन्तः। सर्वेऽपि चेतना यूयम्। मनोहर अनोकह, वर्षे वर्षे चेतोहराणि सुन्दरामोदयुक्तानि सुकुमाराणि कुसुमानि जनयसि, मधुकरास्तवोपरि कलं कूजन्ति मलयानिलेन रभसे, कलरवा विहगा अनुदिनं त्वामाश्रयन्ते। एवं स्थिते कथं खलु दुर्भाग्यस्त्वम्, अहमेव वराको हतभाग्यतमः।

ततो वनस्पतिरुपसंहरन् प्रतिबभाषे—त्वमचेतनोऽहञ्चेतनः, त्वं जीवसीति सत्यम्। परं जीवनस्य छाया मृत्युरपि मामेव कवलीकरोति। ममापत्यानि मनोहराणि कुसुमानि प्रतिवत्सरं म्लातुमेव जायन्ते। यत्र तानि गतानि, अहमपि सद्य एव तत्र गन्ता। त्वन्तु प्रलयकालिकान्त्यरवे रश्मिभिर्विद्योतिष्यसे।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# नलदमयन्तीयम्

( पूर्व्वतोऽनुवृत्तम् )

नलः—अहो न्यायदर्शिता किरातराजस्य! अहो दौर्भाग्यञ्च दुष्टवृत्तस्य किरातहृदयस्य ?

विदू—मा तावदनयोरनुशोच्यतां दौर्भाग्यम् ।

नलः—कथमिव ?

विदू—यतः खलु अयं समादिष्टः प्राणान्तको दण्डस्ताभ्यामतिक्रान्तः ।

नलः—किं पलायनेन आत्मा रक्षितः ?

विदू—कथमेवं प्रभाविणः किरातराजस्याधिकारे सम्भवेत् ।

नलः—तत् कथमन्यथा ?

विदू—ममैव प्रियसख्या कृपया तयोः कातरवाक्यविमनायितया सम्प्रार्थितस्य किरातराजस्य प्राणान्तकदण्डप्रत्याहारेण ?

नलः—अहो दयालुता देव्याः !

आत्मत्राणं याचमाना यदन्ते जाता देवी निष्फलप्रार्थनादौ ।
तत्प्राणार्थं प्रार्थितो यत् किरातः सत्यं तस्या मार्दवं तत्र हेतुः ।

ततस्ततः ?

विदू—ततः कियत्कालानन्तरमेव बहुभिः किरातैरनुसृतेन तेन किरातपतिना प्रियसखी मे विदर्भान् प्रापिता इति ।

नलः—प्रिये ! दिष्ट्या वर्द्धसे, यदेष जात्या किरातोऽपि तथा साधुवृत्तं दधानो देव्या अनुकूलतया लब्धः ।

दम—सर्वमेवेदं प्रभावविलसितं त्वदेकचरणसेवायाः !

इन्द्र—तात, किरात इति भीमा जातिरियं, तत्रापि एवं माहात्म्यम् ?

नलः—वत्स, न जानीषे, गुणप्रकर्षे जातिरिति नोपयुज्यते, पश्य,

न केवलं जातिकृता महात्मता
यन्नीचजातेरपि तस्य साधुता ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सनातनो गोपकुले समुद्गतो
दहाह लोकस्य दुरन्तदुर्गतिम् ॥

अथ वयस्य, क्व साम्प्रतमसौ मे अकारणबान्धवः किरातराजः ?

विदू—स हि महात्मा तत्रभवता विदर्भाधीश्वरेण याचितः सुतरां राजपरिजनैः सत्क्रियमाणोऽद्यापि अस्यामेव नगर्य्यां प्रतिवसति ।

नलः—अहो सुसमीच्यकारी तत्रभवान् भीमः, येन महोपकारमनुष्ठितवतः किरातस्य नीचजातिमभिसन्धाय तं वाङ्मात्रसत्कारेण न विसर्जितवान् इति ।

दम—आर्य्यपुत्र, को वा विस्मयस्तावन्मात्रेण, पित्रा तत्र परं प्रियसुहृद्वृत्तिरनुगृहीता ।

नलः—युक्तमेव समीहितं महाराजस्य ।

इन्द्र—तात, स मे द्वितीयो वृद्धमातामहः । मयि तस्य स्वस्मिन् इव दौहित्रे परमः स्नेहः

नलः—देवि, दमयन्ति, वयस्य मन्दारक, नूनं ममाप्येष महाराजो भीम इव मानं लम्भयितव्यः ।

दम—अनुगृहीतास्मि ।

विदू—एवमेव युज्यते, यतः तेन प्रियसखी मे धर्म्मपुत्रीति व्यपदिष्टा तयाप्येष धर्म्मतात इति ।

प्रविश्य कञ्चुकी—महाभाग, महाराजो भीमः समाज्ञापयति यथा सकलराजन्ययक्षगन्धर्वादिसमक्षं सभायां सपुत्रकलत्रमित्रस्य भवतो दर्शनमिच्छामीति, तत्रभवता अयोध्याधिपतिना ऋतुपर्णेनापि भवान् एवं सन्दिष्टः ।

नलः—वयस्य, किमिदम् ?

विदू—नासमीच्यकारी तत्रभवान् भीमः । तद्यथादिष्टमनुष्ठीयताम् ।

नलः—जयन्धर, विज्ञापय एषोऽहमनुपदमादेशं पालयामीति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

कञ्चुकी—यथाज्ञापयति महाभागः। [ निष्क्रान्तः ]

नलः—देवि, महाराजस्य सभायामस्मदुपस्थापने कीदृशं निमित्तं सम्भावयसि ?

दम—राजवृत्तं राजान एव कल्पयितुमर्हन्ति। तदिदं विदर्भाधिपतिवृत्तं निषधाधीश्वराणामेव कल्पनाविषयः।

नलः—( दीर्घं निश्वस्य ) देवि, अतीतं विस्मरसि, अद्य पुष्करो राजेश्वरो निषधेषु।

दम—( दीर्घं निश्वस्य ) आं एवं,

नलः—अथ वयस्य, त्वं तत्र कीदृशं निमित्तं सम्भावयसि ?

विदू— अहं ? ( विचिन्त्य ) अहं पुनः सम्भावयामि, यथा समुपस्थिता भोजनवेलेति महोत्सवानुभवार्थं सर्वैः सम्भूय अत्र भोक्तव्यम् इति।

सर्वे—( हसन्ति )।

नलः—भवतु यथा तथा वा, "आज्ञा गुरूणां ह्यविचारणीया" इति। तदेहि तत्रैव गच्छामः। [ परिक्रम्य ] अये इयमसौ विदर्भसभा, यत्र हि—

एते राजन्यवर्गाः सुरसमितिरियं नागलोकस्तथायं
गन्धर्वाः किन्नराश्च प्रविततरुचयः सिद्धसाध्यादिकाश्च।
सर्वे योग्यासनस्थाः स्थिरमतिगहनाः शोभमानाः पुरस्तात्
अन्योन्यस्पर्द्धिरूपद्रविणपरिकराद् विस्मयं संश्रयन्ते॥

अपि च सिंहासनं परिजहद् गुरुरेष भीम
आयोध्यिकक्षितिभृतानुसृतः सभायाम्।
सम्मानपूर्णवचनैरनुनीय सर्व्वान्
गर्व्वं विहाय निजगौरवमातनोति॥

भवतु यावदत्र प्रविशामि। [ परिक्रामन्ति ]

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ततः प्रविशन्ति विदर्भसभायां भीमः ऋतुपर्णः
अन्ये च विदेशागता राजादयः )

भीमः—नानादिग्देशागता राजानो देवप्रभृतयश्च ! कृतकृत्याः किल विदर्भा यदेवमत्रभवन्तः सम्मिलिताः, तत् किमपरं कृतज्ञता-मन्तरेण विदर्भप्रतिनिधिरद्य विज्ञापयतु, कुतः ?

येषां दर्शनमुत्तमेन तपसा लभ्यं सुराणां जनैः
गन्धर्वाः स्वरसञ्चयस्थितिविदो ये स्वर्गसिद्धाश्चिरं
ये यक्षा धननायकस्य विषये ये चापरेऽनुत्तमाः
ते सर्वे परमेण पुण्यमहसा भीमेन लब्धाः पुरः ॥

सर्वे—अलमलमत्यादरेण, धन्यः खलु महाराजो भीमः ।

भीमः—अयि भोः पारिषदाः ! भवतां प्रीतिरेव तथा मां प्रत्याययति। यद्भवतु तद्भवतु, अहमत्र किञ्चित् प्रवक्तुमिच्छामि ।

सर्वे—निराबाधं प्रस्तूयताम् ।

भीमः—अस्त्येव विदितो भवद्भिः सुविश्रुतयशा निषधेश्वरो मदीय-जामाता ?

सर्वे—अथ किम्, को वा तं महात्मानं न जानाति ?

भीमः—अस्त्येतदपि विदितं महाभागानां यदेष प्रतिकूलदैववशात् राज्यपरिभ्रष्टः कानने प्रस्थितः स्वीयां धर्मपत्नीं निःसहायां विसर्ज्य क्वापि गत इति ?

सर्वे—सर्वं जानीमः, तदपि जानीमो यथेयं पुनर्विदर्भान् परिप्राप्तेति ।

भीमः—सेयं मे दुहिता दमयन्ती कुतोऽपि प्रच्छन्नस्वरूपं पतिं पुनः प्राप्तकामा व्याजेन पुनः स्वयंवरमुद्घोषितवती ।

राजानः—( परस्परं मुखमवलोकयन्ति ) अये किमिदम् ?

ऋतुपर्णः—सत्कुलप्रसूताः, प्रभूतबलवाहना राजानः ! भाग्यवशात् अयोध्याजानपदानां तावत्कालं सार्वभौमो नलः पुण्यबहु-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


लायामयोध्यायां स्थित्वा मयैव साकमत्र प्राप्तः, तदिदानीं अनुमन्यतामस्य धर्म्मदारसमागमः !

सर्वे—अयि सार्वभौमो नलः पुनः प्राप्तः, प्रियं नः प्रियं नः ।

ऋतुपर्णः—तदेष तत्रभवान् उत्तीर्णकलिप्रभावः पुनरधिगतभूरितेजाः सार्वभौमो नलः स्वपुत्रकलत्रमित्रसहित इत एव अभिवर्त्तते, य एष—

संस्मृत्य धर्म्मवनितापरिहारदोषं
लज्जाभरेण मलिनाननमितोत्तमाङ्गः ।
धृत्वा करेण निजमात्मजमिन्द्रसेनं
प्राप्तो महाव्यसनमुक्त इवांशुमाली ॥

सर्वे—अयि एष सार्वभौमो नलः प्राप्तः, प्रियं नः प्रियं नः ।

( ततः प्रविशति यथानिर्दिष्टो नलः )

ऋतुपर्णः—( दमयन्तीं दृष्ट्वा ) अहो पतिव्रताया वत्साया दमयन्त्याः समवस्था ! इयं हि—

उत्कण्ठाविवशा वियोगवशतो दीनां दशामास्थिता
भूषाच्छेदविनीतमूर्त्तिरनघा मन्दक्रमा लज्जया ।
एकामेव विलम्बितामनुपदं वेणीं दधाना सती
धारासिक्तविशीर्णपुष्पवलया वल्लीव संलक्ष्यते ॥

नलः—[ स्वगतम् ] लज्जितोऽस्मि विदितनिजापराधो यथापूर्वं निःसङ्कोचमुपगन्तुम्, अथवा का गतिः ? [ परिक्रामति ] किं वा मन्यते परिषत् ?

सर्वे—विजयतां विजयतां कलिप्रभावमुक्तः सार्वभौमो नलः ।

नलः—अहो प्रत्युज्जीवितोऽस्मि, यत् सर्व्वैरेव देवदोषो विज्ञातः, तत् पुरुषदोषान्मुक्तोऽस्मि ।

सर्वे—अहो पतिव्रतायाः प्रभावः ! अहो नलस्य धर्म्ममहिमा !

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नलः—(उपसृत्य) तात, अभिवादये, ( ऋतुपर्णमुपसृत्य ) महाराज, अभिवादये, वञ्चनाकृतम् अपराधं मे क्षन्तुमर्हति महाराजः।

ऋतुपर्णः—महाराज, नल, अलमभ्यर्थनया। गुरवः स्निग्धेषु गुणमात्रदर्शिनो भवन्ति, अपि च विज्ञातमिदमस्माभिः,—यत्

कलेरेव प्रभावेण सर्व्वमाचरितं त्वया।
प्रदोषे पद्मसङ्कोचः किं पद्मस्यापराधतः ?

अत्र भवानेव क्षमापणीय ऋतुपर्णेन।

नलः—कथमिव ?

ऋतुपर्णः—वत्स, नल, अत्रापि वक्तव्यमेव ? तथाहि—

सामन्तलक्षमुकुटानि पदीपकण्ठे
यस्य प्रसादलवलाभकृते नमन्ति।
तस्यैव सूतपदवीप्रतिपादनेन
प्राप्तापराधमधुना स्वमनुस्मरामि॥

नलः—महाराज, किमिवं मामपराधिनं करोषि, त्वमेव मे समाश्रयस्तदानीं निरालम्बस्य !

इन्द्र—तर्हि एतावत्कालं वृद्धमातामह एव पितुर्मे प्रच्छादकः।

नलः—वत्स, न केवलं प्रच्छादकः, परं जीविकाप्रदानेन जीवनदातापि

दम—आं अन्यथैव शिशोरिन्द्रसेनस्य वचनं गृहीतमार्य्यपुत्रेण !

इन्द्र—आम् एवम् ?

ऋतुपर्णः—वत्से, दमयन्ति, वत्सनलेन परवृद्धया महती कृतज्ञता प्रस्तूयते, त्वमपीदानीं तथा कुरुष्व, मन्ये इतःपरं तव परिपालनेन प्रियसुहृद् भीमोऽपि युवाभ्यामभिनन्दनीयः!

दम—( सलज्जम् ) काहमबला शुभाशुभनिर्णये।

नलः—अहो विशेषेण अधिक्षिप्तोऽस्मि। (प्रकाशम्) महाराज,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



(अर्द्धोक्ते) तात, पुत्रचापलं चन्तुमर्हसि, न तावत् किञ्चिदभिसन्धाय मया उक्तम्।

ऋतुपर्णः—तदेहि गाढ़परिष्वङ्गेन दण्डन्ते धारयामि। (परिष्वजते)

भीमः—भोः भोः पारिषदाः! एष सार्व्वभौमो नलः पुनरपि सौभाग्यवशात् परिप्राप्तो वसुन्धरया, तदत्रैव विदर्भराजसिंहासने वैदर्भीसहितस्य तस्य साम्राज्याभिषेकं कर्त्तुमिच्छामि, तदिदमनुमन्यताम्।

सर्व्वे—विजयतां विजयतां सार्व्वभौमो नलः। प्रियं नः प्रियम्।

विदूषकः—(प्रहर्षं नाटयति)।

भीमः—वयस्य, ऋतुपर्ण, अत्र न कोऽपि प्रतिपन्नः, तदनुभूयतामस्माभिरिदानीमभिषेकमहोत्सवः ?

विदू—मन्दारक, अपि सुधासागरे पतितोऽसि, यदेवं मुहुरपरिमितं सुधाप्रवाहं पिबन् अवशतामात्मनः प्रतिपद्यसे, मूर्ख, एष ते नृत्यगीतयोरवसरः, उत्तिष्ठ, उत्तिष्ठ। (हर्षं नाटयति)

नलः—तात,—

भीम. ऋतुपर्णस्च—वत्स, कथ्यतां किमिव बिवचणीयम्, अलं शङ्कया।

नलः—तात, अत्र अहमेव प्रतिपन्नः—

दम—अये, सुष्ठु हृदयमार्य्यपुत्रस्य।

सर्वे—(सविस्मयाः शृखन्ति)। कथमिव ? कथमिव ?

भीमः ऋतुपर्णस्च—वत्स, किमभिसन्धत्से ?

नलः—आर्य्याः, साम्राज्यमिदं द्यूतविनिर्जितं पुष्करस्य मम भ्रातुः, तदत्र स एव प्रभुः प्रदाने, कथमहमात्मना परस्वमपहरेयम्, अत एवाहं प्रतिपन्नः।

सर्वे—नहि नहि सार्वभौमो नल एवास्मासु प्रभवति, न वयं पुष्करस्य अधिकारम् अनुमन्यामहे।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


विदू—वयस्य, किमेवं प्रलपसि ? द्यूतच्छलेन पुष्करो राज्यं परिगृहीतवान्, अस्यापि ग्रहणे दोषं शङ्कसे ?

नलः—वयस्य, सूक्ष्मपर्य्यायं धर्मं न जानासि, एवं कृते राजधर्मो विपन्नः स्यात् !

विदू—राधधर्म्मं भवद्विधा राजान एव जानन्ति, कोऽहम् आधूनब्राह्मणस्तस्य निश्चये ? [ सासूयमिव परावर्त्तते ]

सर्वे—[विस्मयं रूपयित्वा ] अहो धर्म्मनिष्ठता नलस्य ! अन्यथा को वा सति सामर्थ्ये स्वकीयसाम्राज्यग्रहणे प्रतिपन्नतामाचरेत् ?

इन्द्र—तात, अथ यदि साम्राज्यमिदं पितृव्यस्य, तर्हि अस्माकमेव !

नलः—वत्स एवमिदम् ।

भीमः—ऋतुपर्णस्य—अहो शैशवौदार्य्यम् !

प्रविश्य पुरुषः—महालाअ, एसो को वि अणदिप्पकिट्ट-पलिच्छअपलिहिदो भद्दपुलिसो पलिहालभूमिए उपट्ठिदो, ता दाणिं महालाओ प्पमाणं ।

नलः—अथ केनैतेन भवितव्यम् ? अथवा नूनमयं विमुक्तमोहतिमिरो भ्राता मे पुष्करो भविष्यति ! तात, नूनमयं भ्राता मे पुष्करः प्राप्तो भवेत्, तदादिश्यतामस्य सभाप्रवेशः ।

भीमः—तथा—( वक्तुमुपक्रमते ) ।

विदू—महाराज, मा तावदस्मिन् उत्सवसमये दुर्जना द्रष्टव्याः ।

नलः—वयस्य, नहि पुष्करं मे लेशतोऽपि दूषयितुमर्हसि, यतः सर्वमिदमतीतं वस्तु कलिप्रभावपराभूतेनैव विहितमिति । अद्य तु तमन्यथैव द्रक्ष्यसि ।

विदू—द्रक्ष्यामीति यत् सत्यं, किन्तु न तस्य भावान्तरं, परं तवैव दौर्भाग्यात् दुरन्तमवस्थान्तरम् । [ कोपं नाटयति ]

नलः—वयस्य, मा शङ्किष्ठाः ।

विदू—किमयमपि गूढ़ो राजधर्म्म एव, यदत्रापि न वयं किञ्चन जानीम इति ?

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# वल्लीविलासम्

( पूर्वतोऽनुवृत्तम् )

लेखकः—स्वर्गतः रामसत्यकाव्यव्याकरणवेदान्तदर्शनतीर्थः।

सृष्टा वल्ली सरसिजभुवा प्राणिनां प्रीतयेऽस्मिन्
अस्यां सर्व्वः प्रभवति परं न त्वदीयोऽधिकारः।
यस्या गन्धं मनुजनिवहो देववृन्दं प्रसूनं
भुङ्क्ते नित्यं मधु च मधुपः कोमलाङ्गञ्च वृक्षः ॥२४॥

हेयं लोके विपदि सततं निर्म्ममत्वं सुधांशुः
एनामार्त्तां सुखकरकरैः सेवमानोऽत्र मानम्।
हे शीतांशो सुभग भगवन् विश्वशान्त्याकराय
तुभ्यं देव प्रणतशिरसो मे त्रिसन्ध्यं नमोऽस्तु ॥२५॥

योऽस्या गन्धो द्रुम। कुसुमजः शोविकाशैकमूलं
तं सर्व्वस्वं हरति पवने त्वं कथं मौनमासीः।
धिक् ते रम्यं विटपनिवहं हन्त वाह्यमानम्
एनं येन व्यसनसमयेऽप्याश्रितो धीरभावः ॥२६॥

किं भोः स्वैरं कथयसि वल्ली गन्धवाहोतिमात्रं
मद्विध्वंसत्वमसिममहं केन रुन्ध्यामयोग्यः।
मैवं मंस्था भुवनपितरं दीनबन्धुं दयालुं
शश्वत् क्लेशप्रशमनविधौ तं सहायं न वेत्सि ॥२७॥

तत्कारुण्यं यदि नहि भवेत् साधनानां प्रधानं
किं शक्तः स्यादमृतकिरणः सागराकर्षणादौ।
यस्याम्भोधेरमलसलिलेऽनन्तशीतांशुविम्बा-
न्यालोकयन्ते तरुवर मिथः स्पर्शहीनानि नूनम् ॥२८॥

क्वासौ ज्योत्स्ना विबुधसुलभा क्वापि पद्मो तथापि
यन्माहात्म्यात्जनितमनयोः पेयपायित्वमेव।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्वं विश्वेशं सकृदपि समास्मृत्य भक्त्या जगत्यां
के स्वं कार्य्यं धरणिरुह नो लीलया साधयेयुः ॥२६॥

इत्थं भृङ्गे निगदितवति श्रीरसालाधिराजः
स्मृत्वात्मीयं चरितमसकृद् व्रीड़याभूद्विनम्रः ।
नैतच्चित्रं खलु सुमनसो रीतिरेषा स्वकार्य्यं
दृष्ट्वा शिष्टानभिमतमहो यत् स सन्तापमेति ॥३०॥

अत्रान्तरे विधुमरीचिनिराकृतार्त्तिः
क्षौणीरजोमलिनदेहलता लतासौ ।
मूर्च्छावसानमवलोक्य गतं विकाशं
वायूपमर्दजनितासुखमाप भूयः ॥३१॥

भृङ्गोऽयतां हृदयमन्दिरचन्द्रलेखाम्
उद्वीक्ष्य मोहतमसा रहितां प्रहृष्टः ।
चूतप्रमाणितवचःप्रचयस्तदानीं
कर्णामृतं विशदवर्णमुवाच किञ्चित् ॥३२॥

हे शोभनाङ्गि सति विस्मर विस्मरत्वं
निर्य्यातनार्त्तिमखिलां नयनाभिरामे ।
दासे त्वदीयकरुणालवमात्रकामे
नास्मिन् कदापि भविता विफलो निदेशः ॥३३॥

त्वं वल्लि मे सरलतामयि ! शान्तिवल्ली
मन्मानसस्य सुभगे ! नलिनी त्वमेव ।
यद्गुञ्जनं कविगणा मुहुराद्रियन्ते
प्राणप्रिये ! तदपि मे तव कीर्त्तिगीतम् ॥३४॥

बद्धोऽस्मि ते गुणगणैरमलैः सदाहम्
एतां शुभे मलिनतां ननु मुञ्च मुञ्च ।
मन्दस्मितेन ललितेन विलोकितेन
स्वाभाषितेन च लते चरितार्थयैनम् ॥३५॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सा सुन्दरी मधुकरी रसिकापि कान्ते
त्वत्प्रेमपूर्णहृदयस्य न मे सुखाय ।
छायां समाश्रितवतो हरिचन्दनीयां
प्रीतिप्रदा भवति किं कदली कदापि ॥३६॥

धन्योऽहमद्य मधुरप्रतिमे त्वदीया-
माज्ञामवाप्य लतिकाकुलरत्नभूते ! ।
प्रत्यागतं सपदि मां पवनोपकण्ठात्
जानीहि हन्त कृतकृत्यमनन्तकान्ते ॥३७॥

बन्धो ! रसाल ! किल ते विनिवेदनं मे
बाला लतेयमबला भवतावनीया ।
एषोऽञ्जलिः सविनयः सविधे तवाद्य
विश्रम्भपूर्णहृदयस्खलितोऽहमेषः ॥३८॥

तत् क्षम्यतां लतिकया विहितं यदागः
कोपो न ते समुचितो रसिक ! प्रियायाम् ।
देवो जगत्पतिरनारतमेव वल्ली-
सङ्गं त्वदीयमविनाशिनमातनोतु ॥३९॥

भव भव लतिके त्वं प्रेमरम्या रसाले
परमसुकुलमाला लोभनीया विशाला ।
उरसि शिरसि च त्वामावहन्तं नितान्तं
कुरु कुरु निजकार्य्यैरार्य्यमेनं प्रशान्तम् ॥४०॥

भ्रमरवचनमित्थं श्रोत्रपेयं निपीय
प्रमुदितहृदयौ तौ वल्लरीचूतराजौ
मधुकरवरमग्र्यं गाढमालिङ्ग्य गन्धा-
हरणकृतदृढाशं प्रेषयामासतुस्तम् ॥४१॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


इदानीं कविरुपसंहरति—

जयति जयति चित्तं प्रेमिकाणां विचित्रं
जयति जयति पुण्यं प्रेमपूरप्रसारः ।
जयति च मधुरत्वं तस्य सर्व्वावगाहि
जड़गणमपि शक्त्या यद्विलोलं करोति ॥४२॥

---

# शिवसन्तोष-स्तोत्रम्

( पूर्वतोऽनुवृत्तम् )

लेखकः—कविराज-श्रीश्यामादासवाचस्पतिः

विश्वं विसृज्य विषमं विषमात्मभोगं
पृथ्वीजलानलमरुत्परमाणुकानाम् ।
संयोजनेन कुशलिन् ! प्रभवस्यनाद्य !
त्वं कार्य्यकारणविधौ जगतो निदानम् ॥ ५ ॥

विप्रतिपन्नमतं निरस्य ईश्वरस्यारम्भवादरीत्या जगत्कर्तृत्वमुपपादयितुमाह—विश्वमिति। हे कुशलिन् ! याथार्थ्येन जगन्निर्म्मितिनिपुण ! जगन्निर्म्मित्यभिसन्धातः इति यावत् । पृथ्वीजलानलमरुतां क्षित्यप्तेजोऽनिलानां ये परमाणुकाः परमाणवः अतिसूक्ष्माः चरमविशेषांशा इति यावत्, "अणुर्व्रीहिविशेषे स्यात् पुंसि सूक्ष्मेऽभिधेयवत् ।" इति मेदिनी । तेषां संयोजनेन विभिन्नसम्बन्धकरणेन, विषमं विसदृशं, विषमात्मभोगं विषमाः विभिन्नाः अतुल्या इति यावत्, आत्मनो भोगाः सुखादिसाक्षात्काराः यत्र तादृशम्, एतेनास्यादृष्टहेतुकत्वं "प्रत्यात्मनियमाद्भुक्तेः" इत्यादिकया दिशा प्रतिपादितम्, प्रतिपादितञ्च जगत्स्रष्टावदृष्टस्य सहकारित्वम् । विश्वं विसृज्य निर्माय, जगतः विचित्ररूपेण सृष्टस्यास्य विश्वस्य, कार्य्यकारणविधौ कार्य्यं कारणजन्यमिति नियमे त्वं निदानं जगदुपकरणसंग्राहकरूपेण आदिकारणं, प्रभवसि। अचेतनघटादिकार्य्यं प्रति अचेतनदण्डसूत्रादीनां कारणत्वेऽपि "अचेतनानां घटकः सचेतनः" इत्युक्तेरिति भावः। विभुत्वेनेश्वरस्य कार्य्यत्वाभावं दर्श-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यितुं सम्बोधनान्तरमाह—अनाद्येति। एतेन अनवस्थादोषाशङ्का परिहृता इति दिक् ॥ ५ ॥

सत्त्वं रजस्तम इति प्रकृतिर्यथार्था
निर्माति विश्वमखिलं तव सन्निधानात्।
दुग्धं यथा दधि घटं मृदलं सुवर्णं
तां चेन्न पश्यति भवान् न हि सा प्रसूते ॥ ६ ॥

इदानीं परिणामवादीयप्रधानप्राधान्यवादे ईश्वरस्य जगन्निदानत्वं दुर्घटमिति शङ्कामपनेतुमाह,—सत्त्वमिति। सत्त्वं रजः तमः इति गुणत्रयरूपा, यथार्था प्रकारवतीत्येवंरूपेण अर्थवती, न तु साम्यावस्थोपपलक्षिता तस्याः निर्माणकरणे योग्यताविरहात्; प्रकृतिः, तव सन्निधानात् पुरुषरूपस्य तव सम्बन्धात्, जवाकुसुमसान्निध्यात् स्फटिकोपरञ्जनवत् बुद्धौ चिद्रूपस्य प्रतिबिम्बनादित्यर्थः। अखिलं कृत्स्नं, स्थूलसूक्ष्मोभयविधमिति यावत्; विश्वं जगत्, निर्माति सृजति, विचित्रविविधजगद्रूपेण परिणमतीत्यर्थः, तथा च "प्रकृतिप्रभवं विश्वम्" इति श्रुतिः, तेन च साङ्ख्यमतमनुसरता भगवता भगवद्गीतायामुक्तम्—"प्रकृतिं पुरुषञ्चापि विद्ध्यनादी उभावपि। विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥" इति (१३अ० १९श्लो०)। "कार्य्यकारणहेतुत्वे हेतुः प्रकृतिरुच्यते।" इति च (१३अ० २०श्लो०) प्रकृतिपरिणामत्वमस्योपपादयितुं सादृश्यमुपन्यस्यति, दुग्धमिति। यथा दुग्धं दधि मृत् घटं सुवर्णं अलं निर्माति तथा प्रकृतिरिति शेषः। यथा दुग्धं दधिरूपेण, मृत् घटरूपेण, सुवर्णञ्च अलङ्काररूपेण, परिणमति, तथैव प्रकृतिः कार्य्यरूपेण परिणमतीत्यर्थः। एवञ्चेत् प्रकृतेरेव जगन्निदानत्वे कथं भगवतस्तत्कारणत्वमुक्तमित्यत आह—तामिति। तां प्रकृतिं प्रधानं, भवान् पुरुषरूपी विश्वकर्त्ता, न पश्यति चेत्, नेक्षते यदि, अभिप्रेतसृष्ट्यर्थं न विक्षोभयतीत्यर्थः। "ईक्षतेर्नाशब्दम्" इति सूत्रोद्धृतया "अहं बहुस्यां प्रजायेय" इति श्रुत्या पश्यतीत्यस्य ईक्षापूर्वक-जगत्सृष्ट्यवबोधनेन तथार्थाङ्गीकारादिति भावः। तदा सा जड़ा प्रकृतिरित्यर्थः, न हि प्रसूते यथायथभावेन परिणन्तुं नार्हति, जड़स्वभावत्वादिति भावः। भगवत्कारणत्वे साङ्ख्यमतसंवादिभगवद्वाक्यम्—"अहं कृत्स्नस्य जगतः प्रभव" इत्यादि। तथा "सर्वभूतानि कौन्तेय प्रकृतिं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


यान्ति मामिकाम्। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्।" इति (९अ० श्लो०) "मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।" इति च (९अ० १०श्लो०)।

---

## प्राप्तपत्रम्

### कलिकाता-ब्राह्मणायुर्व्वेदसभासन्देशीयम्

[लेखकः—श्रीकालिदासचौधुरीकाव्यतीर्थ एम्, ए]

अतीतसौरपौषस्य तृतीयदिवसे कलिकाता-ब्राह्मणायुर्वेद-सभायाः साधारणं मासिकाधिवेशनम् अभवत्। तत्र तत्रभवता कविराजप्रवरेण कविरत्नोपाधिकेन श्रीयुक्त-शीतलचन्द्र चट्टोपाध्याय-महोदयेन सभापतेरासनं समलङ्कृतम्।

सभायां ५काशीधाम्नः स्वर्गतस्य प्रसिद्धभिषज उमाचरणभट्टा-चार्य्यमहाशयस्य—स्वर्गतस्य विद्यासागरकलेजाध्यक्षस्य सारदा-रञ्जनरायमहाशयस्य च पारलौकिकमङ्गलकामना कृता। तदन-न्तरं आयुर्वेदशास्त्रपनाम्ना श्रीयुक्तनगेन्द्रनाथचट्टोपाध्यायमहा-शयेन आयुर्वेदशास्त्रोक्त-घृततैलादीनां मूर्च्छापाकविधेः गन्धपाक-विधेश्च प्रतिवादमूलकः स्वकृतः प्रबन्धः पठितः। प्रबन्धः लेखकस्य रचनाचातुर्य्यात् अतिरमणीय एव सञ्जातः। अयं खलु लेखकस्य तत्त्वानुसन्धित्साप्रवणतां बाहुल्येन सूचयति।

स्नेहानां मूर्च्छापाकविधिः चरकसुश्रुतवाग्भटादिषु प्राचीनायु-र्वेदग्रन्थेषु अनुक्त इति अशास्त्रीयोऽयं मूर्च्छापाकविधिः अनेन एव स्नेहानां शास्त्रोक्तफलानि न सम्पद्यन्ते इति आशङ्कमानः प्रबन्ध-लेखकः मूर्च्छापाकं प्रतिवदति। सभायां पण्डितवरकविराज-श्रीयुक्त-माधवचन्द्रतर्कतीर्थेन मूर्च्छापाकविधिप्रतिवादस्य प्रतिवादः कृतः। अभिहितश्च तेन विदुषा यत् विचारसभा काचित् आहूयतां, यत्र एतादृशः जटिलविषयस्य मीमांसा प्राचीनविचारपद्धत्या भवितुमर्हति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वद्यशास्त्रपीठाध्यापक-लब्धप्रतिष्ठकविराज-श्रीयुक्तशचीन्द्रनाथविद्याभूषणमहाशयस्य प्रदेशान्तरादागताः कतिपये आयुर्वेदाध्यायिनश्छात्राः स्वकीयदेशेषु अयं मूर्च्छापाकविधिः न प्रचलति इति व्यज्ञापयन्। सभापतिस्तु सहसा एतद्देशेषु चिरं प्रचलितस्य मूर्च्छापाकविधेः अशास्त्रीयत्वम् अनावश्यकत्वं च न वक्तुमुचितं, परं शास्त्रानुसन्धानेन भिन्नदेशीयानां भिषजां मतसंग्रहणेन च विचारणया एतादृशः विषयस्य मीमांसा विधेयेत्युक्तवान्। परं तेन एतदपि उपदिष्टं यत् मूर्च्छापाकेन स्नेहादीनां गुणाकर्षणशक्तिर्वर्द्धते, न तु हीयते। एतत्तु पाश्चात्यरसायनशास्त्रविदा केनचित् विदुषा मूर्च्छितस्नेहपरीक्षणेन उक्तमिति विज्ञाप्य तेन सभाभङ्ग आदिष्टः।

एतत्पत्रिकामुखेनैव वङ्गदेशीयानां वङ्गेतरदेशीयानाञ्च भारतीयभिषग्वराणां मूर्च्छापाकविधौ अभिमतं जिज्ञासमाना वयम् प्रार्थयामहे, यत् सर्वे भिषज औदासीन्यं विहाय सयुक्तिकं स्वाभिमतं विज्ञापयन्तः अस्माकं कौतूहलं चरितार्थतामापादयन्त्विति।

---

## सन्देशाः

**परिषदधिवेशनम्**—विदितमस्तु श्रीमतां पाठकमहाभागानां यथा फाल्गुनस्य पञ्चदशदिवसे शनिवासरे सायं सार्द्धषष्ठघटिकायां परिषदो माघमासीयमधिवेशनं सुसम्पन्नमिति। तच्च पद्यालोचनाप्राधान्येन साधारणाधिवेशनेभ्यो वैलक्षण्यमुपागमत्। तत्र चाधिवेशने श्रीमन्तः सीतानाथसिद्धान्तवागीशमहाशयाः सभापतिपदमलमकुर्वन्। श्रीकालीपदतर्काचार्य्यश्च नैयायिकेश्वरसिद्धिशीर्षकं पद्यमयन्यायनिबन्धमवाचयत्। मान्याः सभापतयः सम्यक्तया पद्यमयवचसा एव निबन्धसमालोचनां कृतवन्तः। परिषदो मन्त्रिणः श्रीपशुपतिनाथशास्त्रिणः पद्यमयतार्किकनिबन्धस्य शिक्षार्थिनां पक्षे धारणाद्युपकारकतया भूयसी प्रशंसा कृता। परं तस्मिन् दिवसे दोलयात्रोत्सवव्यासक्ततया बहूनां सभ्यानां तत्रानुपस्थानं सभाधिवेशनार्थं तद्दिननिर्देशकं प्रत्यस्मान्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सुखरयति। आशास्महे यथा अतःपरं तथा दिवसादिनिर्द्धारणे मन्त्रिणो माध्यस्थ्यं नावलम्बेरन्। विज्ञापितं निबन्धलेखकेन यथा अतःपरमन्येऽपि विषयाः कठिनकठिना अनया रीत्या व्याचिख्यासिताः सन्तीति।

अ-भा-संस्कृतमहासम्मेलनम्—प्रियपाठकाः! अस्माभिरस्यामेव पत्रिकासञ्चिकायां सतिमञ्जर्य्यां प्रकाशितवृत्तस्य अखिलभारतवर्षीयसंस्कृतमहासम्मेलनस्य दशममधिवेशनं कलिकातामहानगर्य्यां सौरचैत्रस्यान्तिमदिवसे तथा सौरवैशाखस्य प्रथमद्वितीयदिवसयोः सम्भविष्यतीति तदीयस्वागतकारिसमित्या निर्दिष्टमभूत्; सम्प्रति च तदवसरे निखिलभारतीयायुर्वेदमहासम्मेलनाधिवेशनं निर्दिष्टपूर्वमिति बहुभिरेव देशान्तरीणैः एतद्देशीयैश्च संस्कृतसाहित्यसम्मेलनसपक्षैः संस्कृतसाहित्यमहासम्मेलनाधिवेशनस्य निर्दिष्टसमयपरिवृत्तिं कामयमानैरावेदनपत्रस्य सम्प्रेषणात् अन्तरावतिष्ठमानेन स्वल्पेन समयेन महासम्मेलनप्रबन्धानां सम्यक्तया निर्वर्त्तनस्याशक्यतया च स्वागतकारिसमित्या सम्भूय सुविचारपुरःसरं सौरश्रावणस्य प्रथमसप्ताह एव तत्कालो निरदेशि। अनन्तरं यथाकालं अविलम्बितमेव निबन्धसूचीप्रभृतयः प्रकाश्येरन्, येन निबन्धारः सुविचार्य्य तत्त्वनिर्द्धारणपूर्वकं गभीरनिबन्धान् निबन्धुमलं भवेयुः। सम्मेलनसम्बन्धिविषयं जिज्ञासवः स्वागतकारिसमिति-मन्त्रिनाम्ना कलिकाता-राजकीयसंस्कृतमहाविद्यालयस्थानसङ्केतानुसारेण पत्रं प्रेष्य स्वाभिलषितं जानीयुः। प्रतिप्रान्तञ्च समवस्थितानां विद्यापीठानां विशेषतः संस्कृतशास्त्रनिष्णातानां विदुषाञ्च यथासम्भवं नामधामादिविज्ञापनेन सम्मेलनस्वागतकारिसमितिमुपकुर्य्युरित्याशंसामहे।

अयि भोः! सद्देशकर्म्माणः! पत्रिकासम्पादकमहाभागाः! युष्माभिरप्यस्य कृत्यस्य गौरवविशेषमनुभूय स्वस्वपत्रिकासु सम्मेलनसम्बन्धिवृत्तप्रकाशनाय सुसन्नद्धैरवस्थातव्यं, स्वीयदेशगौरवबुद्ध्या वा संस्कृतसाहित्यम्प्रति परमेणानुरागेण वा दीनातिदीनां सुरसरस्वतीं प्रति सानुक्रोशमनस्कतया वा सम्मेलनीयं वृत्तजातं सुप्रचार्य्य सफलं कुर्वन्तु श्रीमन्तो वङ्गेषु दशममधिवेशनं संस्कृतसाहित्यसम्मेलनस्येति सोत्साहं सानुरागं सप्रणयं सोपपत्तिकञ्च वयमभ्यर्थयामहे।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

पण्डिताग्रणी-वैयाकरणशिरोमणि-

श्रीयुक्तहरलालस्मृतिरत्नमहोदयविरचितटीकयान्वितम्

# सारस्वत-व्याकरणम्।

वङ्ग-विहार-वाराणसी-पञ्चनदादिप्रदेशप्रवर्त्तितराजकीयसंस्कृतपरीक्षायाः पाठ्यरूपेण निर्दिष्टम्

बालानामाशुबोधकतया परमुपयुक्तेऽस्मिन् व्याकरणे विभिन्न-प्रदेशप्रचलितपाठान्तराणां समन्वयेन प्रसादगुणालङ्कृता संयोजिता बालसरला नाम टीका। सरलसंस्कृतभाषया व्याख्या, पद-साधनम्, पारिभाषिकलक्षणनिर्म्माणादिकम्, विचारवितर्कादिना गूढसन्देहमीमांसा, असंख्यानां परिकल्पितपूर्वपक्षाणां विभिन्नदिशा प्रदर्शितान्युत्तराणि—इत्येवमादिकं व्याकरणाध्यायिनामपेक्षितं सर्व-मेवात्र सन्निवेशितम्। सम्पादकस्य 'निवेदने' च व्याकरणविषयकं विविधगवेषणामयमालोचनं विद्यते।

मूल्यम्—पूर्व्वार्द्धम् ३) रूपकत्रयमात्रम्। उत्तरार्द्धम् ३) रूपक-त्रयम्। ये तु पूर्वोत्तरार्द्धे एकदा ग्रहीष्यन्ति, तेषां कृते ५) रूपक-पञ्चकमात्रम्।

प्राप्तिस्थानम्—श्रीकृष्णदासमिश्रव्याकरणतीर्थः
घटुला सारस्वतचतुष्पाठी, पोः मिरगोदा, मेदिनीपुर।
तथा—संस्कृतबुकडिपो, २८।१ कर्णओयालिसष्ट्रीट, कलिकाता।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# The Sanskrit Sahitya Parishad

A JOURNAL PUBLISHED IN SANSKRIT

DEVOTED TO THE STUDY

OF

History, Literature & Philosophy

OF

**Ancient India**

Annual subscription........ Rs. 3. Foreign......7s.

As the most popular and widely read Sanskrit Monthly this is the best medium for advertisement. Advertisements are published in all languages.

Monthly Rate of Advertisement :—

| | Full page | Half page |
|---|---|---|
| For one year | Rs. 6 | Rs. 3 |
| For one issue | „ 8 | „ 4 |

For further particulars apply to the Manager,

SANSKRIT SAHITYA PARISHAD,

Shambazar, Calcutta



प्रकाशको मुद्रापकश्च—श्रीदुर्गामोहनकाव्यसांख्यपुराणतीर्थ एम्. ए.

संस्कृतसाहित्यपरिषत्, श्यामबाजार, कलिकाता।

मुद्रापणस्थानम्—मिरेश्वरप्रेस, २८ नन्दकुमारचौधुरीसेकेण्डलेन,

कलिकाता।


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

१८४८ शकीये
ज्यैष्ठ
June, 1926

Reg. No. C. 1073.

९म वर्षस्य
२य संख्या
Vol. IX, No. 2

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्




सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सहसम्पादकः—श्रीदुर्गामोहनभट्टाचार्य्यः एम्. ए.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

কেশরাশিকে কুঞ্চিত ও কোমল করিবার জন্যই
Digitized by Arya Samaj Foundation Chennai and eGangotri
কে-শ-র-ঞ্জ-ন তৈল--

এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে ; কেশ-রঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ-গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি একটাকা, ডাকব্যয় সাত আনা।




স্নায়বিক দুর্ব্বলতার আশু প্রতিকারক
সঞ্জীবন রসায়ন
বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ

স্নায়বিক দুর্ব্বলতার জন্য যাঁহাদের উদ্যম, উৎসাহ, স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, অজীর্ণ, অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে "সঞ্জীবন রসায়ন" অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহা দ্বারা বমন, উদ্গার, হিক্কা, আধ্মান (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবারিত হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য, ও স্নায়বিক দুর্ব্বলতা নিবারণের জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবনরসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ১০ আনা।

পরিবর্ত্তিত সচিত্র কবিরাজি শিক্ষা পরিবর্দ্ধিত
শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভক্ত। অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষেও ইহা একখানি নিত্য ব্যবহার্য্য গ্রন্থ। নাড়ীপরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি প্রস্তুত-বিধি, বিষচিকিৎসা, দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা এবং দ্বিতীয়খণ্ডে মহর্ষিদের গৌরবস্বরূপ—"সুশ্রুত-সংহিতা" এই সংস্করণে সন্নিবেশিত হইয়াছে।
মূল্য ২॥০ টাকা। ডাকমাশুল ও প্যাকিং ॥৵০ বার আনা।
CC0. In Public Domain. Gurukul Kangri Collection, Haridwar
কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং লিমিটেড

Digitized by Arya Samaj Foundation Chennai and eGangotri


# The Sanskrit Sahitya Parishat

A JOURNAL PUBLISHED IN SANSKRIT

DEVOTED TO THE STUDY

OF

## History, Literature & Philosophy

OF

## Ancient India

Annual subscription........ Rs. 3. Foreign......7s.

As the most popular and widely read Sanskrit Monthly. This is the best medium for advertisement. Advertisements are published in all languages.

Monthly Rate of Advertisement :—

| | Full page | Half page |
|---|---|---|
| For one year | Rs. 6 | Rs. 3 |
| For one issue | ,, 8 | ,, 4 |

For further particulars apply to the Manager,

SANSKRIT SAHITYA PARISHAT,
Shambazar, Calcutta.

# संस्कृतसाहित्यपरिषत्पत्रिका

संस्कृतसाहित्यपरिषन्नाम तदभिधानायाः परिषदो मासिकी सुखपाठ्यकियमतिगभीरार्था दार्शनिकनिबन्धेषु परमकोमला काव्य-चिन्तासु धर्म्योपचारा स्मृतिपुराणेतिहासादिषु सूक्ष्मतत्त्वावेदिका विज्ञानविभवेषु संस्कृतोन्नतिमूलप्रवृत्तिप्रचारपरा पारिपार्श्विकवृत्तेषु यथार्थगुणदोषविचारचतुरा ग्रन्थादिसमालोचनेषु गीर्वाणवाणी-प्रणयिनामत्युपादेयतया वरीवर्त्ति।

अस्याः प्रतिखण्डमूल्यम् ।० चतुरानकम्, वार्षिकमूल्यम् ३) रूप्यकत्रयम्।

पत्रिकामूल्यादिकं परिषत्कार्य्याध्यक्षसविधे निबन्धादिकञ्च पत्रिकासम्पादकसविधे अधोलिखितसङ्केतानुसारेण प्रेषणीयम्।

'संस्कृतसाहित्यपरिषत्'

श्यामबाजार, कलिकाता।


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# Calcutta Oriental Series

**1.** **युक्तिकल्पतरु:**—भोजराजप्रणीत:। अत्र राजनीति:, नगरादिनिर्म्माणरूपा वास्तुविद्या, छत्रचामरलङ्कारादिनानाविधोपकरणलक्षणम्, रत्नपरीक्षा, शस्त्रयुक्ति:, गवाश्वगजादिपशुपरीक्षा, नावादिविविधयानलक्षणम् इत्येवमादयो विषया निर्णीता: Rs. 2-8

**2.** **चाणक्यराजनीतिशास्त्रम्**—(pp. xxxi+82) with a Foreword by Johan van Manen, Secretary, Asiatic Society of Bengal 0-14-0

**4.** **Inter-state Relations in Ancient India**, Part I by Dr. Narendra Nath Law, M. A., B. L., P. R. S., Ph. D. Rs. 2

**5.** **मुक्ताफलम्**—वोपदेवकृतम्, हेमाद्रिकृतटीकया समलङ्कृतम्, खण्डद्वयात्मकम्। अपूर्व्वोऽयं वैष्णवग्रन्थ:। (With a Foreward by Dr. N. Law, M. A., Ph. D. (pp. xlvii+361) Rs. 6

**6.** **चाणक्यकथा**—रविनर्त्तकप्रणीता वङ्गानुवादसहिता Re. 1

**9.** **वक्रोक्तिजीवितम्**—राजानककुन्तलविरचितम् ग्रन्थकृत्प्रणीतटीकासहितमलङ्कारशास्त्रम् (Edited with Critical Notes, Introduction by S. K. De, M. A., D. Lit.) Rs. 2

**13.** **Economic Life and Progress in Ancient India** by Narayan Chandra Banerjee, M. A., Lecturer, Calcutta University. (Demy 8 vo. 325+xvi pp.) Rs. 6

**14.** **Early History of the Spread of Buddhism and the Buddhist Schools** by Dr. Nalinaksha Dutt, M. A., B. L., P. R. S., Ph. D., Lecturer, Calcutta University. (Demy 8 vo. 314+xi pp.) Rs. 7-8

**15.** **ব্রহ্মসূত্রম্**—'ভাগবতভাষ্য-সহিতম্—শ্রীহরিদাসবিদ্যাবাগীশ-ভাগবতাচার্য্যসঙ্কলিতম্। প্রত্যেকটি সূত্রের সহিত শ্রীমদ্ভাগবতের শ্লোক উদ্ধৃত করিয়া দেখান হইয়াছে যে শ্রীমদ্ভাগবত ব্রহ্মসূত্রের ভাষ্য (277 pp.) Rs. 2-8

**13.** **Foundation of Indian Poetry** (being a survey of the origin and development of theories of Indian Poetics from the earliest period) by Dr. J. Nobel of Berlin (188 pp.) Rs. 5

**17.** **Padma Purana** by Prof. H. Sarma M. A. It shows that Kalidasa has drawn materials for his a Sakuntala and Raghuvamsa from the portion of the Padmapurana edited here. (Demy 8vo. lii+100 pp.) Rs. 2

**18.** **Studies in Indian History and Culture** by Dr. Narendra Nath Law M. A., B. L., Ph. D. (Demy 8vo. 430 pp.) Rs. 8

## THE INDIAN HISTORICAL QUARTERLY
**(A HIGH CLASS ORIENTAL JOURNAL)**

Each issue 200 pp. Super-Royal Octavo. Edited by Dr. Narendra Nath Law, M. A., B. L., P. R. S., Ph. D. containing contributions from the foremost oriental scholars of India, England, France, Germany.

Annual Subscription Rs. 6 (postage 0—12—0)

The Calcutta Oriental Press, 107, Mechua Bazar Street, Calcutta.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषत्

( श्यामबाजार, कलिकाता )

(Registered under Act XXI of 1860)

समितिरियं संस्कृतभाषायास्तन्मूलकप्राकृतादीनाञ्च सम्यगालोचनया यथावत् प्रसारप्रतिपादनाय प्रतिष्ठापिता (१) प्रतिमासं सभाद्यनुष्ठानेन (२) मुद्रापितानां हस्तलिखितानाञ्च ग्रन्थराशीनां परिषद्ग्रन्थागारे नियत-सञ्चयनेन (३) स्वकीये महाविद्यालये विद्यार्थिनामध्यापनेन (४) अमुद्रापित-संस्कृतग्रन्थानां प्रकाशनेन (५) अन्तरान्तरा रङ्गेषु संस्कृतरूपकाणां प्रयोगेण (६) यथानियमं मासिकपत्रिकाप्रचारेण (७) विविधैरुपायान्तरैश्च स्वमुद्देश्य-मनुकूलयति। सदस्या मूल्यं विनैव प्रतिमासं संस्कृतपत्रिकां लभेरन्, परिषत्प्रकाशिता ग्रन्थमालाश्च तेषां सुलभतरा स्युः।

## संस्कृतसाहित्यपरिषद्ग्रन्थमाला

| | मूल्यम् | | | |
|---|---|---|---|---|
| | साधारणानाम् | | सदस्यानाम् | |
| कालीतत्त्वः—सटीकानुवादम् | | ॥/०) | | ॥०) |
| शङ्करीसङ्गीतम् | ,, | ।/०) | ,, | ।०) |
| शक्तिवादः—गदाधरभट्टाचार्य्यविरचितः सटीकाद्वय-भाष्यानुवादसहितः | ,, | २) | ,, | १॥०) |
| दुर्गोत्सवतत्त्वम्—रघुनन्दनभट्टाचार्य्यकृतम् शारदीयदुर्गोत्सवप्रमाणप्रयोगतत्त्वरूपम् | ,, | ३।० | ,, | ३) |
| पितृदयिता—अनिरुद्धभट्टकृता सामवेदीयसन्ध्या-श्राद्धादिपद्धतिरूपा | | १।०) | ,, | १) |
| दुर्गोत्सवनिबन्धकदम्बम्—दुर्गोत्सवविवेकादिग्रन्थपञ्चकात्मकम् | ,, | ॥०) | ,, | ।/० |
| कारकोल्लासः—भरतमल्लिककृतः सोदाहरणकारकनिर्णयरूपः | | /०) | ,, | /०) |
| ऋग्वेदभाष्योपक्रमणिका—सायणकृता आङ्गलभाषाटिप्पणसमेता | | ॥।०) | ,, | ॥/०) |
| ग्रहयागतत्त्वम्—रघुनन्दनभट्टाचार्य्यकृतम् | ,, | ।/)० | ,, | ।/० |
| तीर्थतत्त्वम्—रघुनन्दनभट्टाचार्य्यकृतम् | ,, | ।/० | ,, | ।/० |
| प्रभाकरविजयम्—नन्दीश्वरविरचित-प्रभाकरसम्प्रदायानु-सारिमीमांसाग्रन्थः | ,, | १।०) | ,, | १) |
| पवनदूतम्—लक्ष्मणसेनसभाकविधोयीकविकृतम् | ,, | ॥।०) | ,, | ॥/०) |
| नलदमयन्तीयम्—( सप्ताङ्कनाटकम् ) | ,, | १।०) | ,, | १) |
| प्रशस्तपादभाष्यम्—जगदीशसूक्तिसहितम्, नवीनया सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् | | २) | ,, | १॥) |

एते मुद्रापिता बहवो ग्रन्थाश्चान्ये इदानीं मुद्राप्यमाणा विद्यन्ते।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भारतवर्षस्य श्रेष्ठानाम् औषधालयानां चिकित्सालयानां च अन्यतमः

**"आर्, सि, सेन एण्ड कों लिमिटेड्"**

(यथाशास्त्रं निर्मितानि विशुद्धानि औषधानि सर्व्वदा लभ्यन्ते)

१। **च्यवनप्राशस्य** प्रतिविंशतितोलकं मूल्यं रूप्यकद्वयं २) प्रेषणादिव्ययः ।৵० आणकषट्कम् ।

२। **बृहच्चन्द्रोदयमकरध्वजस्य** सप्ताहार्थं मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्ययः ।৵० आनकपञ्चकम् ।

३। **तुषारविन्दुतैलस्य** प्रतिदशतोलकम् मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्ययः ।৵० आनकषट्कम् ।

(सर्वेषाम् औषधानां मूल्यादिविषयक-विवरणपूर्णं पुस्तकं मूल्यं विनैव प्रेष्यते

**कविराजः राखालचन्द्रसेनः एल् एम् एस्**

**" श्रीसुधीरकुमार सेनः**

२५९ नं अपारचित्पुररोड्, कलिकाता

---

सर्व्वत्र भारतवर्षे सुधीजनैः समादृतं,

कविराज-राखालचन्द्र-सेन एल्, एम्, एस्, कृतं

**कुन्तलकौमुदीतैलम्**

भवत्कुटम्बमध्यवर्त्तिनीनां महिलानां केशप्रसाधनार्थं

विशुद्धोपादानजातं केशतैलमेतत् क्रीयताम् ।

भवत्-स्वदेशवासिना सुशिक्षितेन भिषजा निर्म्मितमेतत्

तैलम्, अतो भेषजगुणैः श्रेष्ठम् ।

(सर्वत्र गान्धिकानामापणेषु प्राप्तव्यम्)

**आर् सि सेन एण्ड कों लिमिटेड्**

२५९ अपारचित्पुररोड्, कलिकाता

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

१८४८ शकीये ज्यैष्ठे ९म-वर्षस्य २य-संख्या


## मतिमञ्जरी

**संस्कृतपत्राणामल्पायुष्ट्वम्**—साम्प्रतं हि भारते वर्षे षड्विंशतिसहस्रं संस्कृताध्यायिनः सन्तीति गणनाधिकृताः कथयन्ति। विद्यान्तरसाधारणं गीर्वाणीमनुशीलयतां संख्यापि न स्वल्पतरेत्यभियुक्ता विजानन्त्येव। सत्यप्येवंविधे वस्तुवृत्ते न हि द्वित्राण्यपि संस्कृतपत्राणि प्रचारमात्मीयं सुदीर्घमिह निराबाधं प्रवर्तयितुमीशत इत्यहो विषमं नो भागधेयफलमेव संस्कृतविद्यामाश्रयताम्।

नूनं नाविदितमिदं संस्कृतोन्नतिमूलप्रारम्भपक्षपातिनां वाचकमहाभागानां यदस्त्येका त्रैमासिकी संस्कृतपत्रिका वङ्गेषु वर्धमानमण्डलात् प्रकाश्यमाना 'संस्कृतभारती' नाम। बहोः कालादेव पत्रिकेयं यथाकालं प्रकाशं नोपगच्छन्ती समुत्कण्ठामुत्पादयति सुरभारतीप्रणयिनाम्। अस्माकमधन्यतया सम्प्रत्यसौ विज्ञापयति यत् पत्रिकासंग्राहकाणां द्रविणार्पणैरपेक्षेण समुच्छिन्नसंसारग्रन्थिर्न पुनरियं जीवलोके सञ्चरितुमुत्सहत इति। विदूयामहेऽस्या अद्वितीयत्रैमासिकपत्रिकायास्तिरोधानं सुमहदनुभवन्तो लज्जामहे च संस्कृतविज्ञानविदां पत्रिकाग्राहकाणां तादृशदुर्णयवृत्तमाकर्णयन्तः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वर्धन्तां 'संस्कृतसाहित्यपरिषत्'-संग्राहका गृह्णन्तु च नो हार्दिक-साधुवादान् यत्न तेषु बहवः 'संस्कृतभारती'-समारोपितकुचेष्टितस्य परिपोषकाः।

इतः पूर्वं संस्कृतभाषामयपत्नाणां दशाविचारमधिकृत्य 'मञ्जुभाषिणी'-सम्पादकसूक्तिमालोचयद्भिरङ्गीकृतमस्माभिः संस्कृतज्ञाना-मकिञ्चनत्वं संस्कृतपत्रिकाप्रचारस्य प्रतिबन्धबीजमिति। यत्सत्यं विरलमेव पण्डितानां पत्रिकाक्रयणसामर्थ्यम्। तथापीदमप्यत्र वक्तव्य-मेव यदुपादेये वस्तुन्यनुपादेयताबुद्धिरपि संस्कृतविदः पत्रिकासंग्रहा-न्निवर्तयति। न धनिकानन्तरा न कैश्चिल्लोकयात्रापि निर्वर्त्यते, न च संस्कृतपत्रिकासंग्रहः संस्कृतविदां लोकयात्रायां नान्तर्भवति। को नाम नावगच्छति संस्कृतपत्रिकाप्रचारस्योपयोगातिशयम्, को वैतद-पह्नुवीत यन्नास्त्येव किञ्चिदुपायान्तरं येन पुनर्देशान्तरीयाणामप्य-मरभारतीसेवकानां सौहार्दसम्पत्तिरन्योन्यकृत्यावगतिश्च कथञ्चि-च्छक्यसम्भावना स्यादिति ?

अस्तु। पत्रिकाणामग्रहणमात्रेण नापि केचिद्भवेयुस्तथा दूषण-भाजो यथा संगृहीतपत्रिका द्रविणानामप्रदानेन। हा हन्त! संस्कृत-विज्ञानसेविनो न वयं तस्यापि दूषणस्यानभ्यन्तराः। एतत् पुन-र्विशेषतो नो विषादबीजं यच्च चायं प्रथमः कलङ्कारोपः संस्कृत-पत्रिकाग्राहकेषु यत्ते यथावदङ्गीकृतपत्रिकास्ताटस्थ्यमवलम्बन्ते मूल्यसमर्पणावसर इति। उदाहरामोऽत्र चतुर्विंशतिवर्षेभ्यः प्राक् प्रकाशितायाः 'संस्कृतचन्द्रिकायाः' सम्पादकानां विषयमिममधिकृत्य सदुःखमाक्षेपवचनम्—

प्रतिशतकं पञ्चषा अपि नैवंविधा उपलभ्येरन् ये किल विनापि प्रार्थनां नियतसमयं मूल्यप्रदानेनानुगृह्णन्त्येनाम् [ संस्कृतचन्द्रिकाम् ]। भूयांसः पुन-र्हि स्थिः प्रार्थिता अपि दृढतरबद्धमुष्टय एव निकाममुदासते तत्प्रदानाय। अन्ततश्च वी. पी. द्वारा प्रेरितां षष्ठोत्तरां यां कामपि संख्यां स्वीकृत्य कृतार्थी-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुर्वन्त्यस्माकमायासम्। एतेष्वपि पुनर्भूयांसस्तथाविधा एव यैः किल पूर्वसंख्याजालं स्वीकृतवद्भिरुपलब्धवद्भिश्चास्मदीयानि मूल्यप्रार्थनापत्राणि ह्वी. पी. कृतां संख्यां प्रत्याचक्षाणैः कदर्थ्यमानानां प्रतिवत्सरमेव प्रतिहन्यमानो नितान्तं लघूभवत्युत्साहोऽस्माकम्। प्रतिवर्षं किल चरमसंख्यायां निवेद्यतेऽस्माभिः साञ्जलिबन्धं यद् यैर्नैष्यत आगामिनि वत्सरे चन्द्रिका स्वीकर्तुं प्रत्याख्यायतां तैः प्रथमैवास्याः संख्येति। द्वितीयादिषु च संख्यासु कियतो वारानाभ्यर्थ्यंते प्रेष्यतां मूल्यमिति। तथापि गजनिमीलिकामेव समालम्बमाना अन्धीभावमेव वानुगच्छन्तो ह्वी. पी. करणतः प्राक् प्रेरिता निःशब्दमेव स्वीकुर्वतेऽशेषा अपि संख्या एते। ह्वी. पी. द्वारा प्रेरितायां त्वेतस्यामधिगत्य पत्रमस्माकं सावधानमेव प्रत्याख्यायते सेयमित्यहो पराकाष्ठा सौजन्यस्य। प्रत्याख्यायतां नाम परस्तादेषा स्वीकृतपूर्वाणां तु संख्यानां मूल्यं प्रदातव्यमेवेति नैतत् कथयितुमावश्यकं सत्यैकनिष्ठेभ्यः। किन्त्वहो दुर्भाग्यं भारतवर्षस्य यत् स्वप्नेऽपि तद्वितरणे मतिमकुर्वाणैः कलङ्कितमिवेदमद्यापि महोन्नतंमन्यैरुत्सादयतीव जनपदमङ्गलालयान् व्यवसायान् इति।

यद्यपरस्माकं प्रियपाठकमहाभागेषु नाद्यापि कश्चिदेतादृशमाचरितमङ्गीकुरुते, तथापि नैतद् वयमपलपितुमुत्सहामहे यच्चन्द्रिकावर्णितरीत्या पाठकानामौदासीन्यमेव संस्कृतपत्राणां न्यूनीभावकारणेष्वग्रं पदमधितिष्ठतीति। साम्प्रतिका हि नामतोऽपि न जानन्ति कियत्यो नाम संस्कृतपत्रिकाः स्वरूपं दर्शयन्त्यः सहसैव विलयं प्रापिताः। नितरां विषादमुपजनयति स्मृतिपथमारूढा विद्यावाचस्पतिभिरप्पाशास्त्रिभिरधिष्ठिता 'संस्कृतचन्द्रिका' श्रीमद्विधुशेखरशास्त्रिभिः सम्पादिता 'मित्रगोष्ठी' अन्याश्च काश्चित् सुप्रसिद्धाः संस्कृतपत्रिकाः सर्वेषां काम्यतामुपाददाना अपि कियच्चिरं सप्रकर्षं प्रचरन्त्योऽपि निरुद्धावतरणाः। क्वेदानीं विद्यावतां सहचरी 'विद्योदयो' निबन्धरत्नानामाकरो वा 'संस्कृतरत्नाकरः'। क्व च साम्प्रतं प्रभाद्योतितदिङ्मण्डला 'आर्य्यप्रभा' रसिकमानसकादम्बरी च 'कादम्बरी'। क्व गतः स ज्ञानविज्ञानमणि'र्विज्ञानचिन्तामणिः'

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


क्व नु वाऽद्य सारमुपाहरन्ती सा 'शारदा'। अनतिचिरमन्तर्हितासु च स्मरणीयाः सम्प्रत्यनन्वर्थाभिधेया 'संस्कृतकामधेनुः' सहृदयमनोहारिणी च 'सहृदया'। 'गीर्वाण'-'जनार्दनयो'रपि दर्शनमिदानीं न लभ्यते। पाक्षिकं 'मित्र'मपि विनष्टमेव। 'संस्कृतमहामण्डलस्य' नामापि न श्रूयते। जात एव चान्तर्हितो 'बहुश्रुतः'। न जानीमहे साम्प्रतं प्रकाश्यमानानां कियत्यः संस्कृतपत्रिकाः कियन्तं कालं यथाकालमवातरन्त्यो महागुणनिबन्धसम्पदा देवभारतीं समाराधयितुं प्रभवेयुरिति। तत्र च भगवदुमासहायस्य पादरजःप्रसादः प्रियपाठकमहाभागानाञ्च कृपापाङ्गपरिपातः सम्बलमिति।

---

# यत् किमपि प्राप्तकालम्

लेखकः—शास्त्री श्रीविधुशेखरभट्टाचार्य्यः

अवश्यमिदानीमुदीरणीयम् इति हि किञ्चिदिदमुदीर्यते न पुनरभिसन्धानाद् दम्भाद् वा। किं नु खलु लभ्यमभिसन्धाय, को नाम वावसरो दम्भस्य पुरुषाणां मादृशानाम्। किञ्च न त्वं मत्तो भिद्यसे, न वाहं त्वत्तः। तत् त्वां प्रत्युच्यमानं न खलु न मां प्रत्यप्युच्यते। तद् भद्र, विचार्यतामुत्सार्य मात्सर्यं यदिदं किञ्चिद् दुःखोपहतेन चेतसा वक्तुमुपक्रम्यते।

कः खल्वपङ्गुवीत यदस्ति ते गतिरिति। इदं पुनः पृच्छ्यते कुत्र नु खल्वियं ते गतिः। क्व त्वं गच्छसि। पुरो वा गच्छसि पश्चाद् वा गच्छसि। गन्तुस्ते स्यादेव गतिः। न हि गतिमन्तरेण गन्ता नामोपपद्यते। न पुनर्गत्यैव केवलया सिध्यति ते समीहितं गन्तुः। अवश्यं ह्यवगन्तव्यं त्वया यद् गन्तव्यम्। अन्यथा ततश्चेतश्च रात्रिन्दिवं धावतस्ते सहस्रेणापि वत्सराणां न स्यादन्तो गतेरिति खिद्येत देहो दूयेत च हृदयमिति का पुनस्ते प्रतिक्षणमधिकाधिक-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मवसीदतो दुःखोपशमनप्रत्याशा। अत एव पृच्छ्यते क्व नु खलु भद्र गच्छसीति।

न खलु नाहं वेद्मि आजीवितमनुशीलयन् संस्कृतं कियत् त्वं श्राम्यसि, कियत् त्वं क्लिश्यसि, कियद् वा त्वं खिद्यस इति। न चेदमपि न जानाम्यहं यत् सम्यग् अधीत्यपि तेषु तेषु शास्त्रेषु कथं त्वं सावज्ञं सासूयं च निरीक्ष्यसे, मुक्तमर्यादं विगीयसे, सक्रोधं चाभिशप्यसे सर्वथा विनिपात एवास्यास्तु सगणस्येति। किमाह्य केनेति। ननु न केन। किं न पश्यसि यैः संवससि यैश्च संवसनीयम्, यैः सञ्जीवसि यैश्च सञ्जीवनीयम्, सर्वैरेव तैरात्मीयैरेव ते न त्वनात्मीयैः।

लक्ष्मीस्ते निसर्गत एव प्रतिकूला। दौर्गत्यं ते सहचरम्। सत्यप्येवं जीवितव्यम्। अवश्यं त्वं जीवेः। न त्वमात्मानं हन्तुमर्हसि। न वा इच्छन्नपि तथा कर्तुं शक्ष्यसि। किञ्च यद्यन्यत् किञ्चित् कर्तुमसमर्थो भवेः, एतत्तु त्वमवश्यं कुर्याः—भरणीयं ते कुटुम्बम्, शिक्षणीयास्ते तनयाः, सम्प्रदेयास्ते पात्रेभ्यो दुहितरः, आह्वातव्याश्चागदङ्कारा रोगोपशमनाय। न पुनस्त्वमेतदपि कर्त्तुं शक्नोषि। न च शक्ष्यसि तावदपि कर्तुं यावत् साम्प्रतं करोषि प्रभवसि वा कर्त्तुम्। सत्यं साधारणीयं स्थितिः साम्प्रतमिति। तथाप्यस्ति ते कश्चिद्विशेषः। न त्वं न स्वयमेवेदं वेत्सि। इदं तु त्वं न वेत्सीवेति प्रतिभाति यत् त आसीत्, प्रतिपदमेव तत् परित्यजसि। परित्यजन्नपि नावाप्नोषि श्रेयः। तथापि न पश्यसि। पश्यन् वा न बुध्यसे। बुध्यमानोऽपि वा न किञ्चित् समीक्ष्य प्रतिविधित्ससि। प्रतिदिनमेवाधिकृतं ते भ्रश्यति न तु किञ्चिदभिनवमधिकरोषि प्रयस्यसि वाधिकर्त्तुम्। जीर्ण एव श्रद्धत्से न पुनर्जानीषे यत् सर्वमेव जीर्णं न प्रशस्यमिति। गुणाकृष्टस्य ते तत्र श्रद्धा अगतिकस्यैव वेत्यपि सन्दिह्यते। क्वेदानीं वससि, कैः सार्धं वससि, कस्तैः सम्बन्धः, कीदृशस्तेष इति स्वप्नेऽपि जातु न चिन्तयसि। किमद्यापतितं, कथमाप-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तितं, क्व चेदं प्रविष्टमिति नावलोकसे। गृहमप्यात्मन उपद्रुतमिति नावबुध्यसे। सर्वस्वमप्यात्मनो मुषितं च मुष्यमाणं च नावेक्षसे। यन्नेच्छसि पुरत एव कालस्तत् त्वया प्रसह्य कारयन्ति। तथापि त्वं नाङ्गीकरोषीति चित्रीयते चेतः। मन्यसे मनोः किल काले वर्त इति। मननमेवेदं ते केवलम्, तत्त्वं त्वन्यत्। तिष्ठ त्वं चिरं तथा मन्यमानो भुङ्क्ष्व च तद्विपाकमकामयमानोऽपि। कालः पुनर्न तिष्ठति न वा स्थास्यति। स खल्वगच्छद् गच्छति गमिष्यति च। तादृगेवास्य सन्तानः। स च गच्छन् परिवर्तते। परिवर्तमानश्चान्यत् परिवर्तयति। तां च परिवृत्तिमसहमानोऽपि न त्वं शक्ष्यस्यन्यथयितुम्, नाहम् न वा परः कश्चित् निपुणतरोऽपि। प्रकृतिर्हि सा कालस्य। न च प्रकृतेरन्यथाभावः कदाचिद् भविष्यति। कालानुकूलं हि कुर्वन् पुरुषः कल्याणभाग् भवति। न हि शीते चन्दनानुलेपनं निदाघे वा वह्निसेवनं कस्यचित् सुखाय च हिताय च सम्पद्यते। न हि सवितुः प्रकाशमिव स्पष्टमप्येतमर्थं पश्यसीत्यहो ते प्रमादः। आकण्ठमापीय प्रमादमदिरामुन्माद्यसि। उन्मत्तश्च पश्यसि भयेऽप्यभयम्, अभयेऽपि च भयम्। तादृशस्य च ते नन्वयमन्तिकोऽप्यन्तको नेदीयान् भवतीति न ते प्रतिभाति। अत एव च गच्छन्नपि क्व गच्छसीति नावगच्छसि। दुःखौषधमिति पुनर्दुःखमेवानुधावसीति न त्वं प्रतिपद्यसे। तामेतां शोच्यां गतिमागतोऽसीति पृच्छामि—भद्र, गच्छंस्त्वं क्व नु खलु गच्छसीति।

तत् त्वमिदानीं गतिं मे वक्ष्यसि। उत्पथप्रस्थितस्य मे पन्थानं निर्देक्ष्यसि। धिक् चापलम्।

अलम् अलमन्यथाशङ्कया। कृतं चातिमन्युना। कः खलु मादृशस्तथा कर्तुमुत्सहेत। का शक्तिरस्य। न खलु न जानात्येष मात्रामात्मीयाम्। मा च विस्मार्षीर्यत् पूर्वमेव निवेदितं नावामन्योन्यं भिद्यावह इति। दुरवगाहस्त्वेष प्रश्नो महति व्यसनव्यति-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



करे। नायं कथमप्युपेक्ष्य इति हि ब्रवीमि। तत् स्वयं वा निश्चिनु परो वा कश्चित् निश्चिनोत्वेनम्। यथेच्छसि अहमपि स्तोकं किञ्चिद् वक्ष्यामि यच्चिन्तयामि। तच्च श्रुत्वा त्वमेव प्रमाणमित्यपरस्यति।

---

# भारते प्रथमनाट्याभिनयः

लेखकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः

कालिदासकृतविक्रमोर्वश्यास्तृतीयाङ्के सरस्वतीप्रणीतलक्ष्मी-स्वयंवराभिधस्य भरतेनाभिनीतस्य कस्यचिद्रूपकस्योल्लेखोऽस्ति। उर्व्वशीपुरूरवसोर्मिलनात्मकं पुराणेषु यदुपाख्यानम् उपलभ्यते तस्मिन् पुनः कुत्रापि उर्व्वशीं प्रति भरतस्याभिशापमधिकृत्य किञ्चिदपि न दृश्यते दूरमास्तां तावल्लक्ष्मीस्वयंवराभिधस्य रूपकस्याभिनयवार्त्ता। तन्मन्ये लक्ष्मीस्वयंवरणं नाम रूपकमपि कविना कल्पनानयनेनैव दृष्टम्, अथवा तादृशं किञ्चिद्रूपकमासीच्चेत् तदपि कालिदासात् प्रागेव केनचित् कविना विरचितं परं न तत् पुरूरवःसमकालीनम्। यथाविधानमभिनीतस्य कस्यचिन्नाटकस्योल्लेखो हरिवंशे एव दृश्यते। भगवतः श्रीकृष्णस्यात्मजः प्रद्युम्नो वज्रनाभपुरं नटवेशमाश्रित्य स्वभ्रातृभिरन्यैश्च नाटकाभिनयव्यपदेशेन गत्वा वज्रनाभकन्यां प्रभावतीं जहार। तत्र रङ्गमञ्चादिकं विनिर्म्माय चित्रलिखित-पटादिसाहाय्येन कृत्रिमपर्व्वतादीनामुपकल्पनेन च अभिनयः सर्व्वथा याथार्थ्यं प्रापितोऽभूत्। किमधिकम् अभिनयेऽस्मिन् वारा-ङ्गनाभिरेव स्त्रीभूमिकामधिरूढ़ाभिः यथायथमभिनयसौष्ठवसम्पा-दनार्थं यतितम्। तस्याभिनयस्यादौ तौर्य्यत्रिकादिकं यथाविधि समनुष्ठितमभूत्।

अभिनयप्रारम्भे नान्दीपाठश्च कृतः अतो मन्ये सर्वथायमभिनयः आधुनिकरूपकाभिनयेन तुल्य आसीत्; एतादृशाभिनयः इतः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वमपि भारते कदाचिदभवन्न वा तन्न ज्ञायते अतो वयं मन्ये यदयमभिनय एव भारते सर्व्वादौ प्रावर्त्तत। कीदृशोऽयमभिनय आसीत् तद्दर्शयितुं किञ्चिदत्र हरिवंशात् उद्ध्रियते, किमेवम्भूतमभिनयविवरणं कस्मिंश्चिदन्यस्मिन्नपि प्राचीनग्रन्थे दृश्यते तन्न जानीमो वयम्, वरं यदि केचन जानन्ति तर्हि परिषत्पत्रिकायां तत् प्रकाश्य पुरातत्त्वरसिकानामानन्दं वर्द्धयन्तु।

तत्र नटादिव्यवस्थापनम्—

"दैवीं मायां समाश्रित्य संविधाय हरिर्नटम्।
नटवेषेण भैमानां प्रेषयामास भारत॥
प्रद्युम्नं नायकं कृत्वा साम्बं कृत्वा विदूषकम्।
पारिपार्श्वं गदं वीरमन्यान् भैमांस्तथैव च॥
वारमुख्या नटीः कृत्वा तत्तूर्य्यसदृशास्तदा।
तथैव भद्रं भद्रस्य सहायांश्च तथाविधान्॥"

प्रद्युम्नादिभिः प्रथमं नाटकीकृतं रामायणमभिनीतम्—

"रामायणं महाकाव्यमुद्दिश्यं नाटकीकृतम्।
जन्म विष्णोरमेयस्य राक्षसेन्द्रवधेप्सया॥
लोमपादो दशरथ ऋष्यशृङ्गं महामुनिम्।
शान्तामप्यानयामास गणिकाभिः सहानघ॥
रामलक्ष्मणशत्रुघ्ना भरतश्चैव भारत।
ऋष्यशृङ्गश्च शान्ता च तथा रूपैर्नटैः कृताः॥
तत्कालजीविनो वृद्धा दानवा विस्मयं गताः।
आचचक्षुश्च तेषां वै रूपतुल्यत्वमच्युत॥
संस्काराभिनयौ तेषां प्रस्तावनां च धारणम्।
दृष्ट्वा सर्वे प्रवेशञ्च दानवा विस्मयं गताः॥"

अथ नटेभ्यः पारितोषिकदानम्—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


"ते दृष्ट्वा विस्मयं नेदुरसुराः परया मुदा ।
उत्थायोत्थाय नाट्यस्य विषयेषु पुनः पुनः ॥
ददुर्वस्त्राणि तुष्टाश्च ग्रैवेयवलयानि च ।
हारान्मनोहरांश्चैव हेमवैदूर्य्यभूषितान् ॥
पृथगर्थेषु दत्तेषु लोकैस्ते तुष्टुवुर्नटाः ॥"

अथ रम्भाभिसारनाटकाभिनयोद्यमः—

"अथ कालोत्सवं चक्रे वज्रनाभो महासुरः ।
कारयामास रम्यं च चमूवाटं प्रहृष्टवान् ॥
ततस्तान् परिविश्रान्तान् प्रेक्षार्थाय प्रचोदयत् ।
दत्त्वा रत्नानि भूरीणि वज्रनाभो महाबलः ॥
उपविष्टश्च तान् द्रष्टुं सह ज्ञातिभिरात्मवान् ।
छन्ने चान्तःपुरं स्थाप्य चक्षुष्टंष्टे नराधिपः ॥

अथ रम्भाभिसारनाटकाभिनयारम्भः—

"भैमापि बद्धनेपथ्या नटवेषधरास्तथा ।
कार्य्यार्थं भीमकर्म्माणो नृत्यार्थमुपचक्रमुः ॥
ततो घनं सशुषिरं मुरजानकभूषितम् ।
तन्त्रीस्वरगणैर्विद्वान्नातोद्यानन्ववादयन् ॥
ततस्तु देवगान्धारं छालिक्यं श्रवणामृतम् ।
भैमस्त्रियः प्रजग्मिरे मनःश्रोत्रसुखावहम् ॥
आगान्धारग्रामरागं गङ्गावतरणं तथा ।
विषमासारितं रम्यं जग्मिरे स्वरसम्पदा ॥
लयतानसमं श्रुत्वा गङ्गावतरणं शुभम् ।
असुरांस्तोषयामास उत्थायोत्थाय भारत ॥
नान्दीं च वादयामास प्रद्युम्नो गद एव च ।
साम्बश्च वीर्य्यसम्पन्नः कार्य्यार्थं नटतां गतः ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नान्यन्ते च ततः स्लोकं गङ्गावतरणाश्रितम् ।
रौक्मिणेयस्तदोवाच सम्यक् स्वविनयान्वितम् ॥
रम्भाभिसारं कौबेरं नाटकं नन्नृतुस्ततः ।
शूरो रावणरूपेण रम्भावेषं मनोवतो ॥
नलकूवरस्तु प्रद्युम्नः साम्बस्तस्य विदूषकः ।
कैलासो रूपितश्चापि मायया यदुनन्दनैः ।
शापश्च दत्तः क्रुद्धेन रावणस्य सुरात्मनः ॥
नलकूवरेण यथा रम्भा चाप्यथ सान्त्विता ।
एतत् प्रकरणं वीरा नन्नृतुर्यदुनन्दनाः ॥"

किं बहुना सर्वमेतत् हरिवंशस्य विष्णुपर्वणस्त्रिनवतितमाध्याये प्रपञ्चितम् । विस्तरं जिज्ञासुना तु तत्रैव सर्वं द्रष्टव्यम् । प्रभावतीपरिणयं नाम किञ्चिन्नाटकं साहित्यदर्पणप्रणेत्रा कविराज़-विश्वनाथेन प्रणीतमासीत् । तथा च साहित्यदर्पणे षष्ठपरिच्छेदे यथा मम प्रभावत्यां वज्रनाभः—

अस्य वधः क्षणेनैव निर्म्मथ्य गदयानया ।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः ॥

इत्यादि वाक्यजातं ग्रन्थकारेणोद्धृतम् । अपि च विश्वनाथेन साहित्यदर्पणस्य षष्ठपरिच्छेदे स्तम्भितरम्भनामकस्य कस्यचित् सप्ताङ्कयुक्तत्रोटकस्योल्लेखः कृतः, परं त्रोटकमिदं केन लिखितं तस्य निर्देशस्तत्र न घटते । विश्वनाथकृतं प्रभावतीनाटकमधुना न प्राप्यते, मन्ये यथोत्तरचरिते तथास्मिन्नपि नाटके अभिनयान्तर्गताभिनयेन भवितव्यमिति यथामति मया भारते प्रथमनाट्याभिनयघटितं किञ्चित् प्रदर्शितम् ।

———

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# भोलानाथ-सुभाषितम्

## ( पूर्वतोऽनुवृत्तम् )

लेखकः—श्रीभोलानाथविद्यानिधिकविभूषणकविरत्नकाव्यरत्नाकरः

दूरापास्तरजस्तमस्ततिरतिश्वेताकृतिः शीतलं
मुञ्चन्ती श्वसनं सुगन्धमचलं स्वच्छाम्बराच्छादिता ।
सान्द्रामोदमनारतं सुमनसा येषां वहन्ती भृशं
मूर्द्ना सुन्दरचन्द्रकं च दधती देवीव भाति क्षणा ॥ ५०

चन्द्रे राजति चन्द्रकान्तमणयः प्रेम्णा द्रवन्ति द्रुतं
ज्योत्स्नामत्ति चकोरकोऽथ कुमुदं कृत्स्नां मुदं विन्दते ।
लोकाद् ध्वान्तमनन्तमन्तमयते हन्तात्र शोकात् पुनः
कोकः क्रोशति विक्लवोत्पलमुखं दुःखी सखा दुःखिनः ॥ ५१

चन्द्रे सुन्दरता करे मलिनता लेशोऽतिशोभाकरः
कान्तं राजति पुण्डरीकमधिकं शैवालखण्डाकुलम् !
उच्चैरेव हलाहलाङ्कितगलं श्लाघ्यं वपुः शूलिनो
द्रव्ये दूषणमीषदुत्तमगुणे प्रायो गुणोद्दीपनम् ॥ ५२

आकारोऽपरहितस्य घोरगहनः शूकस्य देहो यथा
व्यापारोऽपि खलस्य वक्रविषमो व्यालस्य वा विक्रमः ।
आरावोऽपरशुभस्य कर्कशतमो घूकस्य घूत्कारवत्
प्रायोऽन्तःकरणस्य दर्पणतया जागर्त्ति बाह्यो गुणः ॥ ५३

दृश्यन्ते खलु पेचकाः सुखभुजो रात्रौ दिवा दुःखिनः
पद्मिन्यः शरदि स्फुटन्ति सहसा सीदन्ति वर्षासु च ।
भानुर्याति दिवा प्रभावमतुलं दैन्यं दिनान्ते पुनः
सर्वः कर्मविपाकतो हि लभते दुःखं सुखं चात्मनः ॥ ५४

कीटं हन्ति पिपीलिकाथ सरटस्तां श्येन एनं पुन-
र्मार्जारस्तममुं शुनो वृक इमं तञ्चापि पञ्चाननः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पञ्चास्यं शरभो निहन्ति तमपि व्याधश्च कालश्च तं
सर्वस्यैवमिहोत्तरोत्तरमहो वैरी वरीवृत्यते ॥ ५५
वज्रं स्फूर्जति मूर्द्धनीति पथिकैरेकैकशः शङ्कया
क्लृप्तः सप्तभिरन्वितो गतिविधौ शेषाशयैकच्चये ।
एवं षट्सु गतागतेषु पतनत्रस्ते गते सप्तमे
पञ्चामिव शिरःसु तन्निपतितं चित्रं विधेश्चेष्टितम् ॥ ५६
गर्जंस्तावदहार्य्यभूमिमभितश्चञ्चूर्य्यमाणा मनाक्-
स्पर्द्धाबद्धमदान्धसिन्धुरघटा जंघन्ति दिङ्मण्डलम् ।
यावन्नोग्र उदग्रकेशरसटामास्फोटयन् केशरी
हुङ्कारी तदरी रुषा गिरिदरीदारी दरीदृश्यते ॥ ५७
वर्द्धन्ते हि यथा यथा परिजना लोकस्य कालोदये
वृद्धिं यान्ति तथा तथा विपदि तन्मात्राः किमत्राद्भुतम् ।
शेषोऽशेषशिरोधरोऽस्य तु शिरःपीड़ा यदा जायते
यावन्त्यस्य शिरांसि सन्ति बत हा तावत्य एव व्यथाः ॥ ५८
दिग्वासा हि चलच्छदच्छद इव प्राप्नोति कम्पोदयं
दुर्व्वासाः खलु खिद्यते परमुखापेक्षीव दुःखी जनः ।
सम्बद्धाकृति शम्बरारिसदृशो धत्तेऽम्बरीशो रसं
शीते मज्जति वाड़वः शुचितया ख्यातो जड़े बोधवत् ॥ ५९
आदौ वस्त्रदशावृतोऽथ विवृतज्वालान्तिके संस्थितः
पश्चात् कम्बलसम्बलः पृथुलसत्कन्यान्तरेऽनन्तरम् ।
कम्पं बिभ्रदनभ्रविभ्रमभराद्बानावृतिव्यावृतो
विश्रान्तो मधुना दशान्तमधुना नीतः स शीतः पुनः ॥ ६०
यत्रास्ते खलगात्रमात्रवसतिस्तत्रापि विश्वाञ्जनः
क्षिप्राद्धार्मिलनक्षणं च न वसेत् सङ्गाऽपि मन्दाऽसताम् ।
दूष्येतैव खलैः सतामपि मतिस्तथ्यं हि तत् कथ्यते
संसर्ग त्यजतासतां सुमतयः प्रस्थानतः स्थानतः ॥ ६१

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वाच्यं न स्वयमात्मनः स्तुतिपदं वाच्यं परैरेव तत्
शक्रोऽपि स्वयमीरितैर्निजगुणैर्नूनं लघुत्वं व्रजेत् ।
श्रेष्ठानां हि गरिष्ठभावविभवात् प्रष्ठाप्रतिष्ठाभवा
लोकानेव कथा करोति मुखरान् दूताः सतां सद्गुणाः ॥ ६२

हस्तन्यस्तसमस्तवस्त्ववशतावेशात् परिस्पन्दते
लेखायां खलु लेखनी सुखयतिच्छायान् न पत्रान्तरे ।
मन्दं स्पन्दत एव सर्वहृदयं सन्देहसन्दोहतः
सन्तोऽपीह भवन्त्यहो विमनसः प्रायः परोक्षाग्रहे ॥ ६३

---

# भट्टसङ्कटम्

## प्रहसनम्

( पूर्व्वतोऽनुवृत्तम् )

लेखकः—श्रीश्रीजीवन्यायतीर्थः एम्. ए.

(प्रविश्य) भृत्यः । अज्ज पाबिदो । (१)

ब्राह्मणः । अये कः ?

भृत्यः । भअदो एओ यजमाणओ । (२)

ब्राह्मणः । अविलम्बं प्रवेशय तम् ।

भृत्यः । जधा आणवेदि देओ । (३)

( निष्क्रान्तो यजमानेन सह पुनः प्रविश्य ) एष भअदो भट्टा चिट्ठदि, ता उवसप्पदु भवं । (४)

यजमानः । भट्ट, भवन्तमभिवादये ।

ब्राह्मणः । स्वस्त्यस्तु ते ।

यजमानः । भट्ट, कुतः स्वस्ति ?

---

(१) आर्य्य प्राप्तः । (२) भवतः एको यजमानः । (३) यथाज्ञापयति देवः ।
(४) एष भवतो भट्टस्तिष्ठति, तदुपसर्पतु भवान् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


आरभ्यमानसवने भवने मदीये यातौ हठाद् विकटदर्शनयातुधानौ।
दृष्ट्वा च यौ परिजनाः परिपक्वशस्ये मेघोदयादिव विपत्पतनं स्मरन्ति॥

पूर्व्वमेव वृतो यज्ञे यस्मिन् देव भवान् मया।
वार्य्यन्तां राक्षसास्त्वद्य तद्यज्ञप्रतिबन्धकाः॥

गृह्यतामयं च पाथेयदीनारः।

ब्राह्मणः। (स्वगतम्) अहो गणदासवचनमवितथमेव सम्पद्यते। (प्रतिगृह्य) गच्छ त्वमहमप्यनुपदमेव गच्छामि।

यजमानः। कृतार्थोऽस्मि। (निष्क्रान्तः)

ब्राह्मणः। अरे रे कटुकषायभाषाविलासिनि कुटुम्बिनि! पश्य मन्मुखदर्शनस्य सद्यः परिणामम्।

(मन्थरया सह प्रविश्य) कामिनी। दुर्ज्जन! यदि त्वदीयवदनविलोकनपुण्यस्य परिणामोऽयं, किं न लज्जते ते हस्तस्तमिमं ग्रहीतुम्?

ब्राह्मणः। कथमिव?

कामिनी। कथमिव? त्वदीयमुखमीक्षितं मयैव मन्दभाग्यया, दीनारलाभाय तु त्वया प्रसारितो हस्तः। अहो विवेकः।

कृतं कर्म्म मया धर्म्यं पुण्यमाप्तं त्वया पुनः।
एकस्य गण्डे कण्डूतिः परस्याण्डे नखाङ्कनम्॥

ब्राह्मणः। प्रिये, सत्यं पराभूतोऽस्मि। तदिमं त्वमेव गृहाण।

कामिनी। गृह्णामि नेतत् स्वयमर्थितं यन्नाहं तथा भैक्ष्यमुरीकरोमि।
वृणोत्यरण्ये वरमात्मनाशं न माननाशं सहते कुलीना॥

(इति प्रस्थिता)

ब्राह्मणः। अरे मन्थरे!

मन्थरा। (उपसृत्य) अज्ज किं मम ज्जेव दीअदि? (१)

(१) आर्य्य किं मह्यं दीयते?

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



( दीनारं ग्रहीतुं हस्तं प्रसारयति )

ब्राह्मण:। ( स्वगतम् ) अहो स्पर्द्धा ! ( प्रकाशम् ) गणदास ।

भृत्य:। निक्कम रे मन्थरे ! अज्ज किं मं ज्जेव अणुगेह्णासि । (२)

( हस्तं प्रसारयति )

( कामिनी सम्मार्ज्जनीमादाय सहसा प्रविश्य )

कामिनी। मासपक्षतिथीनाञ्च स्मरणाय विशेषत: ।
दातु: प्रतिग्रहीतुश्च संस्कार: क्रियते मया ॥

( इत्युपसर्पति )

ब्राह्मण:। ( सभयम् ) गणदास, सत्वरमेहि मया सह यजमानगृहप्रस्थानाय । तदर्थमेवाहूतोऽसि । मन्थरे, त्वमप्याहूता प्रवासयात्रासम्भारसज्जायै । यावदहं प्रात:शौचं सम्पादयामि । ( निष्क्रान्त: )

कामिनी। असंस्कृत एव दाता पलायित: । अरे विस्मृतयमद्वारे मन्थरे, दासीपुत्र गणदास, तिष्ठतं युवाम् ।
सुवर्णलाभाय ततो न हस्तौ वृथा भवेतां मयि जीवितायाम् ।
सम्मार्जनी व: कुरुतेऽचिरेण सुवर्णशोभां रुधिरोद्गमेन ॥

भृत्य:। ( धावन् ) हा रक्खसा कधं ण मं तदाणीं ज्जेव मालेध मरामि नररक्खसीहत्ते । ( निष्क्रान्त: )

मन्थरा। हा जामादह ! तुह स्सस्सु मरदि अङ्गीकरिअ पिशाचीदास्सं । ( निष्क्रान्ता )

कामिनी। अहो स्पर्द्धा भृत्यानाम् । अधिक्षिपति मामपि । अद्य तु सर्व्वानेव गृहादस्माद् दूरीकरोमि । ( निष्क्रान्ता )

प्रथमोऽङ्क:

---

(२) निष्क्रम रे मन्थरे ! आर्य्य, किं मामेवानुगृह्णासि ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# द्वितीयोऽङ्कः

( प्रविशति कामिनी )

कामिनी। अपहृतानां गणः सर्व्व एव दूरीभूतः। अहो स्वाच्छन्द्यम्! ( परिक्रम्य सामर्षम् ) म्रियस्व म्रियस्व म्रियस्व, शङ्खाभरणमुन्मोचयामि, सिन्दूरं मुष्णामि, वैधव्यमुरीकरोमि। प्रतिपदमवजानासि मां, प्रतिपदमवमन्यसे मदीयं कर्म्म, प्रतिपदं गर्हसि मे रूपम्। किमहं सत्यमेव कुरूपा? न ददासि शोभनमाच्छादनं नापि महार्हाण्याभरणानि, कथमहं प्रियदर्शना स्याम्।

नक्षत्रपुञ्जैरनुरञ्जितेयं न शोभते किं वितमा तमिस्रा।
श्यामा लताप्युज्ज्वलपुष्पभूषा हरत्यलं न भ्रमरस्य चेतः॥

अपिच

सौन्दर्य्यस्य निदानं हि केशभ्रूनयनं प्रियम्।
वेधा विधाय सुश्यामं श्यामरूपे जयं दधौ॥

नूनं स महापातकी यो न बहुमनुते श्यामरूपमङ्गनानाम्। अथवा कृतं चिन्तनेन। घोरेयं यामिनी। यावत् स्वपिमि।

( निद्रां नाटयति )

(सहसा नभोदेशात् पततो द्वौ राक्षसौ विरोधवलाकनामानौ )

विरोधः। वलाक!

वलाकः। विरोध!

विरोधः। अपि जीवसि?

वलाकः। कथमपि; त्वं जीवसि?

विरोधः। अहमपि तथा। अहो दासीपुत्रस्य ब्राह्मणाधमस्य मन्त्राः शरनिकरा इव शरीरान्तःप्रविष्टाः।

वलाकः। विरोध, यज्ञस्थलं गत्वा यावदेव घृतभाण्डं फलतण्डुल-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ताम्बूलादिकमाकृष्टं तिरस्करिणीच्छन्नदेहेन मया, तावदेव तेन विप्रकुलकलङ्केन रक्षामन्त्रपाठपूर्व्वकमुच्चाटनमारब्धं येनावां प्रबलानिलताड़ितस्तूलराशिरिव योजनान्तरे निक्षिप्तौ।

जातो वंशे भुवनविदिते रक्षसां यः प्रशस्ते
वोर्य्योत्सेकात् कति न मनुजान् हन्तुमेकोऽपि शक्तः।
सोऽहं क्षुद्रद्विजमुखमनूच्चारणान्नष्टशक्ति-
र्लज्जे वक्तुं तदनु धरणौ जीवितुं दण्डमात्रम् ॥

विरोधः। बलाक, किमेवमवसीदसि ? वीर इव प्रतीकारमाचर। ब्राह्मणस्य भार्य्यामपहर। तस्य भार्य्यापहरणमेव साम्प्रतमेकः प्रतीकारोपायः। तत्फलञ्च ब्राह्मणस्य दौर्म्मनस्यं तथा स्त्रीविरहेण यज्ञकर्म्मण्यनधिकारः।

बलाकः। क्रियते, यथैव ते रोचते। भ्रातः क्व पुनरापतितौ स्वः।

विरोधः। निरूप्यताम्।

बलाकः। अहो भाग्यात्तस्यैव ब्राह्मणस्य गृहे समायातौ। भ्रातर्विरोध, किं नोपलभ्यन्ते तद्दिनदृष्टानि प्रत्यभिज्ञानानि।

विरोधः। सम्यगुपलभ्यन्ते। अयि भ्रातः, यदि नाम विप्रपत्नी प्रियदर्शना स्यात्।

बलाकः। तदा अहो सौभाग्यम्! भवतु अभ्यन्तरं प्रविश। यावदन्वेषयामि ताम्।

( इति गृहाभ्यन्तरप्रवेशं नाटयति )

बलाकः। ( सभयमपसृत्य ) भ्रातर्विरोध! पिशाचस्य गृहमेतत्। दृश्यतां पिशाची काचित् स्वपिति।

विरोधः। अहो सत्यं! भ्रान्तिवशात् कस्य गृहमागतौ स्वः। भवतु पश्यामि। ( इतस्ततो निरीक्षते )

कामिनी। ( उत्स्वप्नायते ) मन्ये त्वमेव तस्य यज्वनो ब्राह्मणस्य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


धर्म्मसहायो भव। वरमहमरण्ये पर्व्वते वा गच्छामि न पुन-स्तादृशब्राह्मणस्य पार्श्ववर्त्तिनो भवामि।

बलाकः। ( दूरादनुभूय ) विरोध, दिष्ट्या वर्द्धसे। जयति भगवान् शुक्राचार्य्यः। इयमसौ स्वप्ने स्वप्रवृत्तिमुद्भाव्य तिरयति नः सन्देहम्। तदलं विलम्बेन यावदेनां नयाव आवाम्।

विरोधः। बलाक! भीतोऽस्मि रूपसम्पदस्तस्याः। यदि नाम राक्षसानेव सा भक्षयेत्।

बलाकः। मा भैषीः। नयाम्येनां विजनं वनमुत्पलावतम्। यत्र राक्षसोऽपि प्रायो नायाति, पशुरपि भीतभीतश्चलति।

विरोधः। ( उपसृत्य किञ्चिन्निर्व्वर्ण्य पुनरपसरति )

बलाकः। ( आघ्राय ) भ्रातर्मानुषीयमिति नास्ति सन्देहः। तद् दृढ़ं बधान।

विरोधः। क्षणमपेक्षस्व, यावत् सम्मोहिनीं मायां विरचय्य बध्नामि। ( तथा कृत्वा )

उभौ। जयति भगवान् शुक्राचार्य्यः। ( निष्क्रान्तौ )

( अवशिष्यते )

इति द्वितीयोऽङ्कः।

---

## सन्ध्या

( पूर्वतोऽनुवृत्ता )

लेखकः—श्रीरामकृष्णचक्रवर्त्ती, बि. ए.

**सन्ध्याया नित्यत्वम्**—सन्ध्यावन्दनं तावन्नित्यम्। अहरहः सन्ध्यामुपासीत इति वीप्सावशात्। अर्द्धमासेऽर्द्धमासे प्रवृज्यते वसन्ते वसन्ते ज्योतिषा यजेतेत्यादौ तथा दर्शनात्। ननु युक्तं तत्र

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नित्यत्वम्—यथाकालम् अकरणे प्रायश्चित्तविधानात्, आप्ततोयात् पुरुषात् सोमपानाभावे दौर्ब्राह्मण्यश्रवणाच्च, अनाहिताग्निता स्तेयमित्युपपातकेषु अनाहिताग्नितायाः पाठाच्च,—नैवं प्रकृते तादृशवचांसि सन्ति येन सन्ध्यावन्दनं नित्यं भवेदिति। उच्यते—प्रकृते तु तथाविधानि वचनानि सन्तीति वदता वक्तव्यम्। किं सन्ध्यावन्दनकर्म्मप्रधानभूतगायत्र्युपदेशस्य यथाकालमकरणे प्रायश्चित्ताभावश्चोद्यते! आहोस्विद् यथाकालं सन्ध्याकर्म्मानुष्ठानस्याकरणे प्रायश्चित्ताभावः। नाद्यः। सावित्र्या अपि यथाकालमनुपदेशे गुरुतरप्रत्यवायश्रवणात्। तथाह भगवान् आपस्तम्बमुनिः 'अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्य्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनम्' इति, उक्तं चाश्वलायनमुनिचरणैः—'अत ऊर्द्ध्वं पतितसावित्रीका भवन्ति नैनान् उपानयेत् न याजयेत् नाध्यापयेत् नैभिर्व्यवहरेयुः' इति। न द्वितीयः—सन्ध्याकरणेऽपि बहुप्रत्यवायश्रवणात्। तथाहि गोभिलः—

"सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते॥" इति।

विष्णुपुराणेऽपि—

"नोपतिष्ठन्ति ये सन्ध्यां ये न पूर्व्वां न पश्चिमाम्।
व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप॥"

कूर्म्मपुराणेऽपि—

"योऽन्यत्र कुरुते यत्नं धर्म्मकार्य्ये द्विजोत्तमः।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम्॥"

दक्षः—

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु।
यदन्यत् कुरुते कर्म्म न तस्य फलभाग् भवेत्॥"

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


शौनकः—

"सन्ध्यातिक्रमणं यस्य सप्तरात्रमविच्युतम् ।
उन्मत्तदोषयुक्तो वा पुनः संस्कारमर्हति ॥"

( अविच्युतमविच्छिन्नमित्यर्थः )

स्मृत्यन्तरेऽपि—

यः सन्ध्यां कालतः प्राप्तामालस्यादतिवर्त्तते ।
सूर्य्यहत्यामवाप्नोति उलूकत्वमियात्तथा ॥
सायं प्रातस्तथा सन्ध्यां ये विप्रा न ह्युपासते ।
तानेव धार्म्मिको राजा शूद्रकर्म्मसु योजयेत् ॥

तथा छन्दोगपरिशिष्टे—

अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥
अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववेदिना ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनादित्याच्च यः पूर्व्वां आदित्याच्चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥

तस्मात्सन्ध्यावन्दनस्याकरणे प्रत्यवायबाहुल्यश्रवणान्नित्यमिति सिद्धम् । सन्ध्यावन्दनस्य नित्यत्वेऽपि फलविशेषः स्मर्य्यते । यथाह मनुः—

ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुयुः ।
प्रज्ञां यशश्च कीर्त्तिञ्च ब्रह्मवर्च्चसमेव च ॥

यमोऽपि—

सन्ध्यामुपासते ये तु नियतं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तथा च योगियाज्ञवल्क्यः—

सन्ध्या तूपासिता येन तेन विष्णुरुपासितः ।
दीर्घमायुः स विन्देत सर्व्वपापैः प्रमुच्यते ॥

**अर्थज्ञानस्यावश्यकता**—अहो किल दुर्भाग्यं यद् भारतवर्षीया अपि स्वधर्म्मं परिहाय रमन्ते धर्म्मान्तरनिदेशेषु, मन्यन्ते च स्वधर्म्मानुसरणं विफलक्लेशजनकम्, न गणयन्ति च "स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावह" इति गीतावचनम् ; ततोऽपि दुःखजनकमिदमेव यद्धर्म्मेष्वास्थावन्तोऽपि कथमपि शब्दोच्चारणमेव मुख्यकर्त्तव्यतया निर्द्धारयन्ति, अर्थज्ञानस्यावश्यकता तु गौणतया अवधारयन्ति, विस्मरन्ति च यत् सन्ध्यानुष्ठानमर्थावबोधपूर्वकमाचरणीयं, तथा सति महत् फलं भवति नेतरथा। अत एव छान्दोग्ये श्रूयते।

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति" इति

विद्या तु सम्यगर्थज्ञानम्। श्रद्धा चास्तिक्यबुद्धिः, अर्थज्ञाने सति समग्रं फलं भवति इत्याशयेन वीर्य्यवत्तरमित्युक्तम्। तदेवेति विशेषसङ्गत्यैवकारसामर्थ्यात् अविद्वत्कृतमनुष्ठानमतथाभूतमिति च गम्यते। निरुक्तेऽपि—

"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥" इति

स्मृत्यन्तरेऽपि—

"यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥"

लघुव्यासोऽपि—

"वेदस्याध्ययनं सर्व्वं धर्म्मशास्त्रस्य चापि यत्।
अजानतोऽर्थं तत्सर्व्वं तुषाणां कण्डनं यथा॥"

कण्डनं तु 'काँड़ान' इति भाषार्थावबोधकम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


संस्कृते तु अवहननम्, तण्डुलविहीन-तुषावहननवद्वृथा प्रयास इत्यर्थः।

"यथा पशुर्भारहारी न तस्य भजते फलम्।
द्विजस्तदर्थानभिज्ञो न वेदफलमश्नुते॥"

अत एव व्यासः—

"ज्ञात्वा ज्ञात्वा च कर्म्माणि जनो यो योऽनुतिष्ठति।
विदुषः कर्म्मसिद्धिः स्यात्तथा नाविदुषो भवेत्॥"

अत एव तेषां पूजनमपि न कार्य्यमिति स एवाह—

"पाठमात्ररतान्वेदे द्विजातींश्चार्थवर्जितान्।
पशूनिव न तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत्॥

अतोऽर्थज्ञानमावश्यकमित्यभिप्रायः। लघुव्यासः—

श्रुतहीनमधीतं यच्चेह नामुत्र तद्भवेत्।
श्रुतञ्च केवलमपि समुत्थानाय कल्पते॥"

श्रुतमर्थज्ञानमुभयोः समुच्चयेन भवितव्यमित्यभिप्रायः। तदाह स एव—

"ज्ञानं कर्म्म च संयुक्तं मुक्त्यर्थं कथितं यथा।
अधीतं श्रुतसंयुक्तं तत्र श्रेष्ठं न केवलम्॥"

अर्थज्ञानसम्पन्नस्य फलमाह मनुः—

"वेदशास्त्रार्थतत्त्वज्ञो यत्र यत्राश्रमे वसेत्।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥"

हारीतोऽपि—

"मन्त्रार्थज्ञो जपन् जुह्वंस्तथैवाध्यापयन् द्विजः।
अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः॥
ब्रह्मलोकमवाप्नोति धर्म्मानुष्ठानतो द्विजः॥"

यत्किञ्चिदिति मन्त्रभागमात्रमपीत्यर्थः। वेदार्थापरिज्ञाने दोषमाह—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


"न वेदपाठमात्रेण सन्तुष्टः स्याद्विजोत्तमः।
पाठमात्रावसायी तु पङ्के गौरिव सीदति।
योऽधीत्य विधिवद्विप्रो न वेदार्थं विचारयेत्।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते॥"

तस्मादकरणे प्रत्यवायश्रवणात् करणे चाभ्युदयसम्भवादर्थज्ञानमावश्यकमिति सिद्धम्। किन्तु केचन वचनचतुराः—

"मूर्खो वदति विष्णाय धीरो वदति विष्णवे।
द्वयोरेव समं पुण्यं भावग्राही जनार्दनः॥"

इति वचनमुल्लिख्य अशुद्धमन्त्रस्यापि सफलत्वमुद्घोषयन्ति। तन्न युक्तम्। यदा तु मूर्खः कश्चन 'विष्णाय नमः' इति वदति तदा तु शब्दस्याशुद्धत्वेऽपि तन्मनसि विष्णुप्रणामकर्तृत्वात् अभिवादनभावः सर्व्वथा जागरूकस्तिष्ठति अत्र तु अज्ञातार्थवेदमन्त्राणामतथात्वात् मन्त्रसदृशो भावोदय एव न सम्भवति, कथं खलु देवास्तादृशं भावं ग्रहीष्यन्ति। वर्णशक्त्या किञ्चित्फलं प्रापयत एव किन्तु णकारभकारयोः लकारतकारोच्चारणे फलाशा तु सुदूरपराहतैव।

**स्वरज्ञानम्**—तत्र श्रुतम्—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

त्वष्टा स्वपुत्रस्य विश्वरूपस्य विनाशकर्त्तुर्देवराजस्य विनाशाय "इन्द्रशत्रुर्वर्द्धस्व" इत्युक्त्वा हे अग्ने! इन्द्रस्य शत्रुः विनाशकर्त्ता पुरुषः त्वम् अस्मात् कुण्डादाविर्भव इति मत्वा आजुहोति स्म, तत्प्रभावाच्च वृत्र उत्पन्नः सन् उच्चारणवैगुण्यात् इन्द्रेण हतो बभूव। आद्युदात्तेन इन्द्रः शत्रुः विनाशकर्त्ता यस्य इति बहुव्रीहिविग्रहवशात्। दुःखकारणं यत् न कोऽपि वङ्गदेशीयो विद्यते स्वरप्रकरणवित्, अन्येष्वपि प्रदेशेषु अल्पे एव तत्प्रकरणविदो विद्यन्ते—एतादृशवैफल्यश्रवणात् सर्व्वथा कर्त्तव्योऽत्र यत्नविशेषः अन्यथा अर्थज्ञानसहकृत-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


शब्दोच्चारणसत्त्वेऽपि फलाभावात्। पाणिनीयस्वरप्रकरणम् सर्वथा अध्येतव्यम् यथाविहितसन्ध्यावन्दनानुष्ठानेष्सूनामिति प्रसङ्गादुच्यते।

( अवशिष्यते )

---

## वसन्तविलासः

( पूर्वतोऽनुवृत्तः )

लेखकः—श्रीरामलक्ष्मीनारायणशर्म्मा

यथा चिराय श्रितवान् स्ववर्त्तनं यथा तपस्वी तपसः परं फलम्।
तथाहि लोकश्चिरमूर्जितश्रमो विविन्दतीहोत्तमसस्यसम्पदः ॥३५

पिङ्गा विपाकेन फलस्य भारान् नम्रा: प्रदानैरनिवारितैश्च।
आराधिताः प्राणिगणैर्नितान्तं सुगन्धयः सम्प्रति सस्यखण्डाः ॥३६

समुत्पतन्ती किलवप्रखण्डात् सवृन्तचञ्चुः प्रतिबद्धपङ्क्तिः।
शुकावली मारकती मरीचिः सलोहिताभेव वसन्तमौलेः ॥३७

आरामरामभवनाट्टविकासिभूरि
वातायनानुसृतपुष्पसुगन्धवाही।
वायुर्विलासमनसो रमयत्यजस्रं
व्यथाविहीनमहिकोऽतिहितो जरन्नः ॥३८

आमोदपूरभृतविस्फुटपुष्पलक्ष्या
रागोपरञ्जितमनांस्यचिरेण हृत्वा।
श्रीशानुरक्तमनसां परिपोषमेष
नूनं करोति हरिसूनुसखो वसन्तः ॥३९

व्यक्तं विकस्वरमिदं प्रकृतिस्वरूपं
नाना पदानुविततं जगदीशरूपम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अव्यक्तादिव्यमजनिक्रियमेकमाहु
　　　　सत्कारणं किमपि रागिजनैर्दुरूहम् ॥४०

इतोऽवनीभिर्मदनावनीभिस्ततोऽङ्गनाभिश्च तदङ्गनीभिः ।
फलप्रसूनं विविधं न्यधायि तनुर्विचित्राभरणा व्यधायि ॥४१

योऽपासरद्धिमभिया स हि मानिनीनां
　　　　मानः पदं शिरसि सम्प्रदधाति भूयः ।
सन्तापितेऽपि रविणेव जले हिमत्वं
　　　　को वा निजं प्रकृतिसिद्धगुणं जहाति ॥४२

अत्राङ्गना मनसि कञ्चन सारयन्ती
　　　　भावं नवं स्नथकरावलिताऽरुणेन ।
दिग्वरापिनी गहनरागवती सरन्ती
　　　　तेनानुरञ्जयति लोकमहर्गमश्रीः ॥४३

एकत्रधारितदिवाकरकुङ्कुमस्त्रग्-
　　　　पात्राऽन्यतो धृतनिशाकरदर्पणा च ।
नीलाम्बरावृततनुः स्फुटपुष्पभूषा
　　　　शृङ्गारधारणपरेव धरेह सायम् ॥४४

शिल्पी निशातिमिरकालिमलिप्तसौधान्
　　　　भूयः सकृन्नवसुधावलितान् प्रकुर्वन् ।
रामाधरेष्वमृतसेकमिवादधानः
　　　　कामप्रियः कुमुदिनीरमणोऽभ्युपैति ॥४५

आपो दिवा विहितपङ्कजिनीविभूषा
　　　　नक्तं पुनः कुमुदिनीपरिमण्डिताङ्ग्यः ।
नूनं विभूषणविधिं कलयन्ति रामा
　　　　स्छन्दानुसारिणमनङ्गरसानुकूलम् ॥४६

आमोदिता सुरभिभिः कुसुमैर्नितान्तं
　　　　भूयः परैः परिमलैः कृतभूरिगन्धा ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


संस्कारितेव तिलकं निजलक्षणस्य
सम्प्रत्यभूदलघुमानगुणा धरित्री ॥४७

दीपौषधैः सुरभिवाह्निसमीरधूपैः
पक्वैः सुधामृदुफलैः प्रचुरोपचारैः ।
व्याकोशभूरिसुमनःप्लुतवल्लरीभिः
पृथ्वीशदेवमिव राधयते वसन्तः ॥४८

रामाजुषामिह नितान्तममन्दमोदे
रात्रौ वियन्त्यवधिनाऽथ पुनर्दिनश्रीः ।
आयाति विस्फुटितपुष्पवना धरित्री-
मम्भोजरागपरिपूर्णदिवाकरेण ॥४९

इत्थं विलस्य भुवि भूरिविधैर्विलासै-
रुल्लास्य लोकमनुचित्य भुवं दिवञ्च ।
एष प्रयाति धरणीरमणो वरिष्ठः
सर्वर्तुषु स्मरसखः सुकृती वसन्तः ॥५०

अक्लोद्वितीयमिव याममुदग्रभानुं
ग्रीष्मं निरीक्ष्य निकटे प्रतियान् वसन्तः ।
प्रत्यूषवत् सुकृतिमान् प्रकटीकृतश्री
र्भूतिं वसन्ततिलकां कुरुतात् पुनर्वः ॥५१

अमलविभुविभूतिर्मोदकारी जनाना-
मगनगपशुपक्षिव्रातमामोद्य पुण्यः ।
पुनरपि वसुधायां भावयिष्यन् विभूतिं
भवतु शिवकरो वः सम्प्रयान् श्रीवसन्तः ॥५२

———

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# द्वादशरूपकाणि

लेखकः—श्रीअशोकनाथभट्टाचार्य्यः, बि. ए.

नाट्यशास्त्रे दशरूपके साहित्यदर्पणे प्रयोगतत्त्वविवरणगर्भेषु च ग्रन्थान्तरेषु परिदृश्यन्ते विभागनामलक्षणान्युपवर्णितानि रूपकाणाम्। काव्यं नाम द्वेधा भिद्यते दृश्यश्रव्यत्वभेदेन। तत्र दृश्यमेवाभिनेयं,—तदेव रूपकाख्यां लभते। यथाहुर्दर्पणकाराः,—

"दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्।
दृश्यं तत्राभिनेयं ... ... ... ॥

तस्य रूपकसंज्ञाहेतुमाह—

... ... ... तद्रूपारोपात्तु रूपकम् ॥

तद् दृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते" इति। एवमन्यत्रापि।

रूपकाणां कति भेदा इत्यपि तत्र तत्र ग्रन्थेषु विस्पष्टं विलिखितं विद्यते। यथा हि दर्पणे,—

"नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश॥" इति।

एवं दशरूपनाट्यशास्त्रादिष्वपि। नाट्यशास्त्रतत्त्वानि प्रतिपादयितुं विरचितपूर्वाणि यानि खल्वमरभारतीमयानि पुस्तकान्यद्यपर्य्यन्तमुपलब्धानि सर्व्वत्रैव विषयेऽस्मिन्नैकमत्यं प्रकटीकृतम्। नास्ति कुत्रापि काचिदपि विप्रतिपत्तिः।

परन्तु अचिरप्रकाशिते "भगवदज्जुकीय"मित्याख्ये प्रहसने रूपकद्वयस्याश्रुतपूर्व्वस्य नाम्नो सन्निवेशित इत्यहो महदाश्चर्य्यम्।

प्रहसनमिदं विशुद्धहास्यरसप्रधानमनुपममेकाङ्कविनिर्म्मितमश्लीलतालेशविवर्जितञ्चेत्यस्य महद्वैशिष्ट्यम्। अतो भिद्यते खल्वेतत्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


शुद्धं प्रहसनं (Comedy proper)* लटकमेलक-हास्यार्णवादिसंकीर्ण-प्रहसनान्तरेभ्यः ( Farce, satire )। भासकृतरूपकसाधारणानि लिङ्गानि बहुशो दरीदृश्यन्ते ग्रन्थमध्ये। इदमेवात्र प्रधानतया वक्तव्यं यन्न कविनं वा रूपकस्याख्या परिकीर्त्तिता मुखमध्ये। पुष्पिकामध्ये तु ग्रन्थस्य नामोपलभ्यते न पुनर्ग्रन्थकर्त्तुः। मातृकाग्रन्थान्तरे पुष्पिकायां प्राचीनटिप्पणीमध्ये च प्रारम्भ एव ग्रन्थकर्त्तुर्नामापि समासादितं ग्रन्थसम्पादकेन—"बोधायन"कविरिति। रचनाशैलीविधौ नेदं प्रहसनं परिहीयते महेन्द्रविक्रमवर्म्मणः कृतेर्मत्तविलासाख्य-प्रहसनरत्नादित्यतितरां पाटवमेव सूच्यते कविवरस्य। अभिनेयवस्तु-जातमपि चित्तचमत्कृतिमापादयेत् सहृदयानामिति नास्त्यत्र सन्देह-लेशोऽपि।

उपलभ्यमानेऽपि कविनामनि ग्रन्थनामनि च न निःसंशयं निर्वक्तुं प्रभवामः कवेरस्याविर्भावकालम्। केषाञ्चन मते † खृष्टीयसप्तम-शताब्द्याः परं दशमशताब्द्याः प्रागेव कवेरस्याभ्युदयकाल आसीदिति प्रतिभाति। तच्चासङ्गतम्। सत्यपि विपश्चितां महति विवादे नूतनगवेषणाविषयजातेषु, ग्रन्थमध्ये सौगतधर्म्मस्य ग्लानिसूचकानां वाक्यजातानां सद्भावदर्शनान्मत्तविलासादपि प्राचीनं तत्समकालिकं वेदं प्रहसनमिति बहूनां सम्मतमेव। वस्तुतस्तु दाक्षिणात्ये प्रदेशे ( विशेषतः केरलेषु ) आविष्कृतानां भासादिकृतरूपकाणां काल-निर्द्धारणविषये न समुत्पद्येत किमपि निश्चितं ज्ञानं विस्पष्ट-प्रमाणान्तरप्राप्तिमन्तरेणेति मन्यामहे।

अस्मिंस्तु प्रकरणे द्वादशविधरूपकनामोपलब्धवृत्तान्तो नितरां कुतूहलजनक इति तमेव विषयमवलम्ब्य किञ्चनात्र वक्तव्यमव-

* Vide, Preface to *Bhagavadajjukiyam* by Prof. M. Winternitz, p, ii.

† A. Krishna Pisharoti—*Bhasa's works, a criticism*.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ध्रियते। नाटक-प्रकरणे एवात्र तद्व्यतिरिक्तरूपकदशकस्याकरत्वे-नोपवर्णितेः उच्यते हि,—

"नाटकप्रकरणोद्भवास्तु वारेहामृगडिमसमवकारव्यायोगभाण-सल्लापवीथ्युत्सृष्टिकाङ्कप्रहसनादिषु दशजातिषु नाट्यरसेषु हास्यमेव प्रधान"मिति।—( आमुखम् )

तत्र सल्लापसंलापकशब्दावभिन्नव्युत्पत्तिकावेवेति कथं कथमप्य-स्माभिरनुमीयते। संलापकं पुनरष्टादशोपरूपकाणामन्यतमम्। वारसंज्ञकन्तु रूपकं पुनः कीदृशमासीदित्यधुनापि न पार्य्यते प्रति-पादयितुं किमपि निश्चयेन। आट्टप्रकार-क्रमदीपिका-कूटिआट्टक्रम-संज्ञकानि"तामिलमालयलम्"-भाषानिबद्धानि प्रयोगतत्त्वालोचकानि त्रीणि पुस्तकानि साम्प्रतमेव समुपलब्धानीति श्रूयते। कूटिआट्ट-क्रम-कर्त्ता खृष्टीयद्वादशशताब्द्याः प्रागेव प्रादुर्बभूवेति बहूनां मतम्। एतेषां ग्रन्थानां सम्यगालोचनमन्तरेण नवाविष्कृतनाट्यतत्त्वानां सुमीमांसा न सम्भवेदित्यलं प्रपञ्चेन।

---

## पाश्चात्यानां संस्कृतसेवा

लेखकः—श्रीव्रजेन्द्रकुमार आचार्य्यः काव्यतीर्थः वि. ए.

पाश्चात्यभूभागनिवासिनो ये नाम मनीषिणः संस्कृतभाषा-प्रचारार्थं प्रायतन्त अष्टमाब्दीयसंस्कृतसाहित्यपरिषत्पत्रिकायां प्रका-शितपूर्वे 'प्राचीप्रतीचीसम्बन्ध' इति शीर्षके निबन्धे तेषामुल्लेखः कृतः। सम्प्रति चैतेषां प्रातिस्विकनामानि कर्म्माणि चोदाहृत्य प्रस्तुतः सम्बन्ध उपसंहर्त्तव्य इति प्रयतामहे। तेषु

१। प्रथमो मनस्वी चर्लस् वृकिन् (Charles Wilkins) तत्र

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भवङ्गिर्वारणहस्तिन्‌सो (Warren-Hastings) राजप्रतिनिधिभिरनुरुध्यमानो वाराणस्यां नगर्य्यां संस्कृताध्ययनं चकार। इतःपूर्वं संस्कृतवर्णानां किमपि मुद्रायन्त्रं नासीदिति तेनैव मनीषिना स्वयं सीसकाक्षराणि निर्म्माय भारते तत्प्रचलनं प्रथमं विहितम्। ततश्च तेनैव विदेशीयेनापि प्रथमं शिलालिपिप्रभृतीनामनुशासनानां लिपिज्ञानार्थं कृतो विस्तरो यत्नः, यूरोपीयानां संस्कृतज्ञानसौकर्य्याय व्याकरणमेकम् ईंलण्डीयभाषया विरचितञ्च। पञ्चाशीत्युत्तरसप्तदशशततमे खीष्टवर्षे (1785 A. D.) भगवद्गीतायास्तथा वर्षद्वयोत्तरं हितोपदेशस्य च भाषान्तरं विधाय कृतः स्वदेशीयानां महानुपकारः।

२। श्रीविल्याम् जनो (Sir William Jones) नाम महामनीषी विख्यातोऽपरो राजनीतिविदागत्यैव कलिकातानगरीं प्रथमं संस्कृतशिक्षार्थं यतमानश्चतुरशीत्यधिके सप्तदशशततमे खीष्टवर्षे (1784 A. D.) आसियातिक-सोसाइति-(Asiatic Society) नामकं संस्कृतोन्नतिसाधकं प्रसिद्धं तन्महाप्रतिष्ठानं प्रतिष्ठापयामासेत्यस्माकं सततमेवासौ मनसि जागरूको वर्त्तते। तत्प्रतिष्ठानहितकाम्यया च कांश्चन संस्कृतग्रन्थान् आङ्गलभाषयानूदितवान्। ते च मनुसंहिता शाकुन्तल-हितोपदेश-गीतगोविन्दाख्याः वेदानाञ्च केचनांशविशेषाः। मनुसंहिताया अनुवादावसर एव तस्य इहलोकपरित्यागात् सोऽप्यनुवाद आंशिकः। द्विनवत्यधिकसप्तदशशततमे खीष्टाब्दे (1792 A. D.) ऋतुसंहारस्य संस्कृतयन्त्रे मुद्रापणञ्च तेन सम्पादितमासीत्।

३। हन्रितमः कलब्रूक (Henry Thomas Colebrook) नामकापरो विद्वान् संस्कृतभाषाया इतराभिर्भाषाभिः सह तुलनञ्चकार। अस्मादेव प्रथमप्रयत्नादन्येषां मनसि तुलनामूलकगवेषणाया अत्यावश्यकत्वमनुभूतमासीत्। तेनैव च भाषातत्त्वविज्ञानस्य प्रागेव संस्कृतग्रन्थेषु विनिबद्धस्य पाश्चात्त्यदेशेषु पुनराविर्भावः सञ्जातः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


स च विद्वान् उत्तराधिकारशास्त्रम् (Law of Inheritance) इति नामकमेकं निबन्धं मिताक्षरादायभागयोरनुवादरूपं कृतवान् । तथा "फोर्ट उलियम्" विद्यालयस्य (College of Fort William) संस्कृतधर्म्मशास्त्राध्यापकरूपेणासौ पञ्चोत्तराष्टादशशततमे खीष्टवर्षे (1805 A. D.) आङ्गलभाषया संस्कृतव्याकरणं भारतीयानां धर्म्म-क्रियाविषयकान् कतिचित् प्रबन्धान् वेदमधिकृत्य च प्रबन्धमेकं विरचितवान् ।

४। अलक्षेन्द्रो हम्रतन (Alexander Hamilton) नामापरः संस्कृतविद्यां सुष्ठ्वधिगम्य स्वदेशाय प्रस्थितः पथि प्यारी-(Paris) नगर्य्यां राजवन्दिरूपेणावस्थाय शार्म्मदेशीयान् स्रोगल (Schlegel) प्रमुखान् तथा फ्राञ्च (France) देशीयानपि बहून् विद्यार्थिनः संस्कृतमध्यापयामास ।

५। ऊनविंशशताब्द्याः प्रारम्भ एव शार्म्मणकृतिप्रवरो व्हल्म-स्रोगलः (Wilhelm Schlegel) अधिगतसंस्कृतशास्त्रसारो द्वौ सारवन्तौ विरच्य प्रबन्धौ स्वदेशीयानां मुदे प्राकाश्यं नीतवान् । तथा श्रीमद्भगवद्गीतां वाल्मीकिकृतं रामायणञ्च मुद्रापयित्वा शार्म्मणदेशेषु संस्कृतप्रचारबाहुल्यं सम्पादयामास ।

६। फ्रेदारिक स्रोगल (Frederich Schegel) नामकोऽपरो विद्वान् भारतीयानां भाषाविषयकं ज्ञानविषयकञ्च "On the Language & Wisdom of the Indians" इत्याख्यमेकं ग्रन्थं विरचयामास प्रागारब्धां संस्कृतचर्चाञ्च विस्तारयामासतराम् ।

७। फ्रञ्ज वपाख्यः (Franz Bopp) अपरः पण्डितः संस्कृत-धातूनामनुशीलनं कृत्वा जगद्विख्यातं भाषातत्त्वविज्ञानं यूरोपेषु प्रथममाविष्कृतवान् ।

८। षट्चत्वारिंशदधिकाष्टादशशततमे खीष्टवर्षे (1846 A.D.) रूढ़रथाख्यश्च (Rudolf Roth) पण्डितो वैदिकं भाषातत्त्वविज्ञान-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

मैतिह्यञ्च (On the Literature and History of the Veda) रचितवान्।

अन्ये च बहवः पण्डिता मोक्षमूलर-व्यूलर-किलर्ण (Max Muller, Buhler, Kielhorn) प्रभृतयः संस्कृतचर्चया यूरोपे युगान्तरमानीतवन्तः। एतेषां परिश्रमादेव लुप्तकल्पमपि भारतसर्वस्वं प्राचीनैः ऋषिभिः सञ्चितं ज्ञानरत्नं पुनरुद्दीप्तमित्यहो कृतज्ञैरस्माभिः स्मर्य्यते। परमार्थतो ज्ञानपिपासवः खलु जाति-धर्म्म-देश-भाषा-निर्व्विशेषेणैव यतः कुतश्चिदेव ज्ञानमाहरन्ति। वस्तुतोऽभिन्नेऽपि ज्ञाने उपाधिविशेषदर्शनेनापण्डितानां चेतसि भेदबुद्धिराविर्भूय सर्व्वत्र परेषां विज्ञाने हेयबुद्धिं जनयति। सैव च बुद्धिस्तिरस्करणीव तद्विज्ञानं सर्व्वत आवृत्य तिष्ठति, अनुशीलनाल्पतया च तत् क्रमशो विलुप्यते। निरन्तरविजातीयशासननिष्पेषितानाञ्च भारतीयानां विज्ञानचर्च्चा लुप्तप्रायाऽपि दिष्ट्या विदेशीयानां चेतसि हेयबुद्धिं नोत्पादितवती प्रत्युत परां लिप्सामिव चमत्कारिण्या स्वप्रभया जनयामासेति सा निरन्तरविघ्नतिरस्कृतापि पुनर्लब्धकलेवरा अनङ्गमूर्त्तिरिव कुमारोत्पत्तये लब्धावयवा भाविभारतमङ्गलाय समुत्तिष्ठते।

---

## मीमांसान्यायप्रकाशसमालोचनम्

श्रीमच्चिन्नस्वामिशास्त्रिकृतसारविवेचिनीनामव्याख्यया समलङ्कृतः समधिगतः सम्प्रति वाराणसीतः प्रकाशितो मीमांसान्यायप्रकाशः। मीमांसान्यायप्रकाशाख्यं प्रसन्नगम्भीरं श्रीमदापदेवकृतिः प्रकरणमन्तरेण कामपि सरलां भावपुष्टां च विवृतिमध्येतॄणां किं बहुना ऽध्यापकानामपि न सुगमाशयं भवति। 'सोमेन यजेते'तिविशिष्टविधिविचारप्रसङ्गेन विनियोगविधिसहकारिप्रमाणश्रुतिलिङ्गादि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रमाणविचारप्रसङ्गेन, तत्प्रख्यवैश्वदेवाधिकरणादिविचारप्रसङ्गेन, निषेधप्रामाण्यविचारप्रसङ्गेन, किं बहुनोत्पत्त्यधिकारविनियोगप्रयोगविधिविचारप्रसङ्गेनावापोद्वापाभ्यामतिदेशेन चापूर्वयाऽतिगभीरया च विचारप्रणाल्या मीमांसान्याया बहव एव यथाऽत्र निबन्धे सुगमं प्रचार्यन्ते न तथाऽन्यत्र कुत्रापि प्रचार्यन्त इति नेयमतिशयोक्तिः। कति वाधिकरणानि मीमांसान्यायप्रकाशे समुपहृतानीति परिज्ञाने सारविवेचिन्यामस्यां संयोजिता—न्यायप्रकाशोद्धृताधिकरणविषयानुक्रमणिका नितरामेव पाठकमहोदयानामुपकरोतीति सारविवेचिनीकाराणां समारम्भोऽयमत्यन्तमेव श्लाघनीयः।

न्यायप्रकाशस्य हि सत्यमस्ति व्याख्या काचन श्रीमदापदेवसूनुश्रीमदनन्तदेवमहाशयैः संग्रथिता या काशी-चौखाम्बा-संस्कृतग्रन्थमालात एव प्रकाशितेति शाबरभाष्यतन्त्रवार्तिकश्लोकवार्तिकन्यायसुधा-भाट्टकौस्तुभ-प्रकरणपञ्चिकादीनां बहूनामेव निबन्धानां प्रकाशनेनादित एवोत्तमर्णाः चौखाम्बापुस्तकालयाध्यक्षाः अस्या अपि व्याख्यायाः तथा बहूनामपरेषामपि मीमांसाविभागीयनिबन्धानां प्रकाशनेन धन्यशतोपभोग्यामुत्तमर्णतां सम्पादयन्तीति वस्तुस्थितिकथनमिदम्। अत्रावसरे इदमवश्यं सूचनीयं समापतितम्—यत् प्रकाशितेष्वपि बहुषु पुष्पेषु किंबहुना पुष्पवरेषु, मीमांसान्यायप्रकाशे सारविवेचिनीसहितेऽत्र मीमांसाविभागे प्रथमपुष्पमिति शिरोलेखोऽध्येतॄणां नियतं भावान्तरं जनयतीति।

एतद्व्याख्याविरचने प्रवृत्तिबीजन्तु श्रीचिन्नस्वामिशास्त्रिण एवं विवेचयन्ति यत्—सुशिक्षितमतीनामप्यन्यथाऽन्यथा प्रतिभान्ति [पदार्थाः] प्रतिभावतां मतौ त एव च ग्रन्थारूढ़ा भवन्तीत्ययं दोषो व्याख्यामप्यर्थदर्शिनीं महामहोपाध्यायश्रीकृष्णनाथन्यायपञ्चाननकृतिमपि स्पृशति तेन चाध्येतॄणां बहु विप्लवते पदार्थज्ञानमिति नेदं तिरोहितमिति एवं वर्णयन्तोऽपि शास्त्रिमहोदयाः—"तेन च क्लिश्यमाना

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


छात्रसंहतिरतितरामुपकृता श्रीमतां पण्डितप्रवराणां महामहोपाध्यायश्रीकृष्णनाथन्यायपञ्चाननानां व्याख्ययार्थदर्शिन्याख्यया, तदमधमर्णं त्वाकृकुलं तेभ्यः" इति गुणानपि परस्मद्दस्मानर्थदर्शिनीगतान् अनुमोदन्त इति सत्यं गुणदोषविवेकदक्षाः चिन्तस्वामिशास्त्रिमहाशयाः।

सारविवेचिनीसमालोचनार्थं प्रवृत्ता वयं मधुरेण समापनमिति न्यायपक्षपातिनोऽपि सारविवेचिनीकारैः पुनर्मुद्रापणावसरे समालोचनार्थं काँश्चनांशान् विमर्शकदृष्ट्या सूचयन्तो न पुरोभागिपदार्हा भविष्याम इति दृढोऽयमस्माकं विश्वासः।

(१) लिङ्गादिज्ञानं हि शाब्दभावनाभाव्यार्थभावनां निर्वर्तयति कुठार इव छेदनम्। (न्यायप्रकाशे, ८ पृः)

अत्र हि प्रायेण सर्व एवाध्येतारः सन्दिहन्त्येव—कथं दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यमिति। अत्रार्थदर्शिन्याम्—छेदनपदस्य द्वैधीभाव इत्यर्थवर्णनेनायं संशयो निरस्त एव। सारविवेचिन्यान्तु—यथा कुठारः पुरुषसाध्यछेदनव्यापारं निर्वर्तयन् पुरुषस्य करणमिति विवरणेन न केवलं फलसाधनत्वेन फलसाधनकरणत्वव्यपदेशो न समर्थ्यते किन्तु कार्यदृष्ट्येव कर्तृदृष्ट्यापि करणव्यपदेशोपपादनेनान्यथाभावोऽपि सम्पाद्यते।

(२) न हि वेदः पुरुषनिर्मितः, वेदस्याध्ययनं सर्वमित्यादि न्यायप्रकाशः (३ पृः)। अत्रायं संशयः सर्वेषां प्रायेण वर्त्तते, वेदस्याध्ययनं सर्वमित्यनेन कथं वेदस्य पुरुषनिर्मितत्वाभावः साध्यते इति। अत्र हि श्लोके वेदाध्ययनं पक्षः, गुर्वध्ययनपूर्वकत्वं साध्यम्, अध्ययनत्वं हेतुरिति सर्वं विदितम्। एवं च वेदो न पुरुषनिर्मित इति कथमिति शङ्का समुपपद्यत एव। अत्र सारविवेचिनीकारैरपि—निर्मातृपुरुषाभावमनुमानेन साधयतीति विवरणेनोक्ता शङ्कैव दृढीक्रियते, न तन्निरासः।

(३) यः कल्पः स कल्पपूर्वः इति न्यायेन संसारस्यानादि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वादीश्वरस्य सर्वज्ञत्वादिति न्यायप्रकाश ( ३ पृः ) वाक्यमनन्वितार्थमेव प्रतीयते। यतोऽनादित्वे नेश्वरसत्त्वमीश्वरसत्त्वे च नानादित्वमित्याद्विपर्यनुयोगात्। अत्र सारविवेचिनी न पदमात्रमपि विवृणोति।

(४) रेवत्यधिकरणे च "एतस्यैव रेवतीषु" इत्यत्र वारवन्तीयस्य साम्नः रेवतीसम्बन्धेऽग्निष्टोमसामसम्बन्धे फलसम्बन्धे च विधीयमाने वाक्यभेदाद् भावनोपसर्जनं भावनान्तरं विधीयते इति न्यायप्रकाशः (१४ पृः) अत्र सारविवेचिनी—रेवत्यादीनां गुणत्वाभावात् वाक्यभेदापादनमसङ्गतमिति। अत्रेयं शङ्का भवति अधिकरणतया विधेयत्वेन रेवत्याः कथं न गुणत्वम्। एवमग्निष्टोमसाम्नोऽपि सिद्धान्ते द्रव्यत्वात् कथं न गुणत्वम्। एवमग्निष्टोमसम्बन्धे इत्यस्याधिकस्य निर्देशः किमर्थः? एवं भावनोपसर्जनं भावनान्तरमिति ग्रन्थः पूर्वपक्षो वा सिद्धान्तो वा? यदि सिद्धान्तः, तर्हि भावनोपसर्जनमिति विशेषणस्य किं प्रयोजनम् इति।

(५) द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यन्तरकल्पने व्यर्थः प्रयासः समाश्रितः स्यादिति (१६पृः) अनेन हि वाक्येन धात्वर्थस्य करणत्वेनैवान्वयपक्षे श्रुत्यन्तरकल्पने तत्रापि विशिष्टविध्यापत्त्या न दध्नो होमाङ्गत्वनिर्णयो वाक्यशतेनापि भविष्यतीति भावो यो विवक्ष्यते, तं भावं विहाय—मत्वर्थे गतौ किमर्थं गुणविधिस्थलेऽपि सा आश्रीयते इति सारविवेचिन्यां विवृतम्। एतेन—विना विशिष्टविधिं गतिः सम्भवतीति खलु विवक्ष्यते, इदं च विधाने वानुवादे वेति वार्तिकानुसारेण धात्वर्थस्यापि करणत्वेनैवान्वय इति पूर्वपक्षिमते कथं सम्भवति इत्यादिशङ्का सारविवेचिनीदर्शनेन बहुधा भवन्ति।

(६) सोमेन यजेतेत्यत्र यागविधाने श्रुत्यर्थविधानम्, गुणविधाने वाक्यार्थविधानमिति (२०पृः) वाक्ये हि श्रुत्यर्थपदस्य सन्निकृष्टार्थ इति वाक्यार्थपदस्य विप्रकृष्टार्थ इति च विवरणं "श्रुत्यर्थः सन्निकृष्टत्वं वाक्यार्थो विप्रकृष्टता।" इति न तन्त्रवार्तिकानुसारेण योग्यं परित्यज्य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


—श्रुतिपदेन समानपदश्रुतिः वाक्यपदेन पदद्वयसमभिव्याहार इति विव्रियते सारविवेचिन्याम्। अत्रेयं शङ्का सर्वदा वर्तत एव कथं श्रुतिपदेन समानपदश्रुतिरेव विवक्षितेति। एवं वाक्यार्थः पदान्तरार्थं इत्यर्थः इति विवरणमपि विना क्लेशं कथमुपपादनीयमिति।

(७) स च विधिश्चतुर्विधः—उत्पत्तिविधिः, विनियोगविधिः प्रयोगविधिरधिकारविधिश्चेति (२४पृः) न्यायप्रकाशः। अत्रोत्पत्तिविध्यनन्तरमधिकारविधेरनिर्देशेन विनियोगविधिनिर्देशेनेदमवगम्यते—यत् फलाकाङ्क्षातः पूर्वमितिकर्तव्यताकाङ्क्षा, साधनाकाङ्क्षा च भवतीति, इदन्तु सोमस्येतिकर्तव्यतात्वान्वयनिरासावसरे फलाकाङ्क्षानन्तरमितिकर्तव्यताकाङ्क्षेति ग्रन्थविरुद्धं वर्तते। सारविवेचिन्यामुक्तविरोधशङ्का यथा दृष्टैव स्यात्, तथैव विवृतम्, न तु तत्परिहारार्थम्। एतेन—"व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीया श्रुत्या," (८पृः) "सन्निपत्योपकारकस्थले—उपकार्योपकारकयोः सम्बन्धः वाक्यक्लृप्तः" (८४पृः) इति परस्परविरुद्धवाक्यद्वयमपि व्याख्यातम्। अत्र यद्यपि सारविवेचिन्याम्—अत्र समभिव्याहारमात्रेणाप्यङ्गत्वबोधने प्रकृतकार्यसिद्धयां सत्यामपि द्वितीयाश्रुतेरप्रयोजकत्वमभिप्रेत्येदमुक्तमिति (८५पृः) विवरणेनोक्तविरोधपरिहारार्थं यतितम्, इदमत्र पर्यालोचनीयं न पर्यालोचितम्—यत् समभिव्याहारो नाम साध्यत्ववाचकद्वितीयाद्यभावे सति वस्तुनः शेषशेषिणां सहोच्चारणमिति समभिव्याहारलक्षणं व्रीहीन् प्रोक्षतीत्यादि द्वितीयान्तवाक्ये कथं सङ्गच्छते ? कथं वा तर्हि व्रीहिभिर्यजेतेति तृतीयान्तेपि वाक्ये स एव विनियोगो न भवतीति शङ्का न भवतीति ?

(८) "नावान्तरक्रियायोगादृते वाक्योपकल्पितात्" इति श्लोके हि वाक्योपकल्पितावान्तरक्रियायोगे न द्रव्यस्य प्रकरणग्राह्यत्वं यदभिमतम् तस्योदाहरणं किमपि वर्तते वा न वेति शङ्का हि सर्वत्र वर्तत एव। तत्र हि सारविवेचिन्यां न दृष्टिपातोऽपि कृतः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


(९) एवं सर्वेष्वङ्गेषु अपूर्वप्रयुक्तत्वं वेदितव्यमिति न्यायप्रकाशीयपङ्क्तेः व्याख्या हि सारविवेचिन्याम्—नियमविधिस्थले नियमापूर्वप्रयुक्तत्वमन्यत्र केवलापूर्वप्रयुक्तत्वमिति। अत्रायं पर्यनुयोगोऽसमाधेय इति भाति—यत् नियमविधिस्थले दृष्टफलस्यैव प्रयोजकत्वस्य न तु नियमापूर्वस्य, अन्यथा कपालचरावप्यवधानप्रसङ्गादिति मीमांसकसिद्धान्ते कथं नियमविधिस्थले नियमापूर्वप्रयुक्तत्वमत्र वर्णितमुपपद्यत इति।

(१०) "परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यते॥"

इति श्लोकः—तदस्याङ्गपरत्वं बह्वध्याहारं चाश्रित्य व्याख्यातः, तच्च। तच्चावान्तरप्रकरणं सन्दंशेन निश्चीयते इति मूलस्वारस्यादिविरुद्धम्, अस्ति ह्यत्र विना बह्वध्याहारं श्लोकयोजनाप्रकारः यथा—पुनश्च पूर्वं पश्चाच्च परप्रकरणस्थानां दर्शपूर्णमासादिप्रकरणस्थानां प्रयाजादीनां श्रुत्यादिभिस्त्रिभिः श्रुतिलिङ्गवाक्यप्रकरणे, अङ्गे ज्ञाते शेषे अवगते, तैः सन्दंशेन पूर्वोत्तरतादृशश्रुत्यादिमध्यपातेन तत् अवान्तरप्रकरणमिष्यत इति।

अत्र सूचितेषु परिष्करणीयेष्वंशेषु सत्यं वैयधिकरण्यं न बहुस्थलेषु, किन्तु कर्तव्यांशाकरणमेव। अन्येऽपि परिष्करणीयांशा बहवोऽत्र सारविवेचिन्यामवतरणादिग्रन्थेषु वर्तन्ते। यथा (७पृः) "नन्वग्निहोत्रहोमस्य दृष्टविधया दधिनिष्ठकरणतासम्पादकत्ववत् अत्रापि यागस्य दृष्टविधयैव सोमनिष्ठकरणतासम्पादकत्वमिति कथमदृष्टद्वयापातः, अत आह—व्रीहिष्विति" अवतरणं सारविवेचिन्यां दृश्यते। इदं हि यागेन सोमं भावयेदित्यन्वयखण्डनप्रकरणम्। अत्र च पक्षे सोमनिष्ठकरणताया अपूर्वानपेक्षिण्या केनापि यागनिरूपिताया अनवगमात्, कथं सोमनिष्ठकरणतासम्पादकत्वे नान्वयो भवत्विति पूर्वपक्षिशङ्काया अवसरः?

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


"प्रथमोपस्थितत्वात्कर्तैवाक्षिप्यते ( ३१पृ: ) इत्यस्वरसादाह—किञ्चेति आक्षेपलाभासम्भवा"दिति सारविवेचिन्यवतरणम्—"किञ्च तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात् तेषामपि कर्तृवदाक्षेपलाभसम्भवा"दिति न्यायप्रकाशवाक्यस्य। यदि चावतरणोक्तरीत्या कर्तुरेवाक्षेपः तर्हि तृतीयादीनां करणादिवाचकत्वं सिद्धमेव, न च तेषामाक्षेप इति किञ्चेति वाक्यमसङ्गतार्थमेव स्यात्।

एतेन ननु यथानियमेन कर्ताऽऽक्षिप्यते न तथा कारकान्तराणि, इत्यरुचेराह किंचेति। "किञ्च यदि न कर्ता वाच्यः स्या"दिति ग्रन्थावतरणमपि—व्याख्यातम्, अत्रापि कर्तुरेवाक्षेपः न कारकान्तराणामित्यस्यैवार्थस्योपपादनादि कथं न पौनरुक्त्यम्?

एतादृशानि चावतरणान्यत्र बहु वर्तन्त इति सर्वेषामेतादृशानां सङ्कलनं बहुविस्तरसाध्यमिति परिस्करणीयानंशान् कांश्चन स्थालीपुलाकन्यायेन समसूसुचाम।

एतावता सङ्कलनेन विवक्षितोऽशोऽयमेव—ग्रन्थावतरणादिषु प्रतिपदविवरणे वाक्यानां योजनप्रकारेषु चातिसारल्यावलम्बनेन "अर्थदर्शिनो" सर्वोत्कृष्टा व्याख्या अव्यधिकरणं मीमांसासिद्धान्तानां तत्तच्छ्रौतप्रक्रियाणां च निरूपणेन सारविवेचिनी तदपेक्षयोत्कृष्टेति।

अथ मधुरेण समापनमभिलषन्तो वयमन्ते सादरं ससन्तोषं ससौहार्दञ्चेदमेव सारविवेचिनीसमालोचनेन निश्चिनुमः—यत् आश्रयत्वलक्षणानिरूपणावसरे, अव्यक्तत्वपरिष्करणावसरे, आमनहोमस्य प्रकरणग्राह्यतोपपादनावसरे, विदेवनादीनां प्रकरणविनियोगनिरूपणावसरे, श्रुत्यादिपरस्परविरोधोदाहरणावसरे, पशुपुरोडाशादि दृष्टादृष्टार्थतोपपादनावसरे, अन्येषु च बहुष्ववसरेषु श्लोक-तन्त्रवार्तिक-न्यायसुधा-शास्त्रदीपिका-न्यायरत्नमाला-भाट्टदीपिका—भाट्टकौस्तुभादिसिद्धान्ता यथासम्भवमनूदिता सारविवेचिनीकाराणामेतेषां बहुग्रन्थदर्शित्वम्, मीमांसाश्रौतप्रक्रियानिरूपणपाटवम् तत्तादृश-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


शाखाभेदगतवाक्यजातसन्दर्भपरिज्ञानम् इत्येवमादीन् बहूनेव गुणान् विशदयन्तीति। भाट्टालङ्काराथदर्शिनीगतान्येव कानिचन कानिचन वाक्यानि सारविवेचिन्यां दृश्यन्ते चेदपि भाट्टालङ्कारापेक्षया सरलता सारविवेचिन्यां सर्वसम्मतेव स्यादिति वयं विश्वसिमः।

बहुषु स्थानेषु अत्र दुर्गमा पण्डितप्रवरमात्रसुगमा भाट्टदीपिकाकौस्तुभादिसिद्धान्ताः स्वल्पैरेवाक्षरैः संगृहीता अत्रापि वर्तन्त इति न वयमस्यां शास्त्रिमहाशयप्रतिज्ञानुसारं छात्रमात्रोपकारकतां पश्याम इति दूषणमपीदं भूषणमेव शास्त्रिमहाशयानाम्।

सर्वथा तु एतन्निबन्धपर्यालोचनमपि छात्रवर्गाणां महामहोपाध्यायश्रीकृष्णनाथन्यायपञ्चाननकृतेरर्थदर्शिन्याः समालोचनमिव महत उपकाराय स्यादिति वयं प्रतीमः इति।

---

## चित्रपरिचयः

निवेशितैतत्परिषत्पत्रिकामुखपत्रे विख्यातविदुषां परिव्राजकाचार्य्य-श्रीमद्विशुद्धानन्दसरस्वतीपादानां प्रतिमूर्त्तिः। १७२७ तमे शकीयवर्षे श्रावणकृष्णाष्टम्यां दक्षिणापथवर्त्ति 'हायदराबाद'मण्डले कल्याणीत्यभिधेये पत्तने कान्यकुब्जीयब्राह्मणोत्तम-सङ्गमलालात् रत्नोवाइदेव्यां लब्धजन्मानो वंशीधर इत्याख्यया प्रसिद्धास्ते मातापितृविरहिता मातुलगृह एव शैशवमतिचक्रमुः। बाल्ये स्थितानामेवैषामनन्यसुलभं प्रतिभानलौकिमाचरितञ्च जनामनसि विस्मयमुदपादयत्। अश्वारोहण-खड्गचालनादिसंग्रामकलासु दर्शितपाटवो वंशीधरः अष्टादशवर्षे वयसि कस्यापि नृपतेः सैनिकपदमङ्गीचकार। परन्त्वचिरमेव प्रतिलब्धजन्मसंस्कारो नायं तादृशे कर्मण्यात्मानं सुचिरमनुबन्धुमपारयत्। अथैकदा परित्यक्तस्वजनावासोऽयं पद्भ्यां चरन् प्राप्तजनस्थानो नासिकतीर्थे आश्रमान्तेवासमभिप्रपेदे। तत्र तिस्रः

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



समा वेदविद्यां समधीत्य बिठूरं नाम नगरं प्राप्य परमविद्वद्भ्यो राघवेन्द्राचार्य्येभ्यो वेदाङ्गानि सम्यगधिजगे। ततश्च परितः परिव्रजन् तपोविद्यैकनिलयं विश्वेशनगरमधिशिश्राय। तत्र च श्रीमद्गौड़स्वामिमहोदयेभ्यो गृहीतसन्न्यासो विशुद्धानन्दस्वामीति गुरुदत्तनाम्ना सुप्रथितः परिशीलितसकलशास्त्रार्थो विदितसकलवेदितव्यः काशीवासमङ्गीकृत्य काशिकजनानन्वग्रहीत्। स्वामिनोऽस्य तपःश्रुतादिमहिम्ना समाकृष्टा विद्यार्थिनो ब्राह्मणा देशाधीश्वराश्च धनिकपुरुषाः सममेव शास्त्राध्ययनपादपरिचरणाद्यर्थं निरन्तरं नानादिग्भ्यो वाराणस्यां सन्निपेतुः। एवञ्च सुबहुकालं सर्वजनवन्दितचरणो महात्माऽयं १८२१ तम-शकवर्षे वैशाखशुक्लैकादश्यां समवाप्तब्रह्मभूयो यशः शेषतामधिगत इति।

## सन्देशाः

**मासिकसभा**—नगरेऽत्र लोकस्थित्यन्तरायक-महासंक्षोभसम्पाताद्विलम्बितं परिषदस्तृतीयमधिवेशनं समवर्त्तत विगतसौरज्यैष्ठस्याष्टमदिने महामहोपाध्यायश्रीमत्प्रमथनाथतर्कभूषणमहोदयानामाध्यक्ष्येण। तत्र स्वर्गतपरिषत्सदस्यानां महामहोपाध्यायगणपतिशास्त्रिणां राय-यतीन्द्रनाथचतुर्धुरीणानां पण्डितवराणामम्बिकाचरणसाहित्याचार्य्याणाञ्च गुणगरिमस्मरणेन समनुष्ठितः शोकप्रकाशः तथा वाचितः श्रीमत्सुरेन्द्रनाथसांख्यपुराणतीर्थविरचितः 'सोम' इत्याख्यो यज्ञीयसोमलताविषयकः कश्चिन्निबन्ध इति।

## सिन्धुसंस्कृतमण्डलम्

इत्यभिधानं किमपि मण्डलम् १९७५ संवद्वर्षतः १९८० संवदवधि संस्कृतप्रचाराय सुबहु यतमानं सिन्धुप्रदेशे विराजते, यस्य कार्य्यविवरणपत्रमस्माभिः प्राप्तम्। दुर्भाग्यतया भारतीयानां 'हिन्दु'प्रधानेऽपि सिन्धुप्रान्ते संस्कृतं तन्मूलकं हिन्दीवाङ्मयं वा न प्रचरति किन्तु म्लेच्छजनप्रभाविता तद्भाषैव तत्र वरीवर्त्ति। प्रमोदस्थानमेतदतीवास्माकं यत् तत्प्रान्ते मण्डलमेतदाविर्भूतमिति। एतन्मण्डलस्य सोत्साहमन्त्रिणः श्रीमन्तः वैद्यप्रह्लादरायाः साम्प्रतं कलिकातामागताः। वङ्गस्थानां धनिकानां विदुषाञ्च सर्वथा साहाय्यमर्हन्ति ते इति वयं यथार्थं प्रचारयामः। अत्र विषये भाविनि अङ्के विस्तरेण लेख्यमस्त्यस्माकम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# A FEW OPINIONS ON THE PAVANADUTAM.

( From letters to the editor )

**Prof. Hermann Jacobi :**—.........Your careful edition of Dhoyi's Pavanadutam. Your introduction furnishes the reader with the necessary information about the author, his time, the poem, its style and contents.........

**Prof. Dr. M. Winternitz, Prague :**— ......Your valuable edition of Dhoyi's Pavanadutam .....As you have had at least one good Ms. more than the first editor had, your edition is all the more welcome. The introduction is very useful.

**Prof. E. J. Rapson**—.........It is evidently a work of great interest.........

**L. D. Barnett of the British Museum, London :**—......... A most interesting poem and you have dealt with it in a very skilful manner.

**Prof. G. Tucci of the University of Rome :**—......... Your careful edition of the Pavanadutam, which I have read with the greatest interest, appreciating your scholarship and accepting your conclusions.........

**J. Van Manen, General Secretary, Asiatic Society of Bengal :**— .....I offer you my compliments with the interesting results obtained by you.........

**Forward (6, 6, 26) :**—......The learned and critical way in which it has been edited reflects much credit on the editor......

---

प्रकाशको मुद्रापकश्च—श्रीदुर्गामोहनकाव्यसांख्यपुराणतीर्थः एम्. ए.

संस्कृतसाहित्यपरिषत्, श्यामबाजार, कलिकाता।

मुद्रणस्थानम्—सिद्धेश्वरप्रेस, २८ नन्दकुमारचौधुरीसेकेण्डलेन,

कलिकाता।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# Sanskrit Sahitya Parishat Series

## JUST PUBLISHED ! JUST PUBLISHED !

1. তীর্থতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্—It gives an idea as to the most important places of pilgrimage to a Bengalee of the time of Raghunandana and gives a detailed description of the rites to be performed at those places.

Price 6 as. ; for members, 5 as.

........It is a book which is sure to be of almost invaluable help to every Hindu pilgrim. The very name of the author is a sufficient guarantee of its utility and excellence :— A. B. Patrika.

2. पवनदूतम्—Of Dhoyi, a court-poet of Lakshmanasena of Bengal. Edited with critical and historical introduction, variants, Sanskrit notes etc. etc. It will be of interest alike to students of History and Sanskrit literature.

Price 12 as ; for members, 10 as.

3. नलदमयन्तीयम् ( नाटकम् )—श्रीकालीपदतर्काचार्य्यकृतम्—The book is an example of how even a modern Pandit can express all kinds of thought and reveal the poet in him, through the medium of Sanskrit which, according to the prevailing opinion, is but a dead language.

Price Re. 1/4 ; for members Re. 1

4. प्रभाकरविजयम्—A short but illuminating exposition of the doctrines of the Prabhakara School of Mimamsa philosophy by Nandishvara. It is published here for the first time. Price Re. 1/4 ; for members Re. 1

5. प्रशस्तपादभाष्यम्—With an unpublished commentary called Sukti by the famous Naiyayika Jagadisa Tarkalankara, and a new commentary on Sukti and Bengali elucidation by the editor. Price ~~Rs~~ 2 ; for members Re. 1/8

To be had of :—
The Sanskrit Sahitya Parishat,
Shyambazar, Calcutta.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

१८४८ शकीये श्रावणे

Reg. No. C. 1073.

९म वर्षस्य ४र्थं संख्या

August, 1926

Vol. IX, No. 4

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्




सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सहसम्पादकः—श्रीदुर्गामोहनभट्टाचार्य्यः एम्. ए.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

কেশরাশিকে সুরঞ্জিত ও কোমল করিবার জন্যই

# কেশরঞ্জন তৈল

Digitized by Arya Samaj Foundation Chennai and eGangotri

এই আসমুদ্র ভারতের সর্ব্বত্রই কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে ; কেশ-রঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ-গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি একটাকা, ডাকব্যয় সাত আনা।




## স্নায়বিক দুর্ব্বলতার আশু প্রতিকারক

# সঞ্জীবন রসায়ন

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ

স্নায়বিক দুর্ব্বলতার জন্য যাঁহাদের উদ্যম, উৎসাহ, স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে, অজীর্ণ, অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে "সঞ্জীবন রসায়ন" অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহা দ্বারা বমন, উদ্গার, হিক্কা, আধ্মান (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবারিত হইয়া পড়ে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য, ও স্নায়বিক দুর্ব্বলতা নিবারণ জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবনরসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বিরল। এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ৷/০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজি শিক্ষা** পরিবর্দ্ধিত

## শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভক্ত। অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষেও ইহা একখানি নিত্য ব্যবহার্য্য গ্রন্থ। নাড়ীপরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি প্রস্তুত-বিধি, বিষচিকিৎসা, দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা এবং দ্বিতীয়খণ্ডে মহর্ষিদের গৌরবস্বরূপ—"সুশ্রুত-সংহিতা" এই সংস্করণে সন্নিবেশিত হইয়াছে মূল্য ২৷৷০ টাকা। ডাকমাশুল ও প্যাকিং ৸০ বার আনা।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং লিমিটেড

২৮।১ ও ২৯নং লোয়ার চিৎপুর রোড কলিকাতা।

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषत्

( श्यामबाजार, कलिकाता )

(Registered under Act XXI of 1860)

समितिरियं संस्कृतभाषायास्तन्मूलकप्राकृतादीनाञ्च सम्यगालोचनया यथावत् प्रसारप्रतिपादनाय प्रतिष्ठापिता (१) प्रतिमासं सभाद्यनुष्ठानेन (२) मुद्रापितानां हस्तलिखितानाञ्च ग्रन्थराशीनां परिषद्ग्रन्थागारे नियत-सञ्चयनेन (३) स्वकीये महाविद्यालये विद्यार्थिनामध्यापनेन (४) अमुद्रापित-संस्कृतग्रन्थानां प्रकाशनेन (५) अन्तरान्तरा रङ्गेषु संस्कृतरूपकाणां प्रयोगेण (६) यथानियमं मासिकपत्रिकाप्रचारेण (७) विविधैरुपायान्तरैश्च स्वमुद्देश्य-मनुकूलयति। सदस्या मूल्यं विनैव प्रतिमासं संस्कृतपत्रिकां लभेरन्, परिषत्प्रकाशिता ग्रन्थमालाश्च तेषां सुलभतरा स्युः।

## संस्कृतसाहित्यपरिषद्ग्रन्थमाला

| | मूल्यम् | | | |
|---|---|---|---|---|
| कालीतन्त्रम्—सटीकानुवादम् | साधारणानाम् | ॥৵०) | सदस्यानाम् | ॥०) |
| शङ्करीसङ्गीतम् | ,, | ।৵०) | ,, | ।०) |
| मुक्तिवादः—गदाधरभट्टाचार्यविरचितः सटीकाद्वय-भाष्यानुवादसहितः | ,, | २) | ,, | १॥०) |
| दुर्गोत्सवतत्त्वम्—रघुनन्दनभट्टाचार्यकृतम् शारदीयदुर्गोत्सवप्रमाणप्रयोगतत्त्वरूपम् | ,, | ১।० | ,, | ১) |
| पितृदयिता—अनिरुद्धभट्टकृता सामवेदीयसन्ध्या-श्राद्धादिपद्धतिरूपा | | १।०) | ,, | १) |
| दुर्गोत्सवनिबन्धकदम्बम्—दुर्गोत्सवविवेकादिग्रन्थपञ्चकात्मकम् | ,, | ॥०) | ,, | ।৶ |
| कारकोल्लासः—भरतमल्लिककृतः सोदाहरणकारकनिर्णयरूपः | | ৵०) | ,, | ৵० |
| ऋग्वेदभाष्योपक्रमणिका—सायणकृता आङ्गलभाषाटिप्पणसमेता | | ॥।०) | ,, | ॥৵० |
| ग्रहयागतत्त्वम्—रघुनन्दनभट्टाचार्यकृतम् | ,, | ।৶० | ,, | ৶ |
| तीर्थतत्त्वम्—रघुनन्दनभट्टाचार्यकृतम् | ,, | ।৶० | ,, | ৶ |
| प्रभाकरविजयम्—नन्दीश्वरविरचित-प्रभाकरसम्प्रदायानुसारिमीमांसाग्रन्थः | ,, | १।०) | ,, | १ |
| पवनदूतम्—लक्ष्मणसेनसभाकविधोयीकविकृतम् | ,, | ॥।०) | ,, | ॥৵० |
| मल्लिकामारुतम्—( सप्तनाटकम् ) श्रीकालोपदतकाचार्यकृतम् | | १।०) | ,, | १ |
| प्रशस्तपादभाष्यम्—जगदीशसूक्तिसहितम्, नवीनया सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् | | २) | ,, | १। |

**एते मुद्रापिता बहवो ग्रन्थाश्चान्ये इदानीं मुद्राप्यमाणा विद्यन्ते।**

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भारतवर्षस्य श्रेष्ठानाम् औषधालयानां चिकित्सालयानां च अन्यतमः

"आर्, सि, सेन एण्ड कों लिमिटेड्"

(यथाशास्त्रं निर्मितानि विशुद्धानि औषधानि सर्व्वदा लभ्यन्ते)

१। **च्यवनप्राशस्य** प्रतिविंशतितोलकं मूल्यं रूप्यकद्वयं २) प्रेषणादिव्ययः ।/० आणकषट्कम्।

२। **वृहच्चन्द्रोदयमकरध्वजस्य** सप्ताहार्थं मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्ययः ।/० आनकपञ्चकम्।

३। **तुषारविन्दुतैलस्य** प्रतिदशतोलकम् मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्ययः ।/० आनकषट्कम्।

(सर्व्वेषाम् औषधानां मूल्यादिविषयक-विवरणपूर्णं पुस्तकं मूल्यं विनैव प्रेष्यते।

कविराजः राखालचन्द्रसेनः एल् एम् एस्

" श्रीसुधीरकुमार सेनः

२५९ नं अपारचितपुररोड्, कलिकाता

---

सर्व्वत्र भारतवर्षे सुधीजनैः समादृतं,

कविराज-राखालचन्द्र-सेन एल्, एम्, एस्, कृतं

कुन्तलकौमुदीतैलम्

भवत्कुटुम्बमध्यवर्त्तिनीनां महिलानां केशप्रसाधनार्थं

विशुद्धोपादानजातं केशतैलमेतत् क्रीयताम्।

भवत्-स्वदेशवासिना सुशिक्षितेन भिषजा निर्मितमेतत्

तैलम्, अतो भेषजगुणैः श्रेष्ठम्।

(सर्व्वत्र गान्धिकानामापणेषु प्राप्तव्यम्)

आर् सि सेन एण्ड कों लिमिटेड्

२५९ अपारचितपुररोड्, कलिकाता

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

१८४८ शकीये श्रावणे ८म-वर्षस्य ४र्थ-संख्या


## मतिमञ्जरी

**संस्कृतविद्याया नवीनभागधेयम्**—संस्कृतविद्योन्नति-सन्तुष्टाः पाठकमहत्तमाः! नियतमेव कामयन्ते वश्चेतांसि समुन्नतिं संस्कृतविद्यायाः, यत एवाद्यापि वराकी संस्कृतविद्या नो पर्य्यष्वजत नाममात्रशेषताम्। तस्मात् नवीनोऽस्माभिरद्य वितीर्य्यमाणः सन्देशो युष्मानतिमात्रं प्रमोदं लम्भयितेति विश्वसिमः।

बहोः कालात् प्रभृति भारते वर्षे संस्कृतविद्या क्षीयमाणेव परिलक्ष्यते, राकाकिरणसम्पातात् परं सुनिविड़मन्धकारमिव सुतरां क्लेशमेव निर्वर्त्तयति तस्याः कालानुपाती प्रक्षयो नाम। तत्रैव पुनरद्य केषाञ्चन पुण्यात्मनां सदया च परिपूता च दृष्टिरापतितेति नूनमाश्वास्यानमिदमस्याः।

अधिगतमस्माभिः सामयिकसन्देशपत्रद्वारा अन्यथा च यथा श्रीयुक्तगौरीशङ्करगोयेन्का महाभागाः प्रथितनामचारित्रा नातिचिरमेव सार्द्धलक्षपञ्चकेन द्रव्याणां संस्कृतविद्योन्नतिं साधयितुं पुण्य-वाराणस्यां निखिलविद्यातीर्थे विद्यार्थिनां विशेषविद्यापरिग्रहाय

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

कस्यचन विद्यालयस्य सुप्रबन्धं सम्पादयन्तीति। व्यतीते संवत्सरे श्रीमन्तो गौरीशङ्करमहाभागा अत्रैव परिषदि समागत्य परिषदध्यक्षमहामहोपाध्यायतर्कभूषणपादप्रभृतीनामन्त्र अस्यैव महाविद्यालयस्य कृते मन्त्रणां कृतवन्त इति तदैव विज्ञातमस्त्यस्माकमस्य वृत्तान्तस्य। सम्प्रति सैव सती मन्त्रणा फलोन्मुखी दृश्यत इति नाकस्मिकमिदमस्मासु। ईदृशस्य सुखवृत्तान्तस्य आकस्मिकतायां श्रोतॄणां सुखातिशयः स्वाभाविक एव, तत्र चाद्य वयं युष्मत्तो दुर्भगा इति जानीमः। परमेवमपि कालः समवर्त्तत यदास्माभिरयं वृत्तान्तो विदितो व्यतीते वर्षे नूतनतया तदानीं सुखसम्पत्तिः क्रमेण समुपचितकल्पनासाहायकेन युष्मत्तोऽप्यस्मान् सुभगानेव प्रत्याययदिति कालप्राप्तं विज्ञाप्यते। भवतु यथा तथा वा, महाविद्यालयस्यास्य वृत्तान्तविशेषविनिवेदनेन ध्रुवमपनेया समुत्कण्ठा श्रीमतां, तत एव किञ्चिद्विवक्षितमवधातव्यम्।

अस्ति यद्यपि क्रमेण संस्कृतविद्याया भूयान् प्रचारः प्रवर्त्तमानो भारतीयेषु, सम्मान्यते चेयं देशान्तरीणैरपि बहुधा, तथापि प्राचीनसमयोचितं विशेषतो गाम्भीर्य्यं विलुप्यते तत्रेति सुविदितमेव तात्त्विकानाम्। तदेव भूयः प्रवर्त्तयितुमस्य महाविद्यालयस्य प्रतिष्ठाप्रयत्नः। अत्र हि विशेषविद्यापरिग्रहाय सामान्यतः प्रचलितरीत्या लब्धविद्या गृहीतोपाधिविशेषाश्च सम्यक्तया लब्धविशेषविद्यासारैर्विनीयेरन्। विशेषविद्यापरिग्रहाय परिगृहीताश्च विद्यार्थिन एव सामान्यभावेन विद्यामधिजिगमिषूनन्तेवासिनः शिक्षयेयुः। सर्वेषाममीषां वृत्तिव्यवस्थापि तथा कर्त्तव्या यथा विद्यापरिग्रहावसरे नार्थचिन्ताजनितवैक्लव्येन मानसविक्षेपः सुतरामलं शिक्षाप्रतिपत्तीभावमाचरितुम्। तत्र नानाविधेषु प्राचीनशास्त्रीयविषयेषु विनीताः शिष्या विद्यायाः प्राक्तनगभीरताञ्च सारवत्ताञ्च सम्यक् प्रतिपाद्य पुनरपि भारतस्य सर्वदेशशिक्षाध्यक्षतां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सम्पादयेयुरित्येव मतिरेतत्प्रबन्धकारिणां जनमहत्तमानाम्। स्वस्ति सम्पद्यतां ! स्वस्ति सम्पद्यतां !! स्वस्ति सम्पद्यतां देवताप्रसादात् !!!

अद्यापि सन्ति भारते वर्षे केचिदुत्तमा येषां प्रयत्नः संस्कृतविद्यायाः समुन्नतये नियुक्तो दृश्यते, परं प्रभूतद्रव्यविनियोगे कृतेऽपि प्रबन्धकवैकल्याद् वा परतो विनियोजकानामौदासीन्यादिदोषाद् वा न तथा फलराशिरात्मना पदं करोतीति दृष्टचरमस्माकम्; अतएवात्र श्रीमतां द्रव्यविनियोजकानां प्रबन्धकारिणाञ्च सावधानां दृष्टिमभ्यर्थयामहे। ये खलु विशेषाध्यापका नामतः समुद्दिष्टास्तत्र उपलभ्यन्ते तेषां यदि सदयमवधानमत्र कृत्ये समासाद्येत, तदा विशेषाध्यापनजनितप्रकर्षः सर्वथा समीचीनो भवितेति वाढं प्रतीमः। प्रबन्धकारिणी समितिरपि तथा विमृश्य कर्त्तव्या यथा गौरववाहिनामेतद्वस्तूनामयाहता समृद्धिः सुसम्पद्येत। अपेक्ष्यते किल तस्याः प्राचीनवस्तुविज्ञानप्रकर्षः संस्कृतनिबद्धशास्त्रतत्त्वगौरवपरिग्रहः शिक्षाशैलीबोधमहिमा विद्वत्सम्मानपरिज्ञानादिकञ्चेति।

महाविद्यालयस्यास्य प्रतिष्ठापदं पुण्यवाराणसीति युक्तमेव विमृष्टं प्रबन्धकारिभिः, परं वाराणस्यामपि यत्र तत्र महाविद्यालयोऽयं प्रतिष्ठापितश्चेत् समीचीनस्तथा न स्यात्। अद्यत्वे नागरिकवृत्त्या विद्यापरिग्रह एव विद्यार्थिनां मूलं विद्याया अवनतेः। यत्र नागरिकवृत्तिः सम्मुखे च पार्श्वे च पृष्ठतश्च समालोक्यते तत्र विद्यार्थिनामवस्थाने सम्यक्तया प्रतिरुध्यमानापि इच्छया वा अनिच्छया वा नागरिकवृत्तिरन्तरमाक्रामेत्। असति विकारकारणे नैव सम्भवितुमलं विकाराः, सति च कारणे कार्य्योत्पत्तिरिति निर्विरोधः सिद्धान्तः। बलवान् खलु पारिपार्श्विकावस्थासम्पातः, वाराणसी पुण्यपत्तनमपि समुपपन्ना नानाविधनागरिकजनोचितावस्थासम्पातेन। तद् वाराणस्यामपि महाविद्यालयस्यास्य तथा पदं निर्णेयं यत्र नागरिकभावः सविलासो विद्यार्थिनां दर्शनाद् बहिर्वर्त्तेत। सन्ति हि नाम वारा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


णास्यां तथा बहवः प्रदेशा येषु समवतिष्ठमानानां सांसारिकभावा नालमात्मानमधिकर्त्तुम्, येषु च प्रदेशेषु अवस्थानमात्रमपि चित्तममलभावं लम्भयितुमलं भवेदिति। यदि द्रव्याणि सद्विषयसम्पादनार्थं नियोक्तव्यानि तदा सर्वतः सुविविच्य व्ययः कर्त्तव्यः। एवं कृते प्रकृतमुद्देश्यमव्याहतं स्यात्। स्वस्वजात्युचिताचारादिपरिरक्षणेऽपि स्थानस्य पारिपार्श्विकावस्थाप्रकर्षस्य सदुपदेशस्य सुविश्वासस्य हेतुतामध्यासत इति स्वल्पविमर्शेनैवोपतिष्ठते।

तदेतत् सर्वं विमृश्य प्रबन्धकारिभिः प्रकृते कर्म्मणि मतिराधेया, नहि गतानुगतिकन्यायेन केवलं संस्कृतमहाविद्यालयः कोऽपि सम्पादनीयः। तथात्वे व्यर्थ एव विनियोगस्तावतां द्रव्याणां निष्फलस्य समुत्साहः कार्य्यान्तरमपहाय संस्कृतविद्यायाः समुन्नतये श्रीमतामित्यलमद्यतनविस्तरेण।

---

## वर्षाप्रकृतिः

गर्जज्जीमूतराजो निविड़परिकरव्यायतव्योममूर्त्तिः
शीर्य्यच्छुभ्रांशुसूर्य्यग्रहगणगरिमादभ्रघोरप्रचारः।
धाराकारानिरुद्धोद्धततरधरणीहृच्चवापीसमुद्रः
प्रादुर्भूतो निदाघोत्तरमतिविषमो वार्षिकः कामचारः॥ १
विद्युद्दामोद्यतश्रीप्रकटितविशदस्वर्णरज्जुप्रकाशा
जीमूता यूथबद्धा विदधति विविधव्यक्तरूपानुकारम्।
वातोद्भूताः क्षणेन क्षपितपरिसराः पर्वताग्रप्रमाणाः
शीर्षाणां शैलभाजां त्रुटिमिव सहसोद्दीपयन्तः प्रथन्ते॥ २
केकाध्वानप्रसक्तप्रमुदितहृदया नीलकण्ठाः सुकण्ठाः
पिच्छच्छायासमुच्चद्युतितरुशिखराः शेखराणां सदृक्षाः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

जीमूतस्फूर्जितानामधिगमसमये धूतपक्षार्द्धकायाः
शुद्धां शोभासमृद्धिं निदधति नितरां भूरुहाणां समाजे ॥ ३
प्राचीमुव्यक्तरक्तच्छविशबलतनुर्नोन्नता पूर्वसन्ध्या
नो वा दृप्यत्खरांशुप्रखरकरघटाघोरमध्याह्नकालः ।
नास्ते तद्वत् प्रदोषे प्रतिहततिमिरा शुभ्रशुभ्रांशुमूर्त्तिः
केयं दुःस्था व्यवस्था हतविधिविहिता विद्रुतोऽभूत् प्रसादः ॥ ४
नद्यामद्यानवद्या सपदि विघटिता नीरशुद्धिः समिद्धा
धारासङ्घातशीर्णच्छितिनिकरमृदा व्यक्तपङ्कास्तटिन्यः ।
तीरे तीरे तरूणां ततिरतिदुरितोत्पातहेतोर्विशीर्णा
स्रोतःसङ्घट्टमूलच्छितिकषणक्षमा भ्रंशते नीरगर्भे ॥ ५
नीपा दीपायमानाः सुकपिशकुसुमैस्तामसं छेत्तुकामा
दैवादव्याहताज्ञो दिशति पुनरयं तामसं कामदेवः ।
चैत्रव्रातप्रसक्तप्लुतिविपुलपयःसंगता शस्यपङ्क्ति-
र्वीतोद्भूता तरङ्गद्युतिमतिललितां श्यामलाभा वृणोति ॥ ६
तेजस्तोयेन धत्ते प्रतिदिनमभितो वैरमुच्चप्रचारं
तस्मात्तापाधिपत्यं शमयितुमधुना वार्षिकं तत्प्रवृत्तम् ।
भूपे राज्याश्रमस्थे स्थगयति रभसादन्यशक्तिं समर्थः
को वा शान्तिं प्रपन्नस्तदनुगुणमहो वैरमुल्लङ्घ्य लोके ॥ ७
सम्मर्दी दर्दुराणां नवजलदजलासक्तिसम्मत्तचित्तो
गम्भीरध्वानमत्तः श्रुतिपटुरसितः कर्दमाभ्यक्तदेहः ।
सायं प्रातः समानं घटयति पटुतामात्मनो गीतशास्त्रे
भावोन्मादेन मत्तो न भवति कुशलः स्वस्वरूपप्रबोधे ॥ ८
यावज्जीमूतरावः प्रचरति गगने वार्षिको मन्द्रमन्द्रो
यावद्वर्षाम्बुधाराकलुषमपि जलं जातमारात्तटिन्याम् ।
यावत् केकाविनोदव्यतिकरसुभगाः प्राप्तवन्तो मयूरा
हंसास्तावत्सशङ्काः परिहृतनभसो मानसं सम्प्रपन्नाः ॥ ९

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पान्थः कान्ताविमुक्तो ध्वनितमनुगतो वार्षिकाम्भोधराणां
स्मारं स्मारं विहारं हृदि विधिविहते दुःखलक्षाणि वत्ते ।
तत् किं हंसा वलक्षाः क्षपितमदहृदः क्षोभभारं वहन्तो
दूरे क्षौणीं त्यजन्तः क्षणविरहकृशां सत्वरं मानसस्थाः ॥ १०
आराद् गन्धर्वसौधं विहरति गगने भ्रान्तमभ्रं दधाने
क्वापि प्रागात् क्षणेन प्रविहतसुषमं वातसंघट्टदोषात् ।
कीनाद्योद्दामधाराधरसमितिरियं योधवीरेण योद्धुं
प्रावृट्संसर्पिदर्पा प्रचरति परितः शस्त्रशोभानभिज्ञा ॥ ११
किंवा नीलाम्बुलम्बा जलधरनिकराः श्यामशस्त्रोपचारा
वर्णैक्याल्लक्ष्यशस्त्रा विदधति गगनं दुर्विगाहं समन्तात् ।
स्वं मित्रं ध्वान्तराजो तदरिविनयनं कृत्यमित्येव बुद्ध्वा
नूनं तेजोजयार्थी प्रसरति रभसादेष जीमूतसङ्घः ॥ १२
अब्दाः प्रत्यब्दमेवं विदधति जगतो दुःखमक्षीणसारं
शीतस्पर्शाम्बुसेकादपि तपविगमे सौख्यमर्हन्ति दातुम् ।
सर्वः संसारभारो जनयति जगतां दुःखसौख्ये विमिश्रे
तत् किं वर्षासु रोषं वहति जनगणः शान्त्यशान्त्योः समत्वात् ॥ १३

सुधाकरदिवाकरौ जलदमुक्तमूर्त्ती पुनः
प्रकाशमुपदेक्ष्यतो नभसि कालरीत्याचिरम् ।
शरत्समुदयादिदं जगदभिन्नशोभं शुभां
गमिष्यति मनोज्ञतां जयति तत्र कालक्रमः ॥ १४

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# वेदान्ततत्त्वम्

निबन्धकः—श्रीअशोकनाथभट्टाचार्य्यः, बि.ए.

आस्तिकदर्शनानि नास्तिकदर्शनानि चेति दर्शनानि द्विविधानि। तत्रास्तिकदर्शनानि षट् नास्तिकदर्शनानि च षट्। तत्र षट् नास्तिकदर्शनानीमानि—

(१) चार्वाकदर्शनम्, (२—५) चत्वारि बौद्धदर्शनानि, (६) जैनदर्शनञ्चेति।

षडास्तिकदर्शनानीमानि—(१) वैशेषिकदर्शनम्, (२) नैयायिकदर्शनम्, (३) मीमांसादर्शनम्, (४) सांख्यदर्शनम्, (५) पातञ्जलदर्शनम्, (६) वेदान्तदर्शनञ्चेति।

वेदान्तदर्शनं हि तदेव यत्र वेदान्तार्थाः सम्यग्विविच्यन्ते। वेदान्तार्थश्च क इत्यस्माभिरिदानीं विचारणीयम्। तत्र बहवो (द्वैतिविशिष्टाद्वैतिप्रभृतयः) "वेदान्तार्थोऽपि पुरुषाणां कर्त्तव्यं क्रियात्मकमुपासनमेव, तेनोपासनेन ब्रह्मस्वरूपप्राप्तिः फल"मिति वर्णयन्ति। तच्चोपासनं सामान्यतस्तैलधारावदविच्छिन्नज्ञानसन्तानरूपं सदपि दर्शनसमानाकारं सदेव मोक्षजनकं भवति। अत उपासनमपि दर्शनरूपमेव विशिष्टाद्वैतमते वेदान्तार्थ इति विशिष्टाद्वैतदर्शनं वेदान्तदर्शनपदेनोच्यते। एतेषां मते त्रयः पदार्था वर्त्तन्ते—

चिज्जडौ जीवश्चेति।

चिदेव परमात्मा, जड़ः प्रकृत्यादिः जीवः प्रसिद्धः। पदार्थत्रयमपि सत्यं मोक्षपर्य्यन्तं वर्त्तते। तत्र बन्धकाले जीवानां प्रकृतेश्च बहुरूपता वर्त्तते; मुक्तिकाले तु तादृशबहुरूपताभाव इति विशेषः। जीवो जड़श्च चितमपरित्यज्य (चितोऽपृथग्भूय) वर्त्तते,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

यथास्मदीयं शरीरं जीवात्मनोऽपृथग्भूय वर्त्तते। तथा च यथा लोके शरीरस्य वस्तुत आत्मनोभिन्नत्वेऽप्यात्मा पृथक्कृत्य (निष्कृष्य) व्यवहर्त्तुं न शक्यते, एवं प्रकृतिजीवावपि वस्तुगत्या परमात्मनः सकाशात् पृथग्भूतावपि परमात्मनः पृथक्कृत्य व्यवहर्त्तुं न शक्येते। तथा च यथा लोके शरीरकार्य्यमपि लोमकेशादिकं जीवकार्य्यत्वेन व्यवह्रियते, एवं प्रकृतिकार्य्यमपि प्रपञ्चो ब्रह्मकार्य्यत्वेन व्यवह्रियते। अयं भावः—प्रकृतिविशिष्टं ब्रह्म कारणं, प्रकृतिकार्य्यविशिष्टं ब्रह्म कार्य्यमिति। तत्र यदा कार्य्याणि विनश्यन्ति तदानीं ब्रह्म कारणविशिष्टमेवावतिष्ठते। कार्य्यं यथा नश्यति न तथा ब्रह्म नश्यति। एवञ्च ब्रह्म मोक्षकाले प्रकृतिविशिष्टमेकमेव वर्त्तते। यस्तु जीवः स तु बद्धावस्थायां परमात्मनः सकाशात् पृथक्तयात्मानं मन्यते। जीवस्य बद्धता नाम स्वीयकर्मानुसारं स्वीयज्ञानस्य सङ्कोचविकाशावस्थाप्राप्तिः। यदा तु सर्व्वाणि कर्म्माणि भगवदुपासनेन नश्यन्ति, तदा सङ्कुचितज्ञानाकारो जीवो मुक्त इत्युच्यते। मुक्तावस्थायां परमात्मनः सकाशाद्भिन्नोऽपि जीवो ज्ञानसङ्कोचविकाशाद्यभावात् परमात्मनः पृथग्भूतमात्मानं न मन्यते। एवञ्च मुक्तावस्थायां यथा प्रकृतिः परमात्मनः केवलशरीरभावेनावतिष्ठते, एवं जीवोऽपि तस्य शरीरभावेनैवावतिष्ठते। तथा च सूक्ष्मचिदचिच्छरीरकं ब्रह्म एकमेव परमार्थं इति श्रीभाष्यकारमतम्। अत्र प्रकृतिर्जीवश्च नित्यौ; प्रकृतिर्भगवदाज्ञया परिणमते; प्रकृतिकार्य्यञ्च सर्वमनित्यमपि नासत्यम्; प्रकृतिरपि सत्यैव; जीवोऽपि सत्यः। कार्य्यस्य सत्यत्वं नाम सत्यकारणकत्वम्। सर्वस्य जड़प्रपञ्चस्य सत्यत्वञ्च प्रकृतिसत्यत्वेन सिद्धमेव। लोके यद्यत् प्रकृतिकार्य्यं तत्सर्वं सत्यमेव। रज्जौ सर्पज्ञानं यत् तत्रापि रज्जौ सर्पः प्रकृतिकार्य्यत्वात् सत्य एव; प्रकृत्यकार्य्यं कोऽपि कार्य्यप्रपञ्चो नास्ति। एवञ्च सर्वेषां वेदानां सर्वेषां प्रमाणान्तराणाञ्च सत्यार्थज्ञानजनकत्वमेवेति संग्रहः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

अद्वैतमते तु पदार्थद्वयमङ्गीक्रियते दृग्दृश्यञ्चेति। दृश्यमविद्यातत्प्रयुक्तान्यतरत्। तत्राविद्या प्रकृतिमायेत्यादिपदैर्व्यवह्रियते। तत्र चैतन्यं यदा दृश्यं भवति तदा दृश्यापृथग्भूतमेव श्रीभाष्यमत इव वर्त्तते। इयान् विशेषः—श्रीभाष्यमते प्रकृतेरसत्त्वं कदापि न, सर्वदा सा सती; अद्वैतमते तु प्रकृतिः कस्याञ्चनावस्थायां स्वरूपतो नष्टा सती, असती भविष्यति। अयं भावः—अद्वैतमते प्रकृतिश्चैतन्यसाक्षात्कारपर्य्यन्तं सती, तदनन्तरं न सती। अनादेरपि पदार्थस्य नाशः सम्भवत्येव, यथा नैयायिकमते परमाणुगतश्यामत्वस्य पाकेन नाशः, तथाचानादिपदार्थस्यापि प्रकृतेर्नाशोऽङ्गीकर्त्तव्यः। श्रीभाष्यमते प्रकृतेः सत्त्वरजस्तमोगुणात्मकत्वं सांख्यमत इव यन्मन्यते, तत्त्वद्वैतिनामपि न विरुद्धम्। इयान् विशेषः—अद्वैतमते तत्सत्यत्वं नाङ्गीक्रियते, श्रीभाष्यमते तत्सत्यत्वमङ्गीक्रियत इति। तथा चेदं सिद्धं भवति—यच्छ्रीभाष्यमते मुक्त्यवस्थायां पदार्थद्वयविशिष्टमेकं चैतन्यं यथा वर्त्तते, न तथाद्वैतमते, किन्तु पदार्थद्वयरहितमेकं चैतन्यं वर्त्तते।

यावता च ब्रह्म एकमेव परमार्थस्तावतेदमङ्गीकर्त्तव्यम्, यद्व्यवहारकाले प्रतीयमानानां सर्वेषां सतामपि पदार्थानां मोक्षकाले न सम्भव इति। एवञ्चाद्वैतमते प्रकृतिकार्य्याणां सर्वेषामसत्यत्वम्, न तु श्रीभाष्यमत इव सत्यत्वम्। रज्जुसर्पस्थले रज्जौ प्रतीयमानो नूतनः सर्पः रज्ज्वज्ञानेन तदानीं तत्रोत्पद्यते। तस्य रज्जुसाक्षात्कारो यदा भवति, तदानीं नाशः, तावत्पर्य्यन्तं च सत्त्वेन व्यवहारः। एवमेव प्रकृत्यादीनामपि ब्रह्मसाक्षात्कारपर्य्यन्तं सत्त्वेन व्यवहारमात्रम्, तदनन्तरन्तु न सत्त्वम्। एवञ्चाद्वैतिनां मते प्रमाणं द्विविधम्—एकं व्यावहारिकप्रमाणमपरं पारमार्थिकप्रमाणम्। व्यावहारिकप्रमाणं नाम ब्रह्मसाक्षात्कारपर्य्यन्तमबाध्यमानम्; पारमार्थिकप्रमाणं नाम सर्वदाऽबाध्यम्, यथा वेदान्तः। वेदान्तेन हि यस्य ब्रह्मणो ज्ञानं जन्यते,

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

तद्ब्रह्म सर्वदा सत्यम्। अन्येन तु प्रमाणेन बोध्यमानं घटादिकमाकाशादिकं वा न सर्वदा सत्यमिति तत्प्रमाणं व्यावहारिकप्रमाणम्।

रज्जुसर्पज्ञानन्तु व्यवहारकाल एव। अतः सर्पो नास्तीति ज्ञायमानत्वान्न प्रमाणम्, किन्तु भ्रम एव। अयं भावः—आकाशादिज्ञानं व्यवहारकाले प्रमा, रज्जुसर्पज्ञानं व्यवहारकाले न प्रमा। व्यवहारकालो नाम ब्रह्मसाक्षात्कारपूर्वक्षणावच्छिन्नः कालः। तत्र रज्जुसर्पादिकं रज्ज्वज्ञानेन यथा जन्यते, एवमाकाशादिकमपि ब्रह्माज्ञानेन जन्यते। इयान् विशेषः—रज्ज्वज्ञानं रज्जुसाक्षात्कारानन्तरमेव नश्यति व्यवहारकाल एव, ब्रह्माज्ञानन्तु व्यवहारकाले न नश्यति। तत्र यथा रज्ज्वज्ञानकार्य्यं सर्पो रज्ज्वात्मना भासते, एवं ब्रह्माज्ञानकार्य्यं जगत् सद्रूपब्रह्मात्मना भासते। रज्जौ किञ्चिद्रूपं ज्ञातं किञ्चिच्च रूपमज्ञातं यदा, तदा खलु सर्पविभ्रमो भवति। अतो यद् यदज्ञानकार्य्यमिति यत्रोच्यते, तत्र तत् किञ्चिद्रूपेण ज्ञायते किञ्चिद्रूपेण न ज्ञायते इति च वाच्यम्। तत्राज्ञानांश आवरणेन भवति। अतो रज्जुस्वरूपावारकं सदज्ञानं सर्पविभ्रमं जनयतीत्यनुभवसिद्धम्। एवमेव जगदपि ब्रह्मज्ञानकार्य्यन्तदा भवेत्, यदि ब्रह्म अज्ञानेन किञ्चिदावृतं किञ्चिच्चानावृतं भवति। तथा च सर्वं जगत् ब्रह्मकार्य्यं तदैव भवितुमर्हति यदि ब्रह्मापि किञ्चिद्रूपेण ज्ञायते किञ्चिद्रूपेण न ज्ञायते। तथा च ब्रह्मावारकस्याज्ञानस्यैव परिणामभूतः सर्वोऽपि प्रपञ्चः स्वोपादानकारणाज्ञाननाशे असत्यतया व्यवहारमर्हति। अनित्यमसत्यमिति च नैकार्थकम्। श्रीभाष्यमत आकाशादिप्रपञ्चस्यानित्यत्वमङ्गीक्रियते, न त्वसत्यत्वम्। अनित्यत्वं नाम स्वरूपेण नाशप्रतियोगित्वम्। असत्यत्वं नाम कार्य्यस्य स्वोपादानकारणात्मना नाशप्रतियोगित्वम्, यथा घटादेः, कारणस्य तु स्वरूपेण नाशप्रतियोगित्वम्, यथाऽज्ञानस्य। तथाच घटादिपदार्थो नश्वरतया प्रतीयमाना अपि ब्रह्मसाक्षात्कारपर्य्यन्तमनित्यत्वेनैव व्यवहारमर्हन्ति, न

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्वसत्यत्वेन। सर्वोऽपि प्रपञ्चोऽसत्य इत्यद्वैतिनां प्रतिज्ञापि पारमार्थिकदशायाम् ( ब्रह्मसाक्षात्कारानन्तरमित्यर्थः ) स्वकारणाज्ञानात्मना नाशाभिप्रायेणैव, न तु व्यवहारकाले तस्य स्वरूपतो नाशाभिप्रायेण। यथा श्रीभाष्यादिमते प्रपञ्चः सत्यो ब्रह्मसाक्षात्कारपूर्वक्षणपर्य्यन्तम्, तथाद्वैतमतेऽपि सत्य एव। प्रमाणव्यवहारकाले दर्शनान्तरैः साकमद्वैतदर्शनस्य प्रपञ्चसत्यत्वे न विरोधः। प्रपञ्चस्यासत्यत्वं पारमार्थिकावस्थाभिप्रायेणैवाद्वैतमते स्वीक्रियते। केषाञ्चन त्वयं महान् भ्रमो यदद्वैतिनः प्रपञ्चस्यासत्यत्वं शशशृङ्गतुल्यत्वेन स्वीकुर्वन्तीति। यथाहि शशशृङ्गं व्यवहारकालेऽप्यसन्न तथाद्वैतिनो व्यवहारकालेऽपि प्रपञ्चमसन्तं मन्यन्ते। अतः केवलमस्माभिरिदानीं वेदान्तवाक्यानामर्थविशेषनिर्णयार्थं परीक्षामात्रं क्रियते। आचार्य्यपादा अपि ब्रह्मसूत्रभाष्यं वेदान्तशास्त्रपरीक्षारूपेणैव कुर्वन्ति। श्रीभाष्यकारादयः पृच्छन्ति शङ्करभगवत्पादास्तत्त्वज्ञानिनो वा न वेति। अयमेषामाशयो यदि तत्त्वज्ञानं शङ्करभगवत्पादानां सञ्जातम्, तर्हि ते मुक्ता एव भवेयुः, मुक्तानाञ्च ग्रन्थरचनमसम्भवीति, यदि तु तत्त्वज्ञानं नोत्पन्नम्, कथं ग्रन्थरचनमुपपद्यते इति च। इदमस्माभिरपि पृच्छ्यते किं श्रीभाष्यकारा अपि मुक्ता न वेति। यदि मुक्तास्तर्हि कथं वंकुण्ठलोकाद्भूलोकमागम्य शिष्याणां प्रबोधनम्? यदि न मुक्ताः, कथं मुक्तिस्वरूपविवेचनन्तेषां सङ्गतम्? इदमेवात्र वक्तव्यं सर्व्वैरपि, यच्छास्त्रकारा इमे मननमुखेन वेदान्तार्थान् निश्चिन्वन्तीति। इदन्तु शङ्करभगवत्पादानामपि भाष्यरचनं वेदान्तार्थपरीक्षारूपत्वं भाष्यस्योरीक्रियते चेदुपपद्यत एव। प्रसिद्धमिदं सर्वेषां यदाङ्गलदार्शनिका विचारप्रसङ्गेन युक्तिद्वारा स्वानपरीक्षाणामपि बहूनामर्थानां विवेचनं कुर्वन्तीति। अतो बहूनां न्यायानां युक्तीनाञ्चोपयोगेन वेदान्तार्थविचारे क्रियमाणेऽद्वैतभाष्यकारा मीमांसादिन्यायानुसन्धानेन वेदान्तस्याद्वैतं निरूपयन्ति, श्रीभाष्य-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


कारास्तु विशिष्टाद्वैतम्। श्रीभाष्यकारमते प्रकृतिजीवविशिष्टं चैतन्यं ब्रह्मपदार्थः। अद्वैतमते केवलं चैतन्यं ब्रह्मपदार्थः। श्रीभाष्यमते जीवोऽपि स्वतन्त्रः पदार्थोऽद्वैतमते तु ब्रह्म विना जीवो न स्वतन्त्रपदार्थान्तरम्। एकश्चैतन्यं प्रकृतिसम्बन्धेनेश्वर इति, प्रकृतिकार्यान्तःकरणसम्बन्धेन जीव इत्युभयासम्बन्धेन ब्रह्म इति। तत्र जीवावस्थायामन्तःकरणेन चैतन्यस्य यः सम्बन्धो वर्त्तते, स तु सम्बन्धो यावन्न निरस्यते, तावद्ब्रह्मरूपता जीवस्य न सम्भवति। अन्तःकरणसम्बन्धनिरासश्चान्तःकरणपारमार्थिकत्वनिरासमन्तरा न सम्भवति। अन्तःकरणपारमार्थिकत्वनिरसनञ्च चैतन्येऽन्तःकरणस्य रज्जौ सर्पस्येवारोपनिरूपणमन्तरा न सम्भवति। अतोऽस्माभिर्ब्रह्मविचारात् पूर्वमिदं प्रथमतो निरूपणीयं यच्चैतन्येऽन्तःकरणस्य रज्जौ सर्पस्येवारोपः सम्भवति न वेति।

अयमेव विचारो ब्रह्मसूत्रभाष्येऽध्यासभाष्यतः क्रियते। अध्यासो नामारोपः। अत्र चैतन्येऽन्तःकरणस्यारोपः समर्थ्यते।

भाष्यकारेण सौत्रपदसूचितानामेवार्थानां निरूपणं कर्त्तव्यम्। अध्यासस्तु अथातो ब्रह्मजिज्ञासेति * सूत्रघटकेनैकेनापि पदेन स्पष्टं न सूच्यते, तथा च कथं शङ्करभगवत्पादानामध्यासभाष्यं सूत्रारूढ़मिति शङ्कात्र समापतति।

इदमत्र समाधानम्। "अथातो ब्रह्मजिज्ञासेत्यत्र" ब्रह्मशब्देनान्तःकरणस्य चैतन्य आरोपोऽपि सूच्यत एव। तथा हि ब्रह्मशब्दस्य कर्त्तृत्वादिरहितचैतन्यस्वरूपमर्थः। कर्त्तृत्वादिनाश्चैतन्येऽभावश्च चैतन्ये कल्पितत्वमन्तरा न सम्भवति। यद्यत्र प्रतीयते तत्तत्र तदैवाविद्यमानमिति वर्णयितुं शक्यते, यदि तत्तत्र कल्पितम्; यथा रज्जौ प्रतीयमानः सर्पः कल्पितत्वान्न रज्जौ वर्त्तते, एवं कर्त्तृत्वस्यापि

* ब्र, सू, १।१।१

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

चैतन्येऽभावो यदि कल्पितत्वेनैव सम्भवति तर्हि कर्त्तृत्वादिरहित-चैतन्यबोधकेन ब्रह्मपदेन कथं कर्त्तृत्वाद्यारोपोऽपि न सूच्यते ? एवञ्च ब्रह्मपदसूचितत्वादध्यासस्याध्यासभाष्यं सूत्रारूढ़मेवेति ।

[क्रमशः]

---

## विविदिषा

निबन्धकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः

वेदान्तादिदर्शननिचयस्य प्रायेण सर्व एव भाष्यटीकादिकृतः यथा स्वतन्त्रेषु बौद्धविद्वेषं प्रकटितवन्तस्तद्दर्शनेषु कृतश्रमाणां सर्वेषां सुविदितमेव । दूरमास्तामन्येषां प्रसङ्गः, स्वयं भगवान् शङ्करोऽपि परमतं निरस्यन् "इति दम्भभङ्गन्यायेन प्रथममुद्गरप्रहारः" इत्यादिवाक्यैः निबन्धविशेषाणामुपसंहारं कुर्वन् तादृशजनोचितविनयादम्भधीरतादीनामभावं प्रकटयामास । तथा च स—

"विवदत्स्वेव निक्षिप्य विरोधोद्भवकारणम् ।
तैः संरक्षितसद्बुद्धिः सुखं निर्वाति वेदवित् ॥"

इत्यादि वाक्यं वदन्नपि "अतो न तार्किकवादभटप्रवेशः वेदान्तराजप्रमाणबाहुगुप्ते इहात्मैकत्वविषये" इत्यादिसगर्वभाषणात् न विरराम । शङ्करशबरकुमारिलादिकृतनिबन्धपाठात् तेषां विजिगीषुत्वं सुष्ठु विज्ञायते । इह तु विजिगीषूणामियं प्रथिता प्रवृत्तिर्यत् ते तर्कजालैः स्वमतान्यथावादिनां परिस्फुटमपि विज्ञानमाच्छाद्यात्ममतं प्रख्यापयन्ति । यदा तु मध्यस्थनिर्णयपुरःसरं वादिप्रतिवादिनोः वाचनिकी तत्त्वसम्भाषा प्रवर्त्तते तदा त्वीदृशपरमतप्रच्छादनं दुःसम्पादमेव भवति, परं परोक्षे एव प्रतिवादिनः यदा कश्चित् वादिप्रतिवादिपरिप्रश्नं स्वयमाक्षिप्य तन्निरस्यति तदा तु सर्वथैव स स्वानुकूलं तर्कजालं विस्तारयतीति यथाधुनिकानां शैली तथा प्राचीनानामपि ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तथा चैवं वेदान्तादीनां षसां प्रस्थानानां भाष्यादिकृद्भिः परस्परं विवदमानैः अन्योन्यसिद्धान्तेषु दोषराशिं समुद्भावयद्भिः, न तेन पाण्डित्यं न प्रकटीकृतं परमनतिप्रयोजनीयवादविषयाणामसकृदालोचनगहणवाग्विन्यासेन त्रेयमाविलीकृतं शास्त्रमपि विकटीकृतमिति ब्रूमः। भवतु इदमस्माकं परमसौभाग्यं यत् विजिगीषा प्रवृत्तिप्रणोदितानां परस्परमतनिरसनात्, स्वमतं समर्थयतां गभीराकूतप्रकाशनात्, स्वमतप्रस्थापनाच्च वेदान्तादिशास्त्राणां भूयसी चर्चा, बहूनां शास्त्रग्रन्थानां प्रणयनप्रचारौ चाभवताम्। परमिदमस्माकं परमदुर्भाग्यं यत् तथाक्रान्तानामपि भगवद्बुद्धसेवकानां प्रतिवादिमतनिरासकं ग्रन्थादिकं दुस्प्रापतामधिगतम्। तत्र तथाविधग्रन्थानां दुष्प्रापत्वे बौद्धानां स्वपक्षदुर्बलत्वमेव कारणमिति केचिन्मन्यन्ते, परमितिहासोऽत्र विसंवदते। खृष्टीयाष्टमशताब्द्याः शेषभागे दाक्षिणात्ये भगवान् शङ्कराचार्य्यः प्रादुरासीत्, तदेव उत्तरापथेऽपि कान्यकुब्जादौ लब्धराजबलवेदमार्गानुसारिणः कालप्रभावात् कदाचारकलुषितान् क्षीणप्रभावान् हतगौरवांश्च बौद्धान् विद्याबलचारित्रमाहात्म्येनाभिभूय प्रबला बभूवुः। तदानीन्तु दुर्बलानां बौद्धानां बहव एव वैदिकधर्म्मं परिजगृहुरपरे च स्वधर्म्मलोपभिया स्वदेशं परित्यज्य नेपालतिव्वतादिदुर्गमपार्व्वत्यप्रदेशानध्यवसन्। बौद्धानां धर्म्मपुस्तकानां च बहून्येव विनाशपदवीमगच्छन्। बौद्धेषु ये केचित् शास्त्रप्रणेतारः अध्यापकाश्च विद्वांस आसन् तेषां बहव एव संसारत्यागिनः सन्न्यासिनः गुहाविहारादिवासिनश्चासन्—अतस्तेषां धर्म्मपुस्तकानि च तत्तत्स्थानेषु रक्षितानि आसन्। तत्रैकत्र नालन्दामहाविहारे एव षड्लक्षाणि पुस्तकानि अभवन् सर्व्वाणि तानि शत्रुदत्ताग्निज्वालया भस्मीभूतान्यभवन्। उत्पीड़ितानाञ्च बौद्धानामनेके देशान्तरगमनसमये तेषां सर्व्वस्वभूतानि पुस्तकानि समादायैव जग्मुरित्यादि नानाकारणैरधुनास्मद्देशे न केवलं बौद्धानां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

परं तेषां पुस्तकानामपि विरलप्रचारो दृश्यते। सर्व्वेषामेव सहृदयानां धन्यवादभाजस्ते वैदेशिका राजपुरुषा येन केवलं प्रभूतार्थव्ययेन परं प्रभूतोत्साहेन च बौद्धशास्त्रस्य बहुग्रन्थान् तिव्वतादिप्रदेशात् समाहृत्य प्रकाशयन्ति। अपरञ्च बौद्धवैदिकयोरुभयोरेव शास्त्रयोः समाग्रहशालिनां पक्षपातविरहितानाञ्च तेषां बौद्धशास्त्रादिनानाविद्याचतुराणां समालोचनानि अस्माकं परमलाभस्थानमिति निर्विवादम्।

रामायणादारभ्य प्रायेण सर्वेष्वेव वैदिकमार्गानुयायिनां प्राचीनेषु शास्त्रेषु बौद्धाः, "पाषण्डाः, वेदनिन्दकाः, नास्तिकाः" इत्यादिभिः गर्हणैराचिताः उपलभ्यन्ते। तत्र रामायणे बौद्धमतदूषणं दृश्यते, बौद्धमतञ्च तत्र चार्व्वाकमतसदृशमेव।

अपि च तत्र केवलं बौद्धशब्ददर्शनात् बौद्धशास्त्रेषु च बहुबुद्धप्रादुर्भावावलोकनात् किं तत्र शाक्यबुद्धमतं दूषितम् उत अन्यतमस्य कस्यचिदादिबुद्धस्य तन्निश्चयेनाभिधातुं न शक्यते। बौद्धशास्त्रेषु शाक्यबुद्धात् प्राग्वर्त्तिनि काले बहवो बुद्धाः जन्मपरिग्रहमङ्गीकृत्य दयानुकम्पामैत्रीप्रभृतिकं लोके प्रचारयामासुरित्युपलभ्यते, परं तत्र बुद्धानां तेषां विशेषेण मतनिश्चयो नास्ति। रामायणञ्च भगवता वाल्मीकिना शाक्यबुद्धस्याविर्भावात् प्रागेव विरचितं बभूव, अतः तत्र यत् बुद्धमतदूषणं दृश्यते न तेन शाक्यबुद्धमतं दूषितमिति ब्रूमः। भगवता गौतमेन आदिबुद्धानां मतं सर्वथा गृहीतमित्यपि वक्तुं न शक्यते, परन्तु तेन बहुत्रैव हंसक्षीरन्यायेन वैदिकमतं गृहीतमिति विशेषज्ञानां सुविदितमेव। महाभारते नीलकण्ठादिभिः टीकाकृद्भिः व्यासभाषिते बुद्धमतदूषणं नाम्नायि इति न, परं सनत्सुजातीयपर्वप्रभृतीनां टीकासु भूयोभूयः बौद्धमतं सन्दूष्य शङ्करमतस्थापनमेव कृतमित्युपलभ्यते।

अर्व्वाचीनानां बौद्धमतदूषकाणां भगवान् शङ्कराचार्य्य एव गुण-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

 Digitized by Arya Samaj Foundation Chennai and eGangotri 

गरिष्ठतयाग्रणीरित्यभिधातुं सर्वथा युज्यते। तेन भगवता ब्रह्मसूत्रस्य द्वितीयपादस्य द्वितीयाधिकरणे "समुदाय उभयहेतुकेऽपि तदप्राप्ति"रित्यारभ्य "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेष" इत्यन्तानामूनविंशतेः सूत्राणां भाष्येषु विविधबौद्धप्रस्थानानि दूषितानि, तन्त्रवार्त्तिकप्रभृतिषु भट्टादिभिरपि बौद्धमतं निष्ठुरमाक्रान्तं, किमधिकं सर्वेषामेव परवर्त्तिनां दार्शनिकानां भूयान् बौद्धमतनिग्रहाग्रहो दृश्यते, तत्रास्माकं किञ्चिद् वक्तव्यमस्ति, तच्चोपरिष्टात् वक्ष्यते।

( २ )

आस्तिकदर्शनानां श्रुतिरेव परमं प्रमाणम्। न केवलं दर्शनानां परं सर्वेषामेवार्षशास्त्राणां कलाविद्यानामपि वेदा एव मूलम्। तथापि सर्वेषामेव विपश्चितां वेदवाक्येषु सदृशी श्रद्धा न दृश्यते। षड्दर्शनानि त्रिधा विभाजयितुं शक्यन्ते, तद्यथा—(१) स-योगसांख्यशास्त्रम्, (२) स-वैशेषिकन्यायशास्त्रम्, (३) पूर्वमीमांसासहित-वेदान्तशास्त्रञ्च। तत्र योगन्यायवेदान्तेषु सुस्पष्टमीश्वरः स्वीकृतः, अपरेषु च त्रिषु स्वीकृतोऽस्वीकृतो वेश्वर इति विचार्य्यमेव। अपि च तत्र केवलं वेदान्तशास्त्रं पूर्वमीमांसाशास्त्रञ्च निःशेषेण वेदानां प्रामाण्यमङ्गीकरोति, वेदवाक्यमेव तयोः सर्वस्वमित्यपि नात्युक्तिरेव। न्यायशास्त्रं वेदवाक्यमाप्तवाक्यमिति प्रमाणत्वेन गणयदपि वेदानामपौरुषेयत्वमन्धवन्नाङ्गीकरोति, पञ्चाङ्गन्यायशोधितां युक्तिमेव सारतयोपादत्ते च सांख्यशास्त्रं वेदवाक्यानां कानिचित् प्रमाणत्वेन उपादत्ते अपराणि च दोषाघ्रातत्वेन परिहरति। भगवान् कपिल एव प्रथमं दृष्टवदानुश्रविकस्य सर्वत्र प्रमाणानुपयोगितां पश्यन् वेदोक्तमतं श्रद्धातव्यमिति सर्वथा मूढवत्परप्रत्ययनेयबुद्धिभिर्विद्वद्भिर्न भवितव्यं परं सर्वेषामेव वाक्यानां परीक्षणं युक्तमिति जगति तारस्वरेण घोषयामास। केचित् चार्व्वाकादय आदित एव वेदवाक्येषु वेदोक्तानुष्ठानेषु चाश्रद्धावन्त आसन् परवर्त्तिनः पण्डितास्तेषां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


देहात्मवादं निराकुर्वन्तोऽपि अन्यान् वादान् कथमपि विचालयितुं नाशक्नुवन्, सर्व्वदर्शनसंग्रहकृता माधवाचार्य्येणापि "दुरुच्छेदं हि चार्व्वाकस्य चेष्टित"मिति स्वीकृतमेव अतो वेदमप्रमाणयन्नपि चार्व्वाकोऽपि न तुच्छ इत्यवधेयम्। गीतायामपि—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ ! नान्यदस्तीतिवादिनः॥"

तथा— "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन॥"

इत्यादिकं वदता भगवता मीमांसका गर्हिताः।

"यावानर्थ उदपाने सर्व्वतः संप्लुतोदके।
तावान् सर्व्वेषु वेदेषु ब्राह्मणस्य विजानतः॥"

इत्यादिभगवद्वाक्यस्य वृद्धव्याख्यया च वेदानामकिञ्चित्करत्वं घोषितम्। एवं बहुत्रैव पूज्या अपि वेदानां सर्व्वत्र प्रामाण्यं न स्वीकृतवन्तः केवलं निबन्धस्यानर्थकगौरवभिया तत्सर्व्वं नोदाह्रियते परमाश्चर्य्यं यस्मिन् देशे "वेदः पौरुषेयो वेदत्वात् आयुर्व्वेदवत्, वेदः पौरुषेयः वाक्यत्वात् भारतवत, वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत्" इत्यादि वाक्यैरस्मदादिवाक्यैस्तुलयन्तः वेदवाक्यानि कुसुमाञ्जलिकृदुदयनादयः सम्मानितास्तत्र हंसक्षीरन्यायेन वेदवाक्यानि उपाददानाः लोकानुग्रहाय कृतावतारा बुद्धादयो नास्तिका इति कृत्वा न समादृताः परं निपीड़ितास्तन्मतावलम्बिनः स्वदेशाद् विताड़िताश्चेति महद्दुःखस्थानम्। यदि नाम ये केचन सर्वत्र वेदानां प्रामाण्य' नाङ्गीकुर्वन्ति ते एव निन्दनीया भवन्ति तर्हि कथं कृष्णकपिलादीनां वाक्येषु समादरः बौद्धवाक्ये चाश्रद्धा इति दुरुत्तरः दुःसमाधेयश्च प्रश्नविषयः। बौद्धा ईश्वरमात्मानञ्च नाङ्गीकुर्वन्ति तन्मते सर्वं शून्ये पर्य्यवस्यतीति यत् श्रूयते तत्तु कथं हेयं तत्सर्वं अधस्तात् दर्शयिष्यते। धर्म्मशास्त्रेतिहासपर्य्यालोचनयावगम्यते यत् पुरा


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

भारतवर्षेऽस्मिन् साम्प्रदायिकविद्वेषः अतिशयप्रबल आसीत्। कदाचित् सम्प्रदायविशेषः सम्प्रदायान्तरात् विवादच्छले पराजयमधिगम्य यथाशक्ति शस्त्रेण शास्त्रेण, वा "चापेन शापेन वा" अरातिदलनं मुख्यव्रतममन्यत। यदा तु शङ्करादिवत् प्रबलपण्डिता विरुद्धसम्प्रदायस्य नायकपदमलमकुर्वन् तदा तु निर्जितसम्प्रदायः सुसमयोदयं प्रतीक्षमाणः तुष्णीम्भावमेव श्रेयसे मन्यमानश्च उपरते प्रबलप्रतिवादिनि प्रतिपक्षदलनबद्धपरिकरो भूत्वा छलेन बलेन वा तेषामुच्छेदाय प्रावर्त्ततेति इतिहाससंवादः बहुभिरेव दृष्टान्तैः स्फुटीकृतो दृश्यते। तथा च नागार्जुनाश्वघोषबुद्धघोषादीनामाविर्भावकाले तादृशप्रज्ञावतां मतोच्छेदार्थं न दृश्यते कश्चिच्छङ्करादिवदवतारः परं प्रक्षीणे एव बौद्धसम्प्रदाये वेदान्तवादिनामभ्युदयो नास्तिकमतमिति कृत्वा बौद्धमतदलनञ्च। शङ्करवाचस्पत्यादिपण्डितवर्गे तिरोभूते रामानुजादीनामवतारः लोकविमोहनाय भगवता कैलाशपतिना शङ्करमूर्त्तिं परिगृह्य मायावादः प्रचारित इत्यादि वाक्यजातं पद्मपुराणे प्रक्षिप्य "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव त" दित्याद्युक्त्या शङ्करमतदूषणञ्च। किमधिकं चैतन्यदेवेनापि वादरायणसूत्रतात्पर्य्यं स्फुटमवगम्यते न तु भाष्यकृदुक्तायस्तत्र तु कुव्याख्यया सूत्रार्थाः समाच्छादिता इति अभियोगो दत्तः (चैतन्यचरितामृतम्)। तिरोहिते चैतन्यदेवे त्रिपुरासुरः लोकबुद्धिविमोहनाय चैतन्यरूपेणाविर्भूतो बभूव इति तन्त्रकृद्भिर्घोषितम्। तथा च तन्त्ररत्नाकरे "निहते त्रिपुरासुरे तस्यासुरं तेजः किमभूत्" इति वटुकभैरवप्रश्ने गणाधिपतिवाक्यं—

"स एष त्रिपुरो दैत्यो निहतः शूलपाणिना।
रुषया परयाविष्ट आत्मानमकरोत् त्रिधा॥
शिवधर्म्मविनाशाय लोकानां मोहहेतवे।
हिंसार्थं शिवभक्तानामुपायानसृजद् बहून्॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

अंशिनाद्येन गौराख्यः शचीगर्भे बभूव सः ।
नित्यानन्दो द्वितीयेन प्रादुरासीन्महाबलः ॥
अद्वैताख्यस्तृतीयेन भागेन दनुजाधिपः ।
प्राप्ते कलियुगे घोरे विजहार महीतले ॥
ततो दुरात्मा त्रिपुरः शरीरैस्त्रिभिरासुरैः ।
उपप्लवाय लोकानां नारीभावमुपादिशत् ॥"

शङ्कराचार्य्योऽपि पाद्मे एवमेव लोकानां मोहहेतवे विरुद्धसम्प्रदायेन अभियुक्तस्तत्पूर्वमेवोक्तम् । तथा च चैतन्यचरितामृतधृतपाद्मोत्तरखण्डश्लोकौ—

स्वागमैः कल्पितैस्त्वञ्च जनान् मद्विमुखान् कुरु ।
माञ्च गोपय येन स्यात् सृष्टिरेषोत्तरोत्तरा ॥
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव तत् ।
मयैव विहितं देवि कलौ ब्राह्मणमूर्त्तिना ॥

तत्राद्यः शिवं प्रति कृष्णवाक्यं, द्वितीयश्च पार्वतीं प्रति शिववाक्यम् ।

प्रतिपक्षदलनस्य चरमोपायः शङ्कराचार्य्यप्रादुर्भावकाले एव अवलम्बितो दृश्यते । तथा च सुधन्वाख्यस्य कस्यचित् राज्ञः विषये शङ्करविजयनाम्नि ग्रन्थे उपलभ्यते वार्त्ता यत् "दुष्टमतावलम्बिनः बौद्धान् जैनान् असंख्यातान् राजमुख्याननेकविद्याप्रसङ्गभेदैर्निर्जित्य तेषां शीर्षाणि परशुभिश्छित्त्वा बहुषु उलूखलेषु निक्षिप्य कठभ्रमणैश्चूर्णीकृत्य चैवं दुष्टमतध्वंसमाचरन् निर्भयो वर्त्तते ।"

एभिरेव प्रमाणैर्बुधा एव निर्णयमधिगच्छन्तु कथं बौद्धाः देशादस्मादुत्सादिता इति । साम्प्रतमस्तमिते साम्प्रदायिकविद्वेषे कर्त्तव्यमेतत् विपश्चितां यदपक्षपातेन सर्वेषामेव मतानि समालोक्य तेषां तात्पर्य्यनिर्द्धारणं, यतो दृश्यते प्रतिवादिभिः कुत्रचिदुपहन्यमानमपि सर्वमेव मतमनन्यसाधारणं किञ्चिल्लोकोपदेशकं सारतमं सत्यञ्च तत्त्वं बिभर्त्ति, तस्य तात्पर्य्यज्ञानं हितमेव लोकानामध्यात्मतत्त्वरसिका-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

नामाधत्ते, अपि च सर्वेषां बहुमतं वेदान्तशास्त्रमपि यदा श्रुतिवाक्यानां तात्पर्य्यमेवोपादत्ते तदा बौद्धादीनामपि शास्त्राणि न कथं तात्पर्य्यग्रहणेनाध्येतव्यानि भविष्यन्तीति तत्र हेतुसद्भावः कथमपि नाभ्युपगम्यते।

"यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत।

अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्॥"

इत्युक्तदिशा सर्वे एव बुद्धशङ्करादयो भगवदवतारा इत्युदारसिद्धान्तः सर्वथैव माननीयस्त्र। अधुना बौद्धसम्प्रदायग्रन्थेभ्यः किञ्चिद्विवरणमाहृत्य पाठकानां पुरत उपस्थाप्यते येन भगवान् बुद्धो नास्तिक आस्तिको वासीत्, तस्य शून्यवादः सर्वेषामेव वस्तुजातानामभावं व्यपदिशन् किञ्चिदपि नित्यवस्तु न स्वीकरोति आहोस्वित् वैदान्तिकानामिव भावरूपं किञ्चिन्नित्यवस्तु बोधयति, वेदेषु तस्य कीयती श्रद्धासीत्, वेदमार्गानुसारिभिस्तस्य सादृश्यं वैसादृश्यं वासीत्, स श्रद्धेयवचन उताहो अश्रद्धेयवचनः—सर्वेषामेतेषां संशयानां किञ्चित् समाधानमुपलप्स्यते। ( अवशिष्यते )

---

## विश्वामित्रहरिश्चन्द्रसंवादः

( पूर्वतोऽनुवृत्तः )

निबन्धकः—स्वर्गत-योगीन्द्रनाथविद्याचुञ्चुः

प्रकाशकः—श्रीहरिपदभारतीभट्टाचार्य्यः

(दक्षिणार्थं पुनरागतेन विश्वामित्रेण सह हरिश्चन्द्रस्य पुनः सम्भाषणम्)

विश्वामित्रः। राजन्ननामयकथां वद दक्षिणायाः,
हरिश्चन्द्रः। लब्धं पदाम्बुजरजो भवतां कुतोऽन्यत्,
विश्वामित्रः। आस्तां विनीतवचनं नहि तेन तृप्तिः,
हरिश्चन्द्रः। दृष्टं मया न तु कपर्दकवक्त्रमेकम्॥ २७

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

विश्वामित्रः। सन्तर्पितोऽहं वचसा तथाद्य
हरिश्चन्द्रः। किंवा विधेयं बहुचेष्टितं मे।
विश्वामित्रः। चेष्टामचेष्टां तव नैव वेद्मि
हरिश्चन्द्रः। अपेऽद्य तुभ्यं न मृषा ब्रवीमि ॥ २८
विश्वामित्रः। सत्यं मृषा वा किमु तेन कार्य्यं
हरिश्चन्द्रः। कस्मिन् भवेत्तत् परिकीर्त्तनीयम्।
विश्वामित्रः। किं निद्रितस्त्वं किमु वा प्रमत्तः
हरिश्चन्द्रः। कथं हि दासं प्रति तीव्रवाक्यम् ॥ २९
विश्वामित्रः। अस्माकमिष्टमथ किं किमु तेन वृत्तं
हरिश्चन्द्रः। किं ते ब्रवीमि भगवन् पुनरुक्तवादैः।
विश्वामित्रः। कीदृक् त्वया कृतमहो धनमाप्तुमिष्टं
हरिश्चन्द्रः। भिक्षाटनं पुरवनाद्रिसरित्तटेषु ॥ ३०
विश्वामित्रः। राजन् तवैव सविधे धनमस्ति गुप्तं
हरिश्चन्द्रः। तुभ्यं अपे यदि कपर्दक एक आस्ते।
विश्वामित्रः। एकान्ततो जड़मतिस्त्वमतीव जातः
हरिश्चन्द्रः। नो बुध्यते तव गिरां किल गूढ़तत्त्वम् ॥ ३१
विश्वामित्रः। आत्मैव बन्धुरिति किं विदितं त्वया नो ?
हरिश्चन्द्रः। वाढ़ं परं भवति किं ननु तेन मेऽङ्ग।
विश्वामित्रः। विक्रीयतां स इह ते दयितेव पूर्व्वम्
हरिश्चन्द्रः। आशीर्वचस्तु भवतां शिरसोह्यते मे ॥ ३२

श्रुत्वा मुनेर्गिरमनन्यगतिर्नरेशः
कर्त्तव्यबोधरहितः क्षणमेकमासीत्।
इत्थं विचिन्त्य मनसा नियतिर्नराणां
भोगं विना क्वचिदपि क्षयमेति नाल्पम् ॥ ३३
सारत्वमस्मिन् क्व नु विद्यते वा
संसारबन्धे क्षणभङ्गशीले।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

पुरं कदाचिद् गहनायमानं
वनञ्च काले नगरत्वमेति ॥ ३४

माया पिशाची बहुशः प्रलोभ्य
स्वाधीनवृत्तिं हरते नराणाम् ।
सन्दर्शयन्ती मणिरत्नमाल्यं
विन्यस्यतीयं हृदये भुजङ्गम् ॥ ३५

मोहान्धकारावृतकक्षमध्ये
मात्सर्य्यदुर्गन्धमये सदैव ।
सूते च पुत्रान् मदमानदर्पान्
कामेषु रक्ता नवयौवना सा ॥ ३५

कोऽहं भवेऽस्मिन् मुनिरप्यसौ को
राज्येन सार्द्धं मम बन्धनं किम् ?
जाया च पुत्रश्च धनञ्च सर्वम्
पाशायमानं तनुभृद्गणानाम् ॥ ३७

मानापमानौ व्रजतं मदीया-
च्चित्तात् सुखाशे नहि ते स्मरामि ।
धिक् तस्य देहं जननञ्च भूमौ
सहेत योऽस्यामृणवह्नितापम् ॥ ३८

विक्रेतुमात्मानमसौ तदास्यां
व्यज्ञापयद्राजपथे विपण्याम् ।
चण्डालरूपो पुरुषोऽभ्युपेत्य
प्रदाय पण्यं नृपमग्रहीच्च ॥ ३९

परीक्षितुं तं स्वयमेव धर्म-
श्चण्डालरूपं परिगृह्य राज्ञे ।
दत्त्वा सहस्रार्द्धमृषिप्रदेयं
न्यवेशयत्तं शवदाहवृत्तौ ॥ ४० (अवशिष्यति)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# भट्टसङ्कटम्

## प्रहसनम्

( पूर्व्वतोऽनुवृत्तम् )

निबन्धकः—श्रीश्रीजीवन्यायतीर्थः एम्. ए.

## चतुर्थोऽङ्कः

उत्पलावतकाननप्रान्तभूमिः ।

( ततः प्रविशन्ति विरोधो बलाको राक्षसयोषितश्च )

विरोधः । हाः ! हाः !! हाः !!! अहो प्रभावोऽस्माकम् ।

बलाकः । हाः ! हाः !! हाः !!! अहो पराभवो ब्राह्मणस्य ! यदधुना वयं यज्ञीयद्रव्याण्यपहरामः सर्व्वत्रैव निर्व्वाधम् ।

विरोधः । ( आकाशे ) भो ब्राह्मण, क्व ते मन्त्रगर्व्वः ? क्व वा यज्ञेषु प्रभावः ? सैषा ते कामिनी नीलवर्णा विजयपताकेवास्माकं कान्तारमध्ये निहिता तिष्ठति । अहो कौशलमाविष्कृतमस्माभिः ।

बलाकः । विरोध, सत्वरमेहि यज्ञान्तरभङ्गाय । क्षुधा मां बाधते ।

विरोधः । प्रियसख्यः, ऋतुलीला महोत्सवसङ्गीतमारभ्यताम् । यावद् वयमपि स्वकर्म्मसम्पादनाय प्रयतामहे । एहि, बलाक ।

( इति निष्क्रान्तौ विरोधबलाकौ । )

( सर्व्वा एकैकशो गायन्ति )

सुधन्या । अहं वसन्तः

अधन्या । शरदस्मि चाहम्

विरोधिनी । ग्रीष्मोऽह—

बलाकिनी । मस्मेव पयोदकालः ।

अलसा । हेमन्तनामाह

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अवश्या। महञ्च शीतः।

सर्व्वाः। का तावदस्मासु दिवाकरः स्यात्॥

राक्षसः कश्चित्। (प्रविश्य) कामिनी नाम ब्राह्मणी। अथवा साम्प्रतमहमेव दिवाकरोऽस्मि।

(इति सर्व्वा मण्डलाकारेण तं वेष्टयन्ति, गायन्ति नृत्यन्ति च)

शरदि वसन्ते पुष्पविकाशा ग्रीष्मे विरहजलापविलासाः।
प्रावृषि नयनजवारिविधानं हेमन्ते नवहर्षनिधानम्॥
शीते जड़तागुरुगुरुभाव ऋतुरमणेऽस्मिन् कः खलु लाभः।
कृत्वा भावविशेषितवेशान् मनसि लभेमहि हर्षविशेषान्॥

विरोधिनी। विरम्यतां सख्यः। मानुषीसुरभितेऽस्मिन् देशे न शोभते ऋतुलीलोत्सवस्य चिरानुष्ठानम्। यदेनं न जानन्ति मानुष्यः। सुष्ठु शोभते साम्प्रतं मानुषी क्रीड़ा, या विरहविधुरामपि कामिनीं विनोदयिष्यति।

अपराः। न जानीमस्तादृशीं क्रीड़ाम्।

विरोधिनी। तिष्ठत, दर्शयामि। (राक्षसं प्रति) वेङ्कट, गच्छ त्वं, कथय च कामिनीमत्रागन्तुम्।

राक्षसः। यथाह भवती। (सानन्दं धावन् निष्क्रान्तः)

विरोधिनी। सुधन्ये, त्वामेवादौ मानुषक्रीड़ायां नियोजयामि। आगच्छ, मानुषीवेशं ते विरचयामि।

(सुधन्या पुरः प्रसरति, विरोधिनी तन्मुखे मसीं लेपयति। अपराश्च विहस्य पलायन्ते)

सुधन्या। (कपोलयोः करस्पर्शेन मसीलेपमनुभूय) अहो क्लेशदः परिहासः! सत्यं त्वं विरोधिनी। यन्मे पलाण्डुपाण्डुरौ गण्डौ मलिनयसि मसीलेपनेन। (विरोधिन्या वस्त्रमाकृष्य कपोलौ प्रोञ्छितुमीहते)

विरोधिनी। (किञ्चिदपसृत्य) मा तावदकाण्डे परिक्रियता-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

मस्माकं क्रीड़ा। सुधन्ये, सत्यमेव त्वयि मानुषोभ्रमो जायते। यदि न विश्वासो मद्वचसि, दृश्यतामियमागच्छति कामिनी, तया सह संवादय ते साम्प्रतिकं रूपम्।

सुधन्या। तिष्ठ, सर्वं कथयामि कामिनीम्। (उच्चैः) सखि कामिनि, इत इतः।

(कामिनीमागच्छन्तीं विलोक्य विरोधिनी निष्क्रान्ता)

कामिनी। (प्रविश्य) अरे सुधन्ये, किं ते मुखे दृश्यते? अहो कलङ्ककालिमा, किं विधिना दत्तः? मातृग्रजनापहरणापराधं चिराय न मर्षयिष्यति वेधाः। सुष्ठु शोभसे।

सुधन्या। सखि कामिनि, किं वृथा मामुपालभसे? दुष्टा विरोधिनी ममोपरि वैरं कृतवती न विधाता। मानुषीवेशविधानव्याजेन कपोलयोर्मसीलेपनं विधाय त्वां दृष्ट्वैव सा पलायिता। जानासि प्रियसखि, यत्तस्या एव वल्लभो विरोधस्वामहरच्च मे भर्त्ता; कथं मम दण्डं विधास्यति वेधाः?

कामिनी। अहो स्पर्द्धा विरोधिन्याः क्व गता सा राक्षसी? अहमेव तां दण्डयामि; किं विधिना?

(इतस्ततः परिक्रामति)

कामिनी। (परावृत्य स्ववस्त्रेण सुधन्याया मुखमसीमुद्धारयन्ती सखेदं) सुधन्ये, जानासि कथमपहृताहं राक्षसैः?

सुधन्या। सखि, न जानामि।

कामिनी। यदि भक्षणाय, किं नाधुनापि भक्षितास्मि।

सुधन्या। अलमलीकाशङ्कया, न वयं मानुषाहाराः।

कामिनी। तर्हि किं विवाहस्य कृते?

सुधन्या। (सस्मितं) सुष्ठु सम्भाव्यते त्वया।

कामिनी। सखि, सत्यं कथयामि—निर्म्मनुष्ये कानने॓ऽस्मिन् एकाकिनी चिरं निवसन्ती विरक्तास्मि।


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

सुधन्या। (सपरिहासं) अहो कष्टं, सखि, द्वितीयन्ते सत्वरमन्वेषयामि।

विरोधिन्यादयः। (सहसा प्रविश्य) अहो कष्टं, सखि, द्वितीयन्ते सत्वरमन्वेषयामि। (इत्युक्त्वैव निष्क्रान्ताः)

कामिनी। सखि सुधन्ये, नियतानुबद्धवैरां विरोधिनीमिव साम्प्रतमनुधावामि। (इति द्रुतं निष्क्रान्ता)

सुधन्या। ममाप्येतदभिमतम्। (इति निष्क्रान्ता)

समाप्तश्चतुर्थोऽङ्कः

---

## पञ्चमोऽङ्कः

उत्पलावतकाननैकदेशः

(प्रविशति कश्चिद् गूढ़पुरुषः)

गूढ़पुरुषः। देशकालप्रभेदेन भिन्नं रूपमुपेयिवान्।
गुप्तचारोऽवतारश्च प्राकृतैर्न विबुध्यते॥

अहमस्मि सम्राडुत्तमस्य गूढ़पुरुषः। राक्षसगृहीताया ब्राह्मणभार्य्यायाः सम्यगन्वेषणाय रक्षणाय च समागतोऽस्मिन् कानने। (एकां पेटिकां पृष्ठदेशादवतार्य्य)

एते लसन्ति मम राष्ट्ररहस्यभेत्तुः
के के न रूपपरिवर्त्तनहेतुवेशाः।
ज्योतिर्ज्ञ जाङ्गलिकभिक्षुभुजङ्गनारी-
सन्यासिवानरवपुःकपटाय योग्याः॥

तदधुना कतमं वेशं विरचयामि (इति वेशविचयं नाटयति)। (सभयम्) अये पदशब्दमिव शृणोमि। यावद् वृक्षान्तराले तिष्ठामि। अथवा का भीतिर्यस्य मम वंशीध्वनिमपेक्षमाणः स्वयमेव सम्राट् ससैन्यः काननमेतत् परिवेष्ट्य तिष्ठति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


( नेपथ्ये—भो: भो: भो:, क्रो: क्रो: क्रो:, मू: मू: मू: । ) अये कोऽयं शस्त्राहत इव क्रोशन्नित एवाभिगच्छति ? यावदेनं पादपान्तरित: पश्यामि । ( इति वृक्षान्तराले गच्छति )

( तत: प्रविशति करेण जालमादाय कश्चिद् राक्षस: )

राक्षस: । भो: भो: भो: क्रो: क्रो: क्रो: मू: मू: मू: ।

भयं लज्जा च मोहश्च त्रयमाक्रामतीव माम् ।
यदज्ञातेन शस्त्रेण ताड़ितोऽहं जड़ीकृत: ॥

न जानामि कस्य शस्त्रसम्पात: पादयोर्मे शक्तिमपहरति । यावदुपविशामि ( पदमर्दनं नाटयति ) । हो हो हो भो: ! तथापि न मे हास्यं विलीयते तुण्डात् । अहो प्रियसखीनां राक्षसीनाम् अपूर्व्वयमुत्सवकल्पना । ( आकाशे ) अयि विरोधिनि, बलाकिनि सुधन्ये क्षणमपेक्षध्वं यावदन्वेषयामि । किं कथयत—कामिनी नैकाकिनी क्षणमपि स्थातुमिच्छति, तत् त्वर्य्यतां तस्या: सहचरसंग्रहायेति ? प्रियसख्य:, अयमहं जालमादाय गहनमवगाहे । सज्जीकुरुत यूयं वरसज्जाम् । अहमपि वररूपिणं वानरं गृहीत्वा सत्वरमेव प्रत्यावर्त्तिष्ये । अयमेवाद्यतनो महोत्सवोऽस्माकम् ।

अपूर्वरूपलावण्या कामिनी कन्यका यथा ।
तस्या योग्यतमो नूनं तथा स्याद् वानरो वर: ॥

यावदत्रोपनिहितवानरभक्ष्यस्तिरोहित: समुद्यतजालस्तिष्ठामि । ( इति तथा करोति )

गूढ़पुरुष: । अहो लब्धोऽयमवसरो देवताप्रसादात् । यावदात्मनो वानरवेशं विधास्यामि । यतो द्रष्टव्या रक्षितव्या च ब्राह्मणस्य भार्य्या । एष एव कठोरो महाराजनिदेश: । अतश्च—

राक्षसावासनीताया: सीताया हनुमानिव ।
रक्षणार्थं हि कामिन्या विपत्सिन्धौ पताम्यहम् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अहो साम्प्रतं वानरोऽस्मि सम्यक्। यावदस्त्रवस्त्रादिकं रचामि वृक्षकोटरे। सङ्केतवंशो कक्षस्यान्तस्तिष्ठतु। अधुना तरुशाखामाश्रयामि। ( तथा कृत्वा उक्-उक्-शब्दं करोति )

राक्षसः। अये कश्चिदागतमिव मन्ये; यावज्जालसंयमनाय सज्जीभवामि। ( ततो भूमिगतं भक्ष्यं ग्रहीतुं वानरः समागच्छति, राक्षसस्य जालमाकर्षति )

गूढ़पुरुषः। (चापल्यातिशयं प्रदर्श्य, उक् उक् उक् शब्दं करोति)

राक्षसः। अरे मा शब्दायस्व, जालबन्धनं ते माल्यबन्धनं घटयिष्यति। ( सजालं वानरं गृहीत्वा परिक्रामति )

( ततः प्रविशति श्रीफलं भक्षयन्ती कामिनी, विवाहसज्जासम्भृताश्च राक्षस्यः)

( सर्वा गायन्ति )— गहने गहने कुसुमविकाशः
कुसुमे कुसुमे सुषमाहासः।
विलसति दिशि दिशि महिमविकाशो
मुखरविहगरवनवमधुमासः।
मुञ्च मुञ्च सखि सम्प्रति मानं स्मर रे स्मरमनुरागनिदानम्।
सफलय मदनं स्वहृदयसदनं दयितो भवतु च तव फलिताशः॥

( ततः प्रविशति कृत्रिमवानरेण सह राक्षसः )

राक्षसः। प्रियसख्यः, धमत शङ्खान्, यावच्च चरणार्पितबन्धनावशेषतामस्य विदधामि, तावद् वरसज्जां कुरुत। ( राक्षस्यः कृत्रिमवानरस्य मस्तके मुकुटं गले च माल्यमर्पयन्ति )

सुधन्या। अहो प्रकृतिचपलः कपिरपि भयाद्वा वरवेशलोभाद्वा स्थिरतामापन्नः।

विरोधिनी। नववेशसम्पादितसौभगं वरस्य मुखचन्द्रं पश्यामि। ( इति यावदुपसर्पति तावद् विरोधिन्या गण्डं दशति )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


विरोधिनी। हा धिक्, सुधन्याप्रशंसाफलं मय्येव निपातितं दुष्टवानरेण। ( मुखमाच्छाद्य सभयं परावर्त्तते )

सुधन्या। ( सहासं ) अवसरज्ञः कृतज्ञश्चायं वानरवरः।

विरोधिनी। कथमिव ?

सुधन्या। स्मरसि मसीलेपनम् ?

विरोधिनी। यद्येवं समाश्वसिहि, न केवलं कामिन्यास्तवापि मनोरथं पूरयिष्यति वरोऽयम्।

सुधन्या। अधुनैव पूरितः।

राक्षसः। अलमतिशयेन। प्रियसख्यः, प्रकृतमनुवर्त्तध्वम्। यावत् कामिनीपार्श्वं वरं नयामः।

( ततः कामिनीपार्श्वमानीय उभयोर्गले माल्यानि क्षिपति )

कामिनी। ( माल्यं छित्त्वा ) आः भोजनवेलायामेव यावन्तोऽन्तरायाः समापतन्ति।

( सहसा वानरं दृष्ट्वा सर्व्वा अभिद्रुह्यन्ति, वानरश्च कामिन्याः कर्णदेशे किञ्चित् कथनं नाटयति )

सुधन्याः। अहो पश्यत, इदानीमेव कान्तासंलापनैपुण्यं शिक्षितं वानरवरेण।

( सर्व्वा हसन्ति, वानरश्च वंशीध्वनिं करोति )

विरोधिनी। आश्चर्य्यं वानरोऽयं मानुषवद् वंशीं वादयते।

राक्षसः। कुतो लब्धा तावदनेन वंशी ?

सुधन्या। अहो महदिदमाश्चर्य्यम् !

सर्वाः। महदाश्चर्य्यम् !

( नेपथ्ये सहसा भेरीनादेन सह महान् कलकलः, राक्षस्यः सभया निष्क्रान्ताः )

प्रविश्य कश्चित् सैनिकः। ( पलायमानं राक्षसं धृत्वा ) तिष्ठ, क्व पलायसे भीरो ! ( राक्षसो वेपते )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ततः प्रविशति सम्राट्, बद्धाभ्यां विरोधबलाकाभ्यां सह सेनापतिश्च )

सम्राट्। भो भोः सैनिकाः,

धृतो विरोधः कुणपप्रधानं बलाक एषोऽपि बलाद् गृहीतः।
अलं जिघांसापरितर्पणेन प्रशंसनीया क्व नृशंसता स्यात् ॥
तन्मुच्यतामयं राक्षसः।

राक्षसः। महानयं प्रसादः। ( इति पादयोर्निपत्य द्रुतं निष्क्रान्तः )

विरोधबलाकौ। सम्राट् प्रभुस्त्वं नरवानराणां
पिशाच-दैतेय-निशाचराणाम्।
अस्मासु कस्ते ननु निग्रहोऽयं
निरागसः किं नृप! दण्डनीयाः ?

सम्राट्। यज्ञा ध्वस्ता ब्राह्मणक्षत्त्रवैश्याः
शूद्रा भद्राद् वञ्चितास्च प्रकामम्।
सौख्यं हीनं देवतानाञ्च दुष्टा
युष्माभिः किं ज्ञायते नापराधः ? ॥

हृता भार्य्या च विप्रस्य कृता दुष्कृतिरुत्कटा।
भुज्यतां तत्फलं सम्यक् स्वकर्म्म विफलं कुतः ? ॥

तदधुना तिष्ठत यूयम्। यावद् ब्राह्मणीवार्त्तामवगच्छामि। कपिकेतो !

गूढपुरुषः। महाराज !

सम्राट्! क्वासौ कामिनी नाम ब्राह्मणी।

गूढपुरुषः। महाराज, भवदीयप्रभावपरिरक्षितेयमत्र दृश्यताम्।

सम्राट्। अहो स्वस्थोऽहम्। ( सैनिकं प्रति ) आनीयतां सोऽपि ब्राह्मणः।

सैनिकः। यथाज्ञापयति देवः। ( सैनिको निष्क्रान्तः )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ततः प्रविशति सैनिकेन ध्रियमाणो ब्राह्मणः )

ब्राह्मणः। ( स्वगतं ) स्वभावशौचहीनं रक्षःस्थलमागतस्य मे वक्षःस्थलमतीव वेपते। मन्त्रा अपि विपर्य्ययमाप्नुवन्ति। ( प्रकाशं ) भोः सैनिक, मुञ्च मुञ्च मां, किं भार्य्यया यदि स्वयं रक्षोमुखे पतेयम्। शास्त्रञ्च श्रूयतां—

'आत्मानं सततं रक्षेद्दारैरपि धनैरपि।'

सैनिकः। ब्राह्मण, अलं भीत्या, पुरत एव देवो दृश्यताम्।

ब्राह्मणः। ( उपसृत्य ) महाराज, चिराद्दृष्टोऽसि। प्राणरूपेण भवता वियुक्तस्य यन्मे दुर्दैवविलसितं तद्देवा एव जानन्ति।

सम्राट्। ब्रह्मन्, गृह्यतामियं ते भार्य्या।

ब्राह्मणः। स्वस्ति भवते।

कामिनी। हा तात, हा मातः, किं मां न स्मरन्ति भवन्तः। नाहमेतस्य ब्राह्मणस्य गृहे गच्छामि।

ब्राह्मणः। ( स्वगतं ) कथमद्यापि तथैव वाक्पारुष्यम्! ( प्रकाशं ) आः पापे, यदि राक्षसैरद्यापि न भक्षितासि, तेषामेव कञ्चिद्वरयस्व भर्त्तृत्वेन। देव, यथावत्कृत्यमनुष्ठितम्। अनुरुद्धो धर्म्मः, तदागच्छतु देवः। राक्षसि, तिष्ठात्रैव। महाराज, तदलमत्रावस्थानेन, यथागतमेव प्रस्थास्यामहे।

कामिनी। आः भोजनप्रतिबन्धो दूरीभवतु। ( इति निष्क्रान्ता )

विरोधबलाकौ। ब्राह्मण, न वयं मानुषभक्षकाः, न वा परकामिनीलोलुपा राक्षसाः, येनैवं देवस्य पुरतो भाषसे।

सम्राट्। राक्षसौ, विस्मितोऽस्मि युष्मद्वचनश्रवणेन। यदि नेयमुभयथापि भोग्या युष्माभिस्तत्किमियमपहृता ?

राक्षसौ। देव, ब्राह्मणस्य मन्त्रा एव तत्र निदानम्।

सम्राट्। कथमिव ?

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


राक्षसौ। यज्वनो ब्राह्मणस्यास्योच्चाटनादिमन्त्रैरुद्वेजिता गत्यन्तरमलभमाना वयं तथानुष्ठितवन्तौ यज्ञप्रतिबन्धाय।

सम्राट्। तद् यूयमेव कृतापराधा दण्डनीयाः। ब्राह्मणस्तावदनपराध एव, यतो निरन्तराययज्ञानुष्ठानं द्विजातिधर्म्म इति।

राक्षसौ। विधातृविहिता वृत्तिरस्माकमपि तादृशी।
निर्दोषा वा सदोषा वा न तयागस्कृतौ वयम्॥

सम्राट्। ( क्षणं चिन्तयित्वा ) श्रूयतामत्र समाधानम्।

बाह्याभ्यन्तरशुद्धानां धर्म्मश्रद्धावतां नृणाम्।
न यज्ञविघ्नं कर्त्तास्थः कुरुतान्यत्र विप्लवम्॥

एवं स्थिते ब्राह्मणेनापि नोच्चाटनमन्त्राः पठिष्यन्ते नापि युष्माकं वृत्तिरोधः।

राक्षसौ। देवस्य निदेशं सर्वथा शिरसा वहामः।

सम्राट्। हृष्टोऽस्मि वः शिष्टाचारेण। एतत्तु पृच्छामि कथं राक्षस इति युष्माकमभिधानम्?

राक्षसौ। महाराज, मनुष्याणां कर्म्मफलभक्षका वयमिति राक्षसाख्यां प्राप्नुमः।

सम्राट्। एवञ्चेद् ब्राह्मणभार्य्याया दुष्कर्म्मफले रूपशीले भक्षयतम्। सेनापते, मुच्येतामेतौ।

राक्षसौ। यथाज्ञापयति महाराजः।

ब्राह्मणः। सेनापते, क्षणमपेक्षस्व यावदात्मरक्षायै सज्जीभवामि। उक्तञ्च—'न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्'।

( मन्त्रजपं नाटयति )

सम्राट्। विप्रवर, त्रासेनालम्। सेनापते, मुच्यतामेतौ। (सेनापतिस्तथा करोति, राक्षसौ निष्क्रम्य पुनः प्रविशतः परिवर्त्तितरूपया कामिन्या सह )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


कामिनी। (ब्राह्मणमुपसृत्य) नाथ, क्षम्यन्तां मे मूढ़ाया अपराधाः। गृह्णातु मां हतभागधेयाम्। (इति पादयोः पतति)

ब्राह्मणः। केयम्? स्वरसंयोगेन जानामि—कामिनीति। कामिनि, कामिनि—

कामिनी। एषास्मि क्षमार्हा दासी।

ब्राह्मणः। अहो विपर्य्यासः। विरोध, बलाक, चिरमिन्नताबद्धोऽस्मि।

(प्रविश्य राक्षस्यः उभयोः करयोजनं कुर्वन्ति गायन्ति च मुञ्च मुञ्च सखि सम्प्रति मानमित्यादि। गूढ़पुरुषश्च नृत्यति)

सम्राट्। ब्रह्मन्, किमतःपरमपि भवतः प्रियमाचरामि?

ब्राह्मणः। राजन्, किमतःपरमपि प्रियमस्ति? तथापीदमस्तु—

सन्तु स्त्रियः स्वामिमनोऽनुकूला लसन्तु धर्म्मा विधिबोधमूलाः।
वसन्तु विद्या नृषु धर्म्मप्रवेशा हसन्तु धर्म्मैकधनाश्च देशाः॥

इति पञ्चमोऽङ्कः

समाप्तं भट्टसङ्कटम्

---

## शिवसन्तोषस्तोत्रम्

(पूर्व्वतोऽनुवृत्तम्)

निबन्धकः—श्रीश्यामादासवाचस्पतिः

आरम्भवाद-परिणाम-विवर्त्त-वादैः
संस्तूयसे सुकृतिभिर्मुनिभिः प्रभो त्वम्।
त्वां देवदेवमपहाय विचित्रमेतत्
नो सम्भवेन्नव भवेदिह कोऽपि वादः॥ ८॥

प्रागुक्तवादत्रयमुपसंहरन्नाह—आरम्भेत्यादि।—आरम्भवादपरिणामविवर्त्तवादैः आरम्भस्य वादाः आरम्भवादाः, परिणामश्च विवर्त्तश्च तयोर्वादाः, आरम्भवादाश्च परिणामविवर्त्तवादाश्च तैः। त्रिविधैः मतैरित्यर्थः। अता-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रम्भवादस्तु यदा सर्वकर्म्मणां वृत्तिनिरोधेन न किञ्चिदुत्पद्यते न किञ्चिद्विनश्यति तदा स्तिमिताकाशकल्पे जगति जीवात्मनामदृष्टफलसिद्धये क्षित्यादिचतुष्टयपरमाणौ परमेश्वरेण पुनर्जगदारभ्यते इत्येवंरूपोऽवगन्तव्यः। जगदारम्भोपष्टम्भे कुसुमाञ्जलावुदयनेनाप्युक्तम्—"यथा खल्वलाबुलतायां विततानि फलानि तथा परमेश्वरशक्तावनुस्यूतानि सहस्रशोऽण्डानि इति श्रूयते।" इति आरम्भवादः। परिणामवादस्तु जीवात्मनां सूक्ष्मकर्म्मफलभोगापवर्गसिद्धये सत्त्वरजस्तमोरूपा प्रकृतिरात्मसन्निहिता सती क्षीरदध्यादिन्यायेन महदादि स्थूलभूतान्तरूपेण यत् परिणमति, असौ परिणामवादः। परिणमनं त्वाविर्भावरूपम्। तच्च स्वतः क्लेशकर्म्मफलविपाकाशयशून्यपुरुषविशेषेच्छया भवति इह कार्य्यस्य सत्त्वं समवायसम्बन्धस्यासत्त्वमित्यभिप्रायः। उदञ्चनादिनानाभावेन परिणताया अपि मृत्तिकाया यथा प्राक्तनरूपस्यापरित्यागस्तथा प्रपञ्चेषु ब्रह्मणो नानात्वपरिणतस्यापीति तेषामाशयः। विवर्त्तवादस्तु सुखं यथा तत्तज्जलाद्यालम्बनभेदाद्विवर्त्तते तथा ब्रह्मैव च अनाद्यनिर्वचनीयाविद्यावशान्नानारूपेण यद्विवर्त्तते इत्येवंरूपः। विवर्त्तवादिनस्तु परिणामवादिसांख्यादिवन्न महदादिक्रमेण विवर्त्तमङ्गीकुर्वन्ति, किन्त्वपञ्चीकृतपञ्चमहाभूतादिक्रमेणैव। तथाहि आत्मैक्यं त्रिविधभेदशून्यं स्वप्नवत् काल्पनिकं परमार्थतः सत्त्वशून्यमपि विचित्रविविधविश्वमीश्वरेच्छया यथानियमं व्यवहारवत् पुरुषकर्म्मानुरूपञ्च प्रतीयते। उक्तञ्च "विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्" इति। परिणामविवर्त्तवादयोर्भेदस्तु यथाऽभिहितः "सतत्त्वतोऽन्यथा प्रथा परिणाम उदीरितः। अतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदाहृतः।" इति। सुकृतिभिः प्रकृष्टज्ञानक्रियाशालिभिः, मुनिभिः आप्तकणाद-गौतम-कपिल-पतञ्जलि-जैमिनि-बादरायणादिभिः, त्वं संस्तूयसे स्वरूपगुणवत्तया प्रस्तुतोऽसि। एवम्भूतं देवदेवं त्वाम् अपहाय इह विश्वे, कोऽपि वादः पूर्वोक्तः, नो सम्भवेत् उपक्रमोपसंहारेण न पूर्णो भवेत्, विचित्रमेतत्। यतः सर्ववादसिद्धस्त्वमतः प्रसीद इति पूर्वेणान्वयः॥ ९॥

स्वच्छाणुचेतसि महान् मुकुरे करीव
त्वं भासि विश्वसुदरे विपुलो विभर्षि।
मोहान्धतामस-मलीमसचेतसस्ते
के त्वन्निरूपणविधौ हि वयं वराकाः॥ १०॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

प्राक् ईश्वरास्तित्वे प्रमाणं प्रदर्श्य तत्स्वरूप-निरूपणस्य दुष्करत्वमावेदयति—स्वच्छेति। मुकुरे दर्पणे, क्षुद्रेऽपीति भावः। महान् विशालदेहः, करीव हस्तीव, स्वच्छाणुचेतसि निर्म्मलाणुपरिमितमनसि, जनानामिति शेषः। मम इति ध्वनिः। चेतसि स्वच्छत्वञ्च विषयान्तरासम्बन्धरूपम्, एकाग्रचेतसि इति फलितार्थः। विपुलो विभुः, त्वं भासि। भगवतो महत्त्वं दर्शयति—विश्वमिति। यत उदरे जठरे, त्वं विश्वं विभर्षि जगत् धारयसि, "यो लोकत्रयमाविश्य विभर्त्त्यव्यय ईश्वरः" इति भगवद्गीतोक्तेः। जगदाधारस्य ते महत्त्वमवश्यमेवेति भावः। एवंविधस्य ते स्वरूपनिरूपणं कथं स्यादित्याह—मोहेति। मोहान्धतामसेन अविद्यारूपगाढ़ान्धकारेण, मलीमसं मलिनं चेतः येषां तादृशाः वराकाः दीनाः, संसारमग्ना इति भावः। वयं त्वन्निरूपणविधौ त्वत्स्वरूपनिर्णये नैव समर्था इत्यर्थः। तपःप्रभावादतिनिर्म्मलान्तःकरणा अपि अतिमहान्तं भवन्तं न निर्णेतुं समर्थाः, किं पुनः संसारमग्ना मादृशा दीना इति भावः॥ १०॥

---

# सन्ध्या

## ( पूर्वतोऽनुवृत्ता )

### लेखकः—श्रीरामकृष्णचक्रवर्त्ती, बि. ए.

प्राणायामाचमन-मार्ज्जनाघमर्षण-सूर्य्योपस्थान-गायत्रीजपात्मिका हि वैदिकी सन्ध्या ; विभिन्नर्षिवचनान्यनुसृत्य पद्धतिकृद्भिः कानिचित् अधिकानि कार्य्याणि चात्र सन्निवेशितानि। तेन साकल्येन सन्ध्यायाम् अधोलिखितानि कार्य्यजातानि सर्वथा सम्पादनीयानि। यथा—(१) मार्ज्जनम्, (२) प्राणायामः, (३) आचमनम्, (४) पुनर्मार्जनम्, (५) अघमर्षणम्, (६) सूर्य्यजलाञ्जलिदानम्, (७) सूर्य्योपस्थानम्, (८) अङ्गन्यासः, (९) गायत्र्या आवाहनम्, (१०) गायत्रीध्यानम्, (११) गायत्रीजपः, (१२) गायत्रीविसर्ज्जनञ्च। विना चैतानि सामवेदीय-यजुर्वेदीयर्ग्वेदीयासु सन्ध्यासु आत्मरक्षादीनि कानि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

चित् कार्य्याणि पृथक् सन्निवेशितानि। एतेषां संक्षिप्तं विवरण-मग्रे प्रदर्श्यते।

(१) अथ मार्ज्जनम्, मृज्धातोरनटि कृते शुद्धिबोधकं मार्ज्जनमिति सिद्धम्। देहशुद्धी चास्य प्रयोजनम्। ननु अवगाहनस्नानात् एव देहशुद्धिः सम्भवति अलं मार्ज्जनेन ? नहि, उक्तं याज्ञवल्क्येन—

"कालदोषादसामर्थ्यान्न शक्नोति यदाम्भसि।
तदा स्नात्वा तु ऋषिभिर्मन्त्रैर्दृष्टन्तु मार्ज्जनम्॥
शन्न आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम्।
एभिश्चतुर्भिर्ऋग्भिर्मन्त्रस्नानमुदाहृतम्॥" (याज्ञवल्क्यः)

सर्वदा अस्माभिरवगाहनस्नानादिकं कर्त्तुं न शक्यते तदर्थमेव शन्न आपः, द्रुपदादिव, आपोहिष्ठा चेति तृचेन अघमर्षणसहितेन मस्तके जलप्रोक्षणं कर्त्तव्यम्, एतदेव मन्त्रस्नानशब्देन उच्यते। गृहस्थानां प्रातःस्नानं मध्याह्नस्नानञ्च उभयमेव विहितम्। परन्तु के नामास्मासु यथाकालं यथाविहितं स्नानद्वयं सम्पादयितुं समर्थाः, तस्मादेव सन्ध्यावन्दनसमये प्रातर्मध्याह्ने च मन्त्रस्नानं विहितं देहशुद्ध्यर्थम्। ततश्च अस्पृश्यस्पर्शनादौ यत् स्नानं विहितं तदपि सलिलैरेव क्रियते तस्मात् सायंसन्ध्यानुष्ठानसमयेऽपि मन्त्रस्नानं कर्त्तव्यम्। अस्पृश्य-स्पर्शनादिनिमित्तस्नानविषये उक्तं ब्रह्मपुराणे—

"श्मश्रुकर्माश्रुपातञ्च मैथुनं छर्द्दनं तथा।
अस्पृश्यस्पर्शनं कृत्वा स्नाया वर्ज्यं जलक्रियाः॥

अत एव पितृदयितायां सन्ध्यायाः प्राक् मार्जनं विहितम्। तत्र प्रथमे मन्त्रे "ॐ शन्न आपो धन्वन्याः, शमु नः सन्त्वनूप्याः। शन्नः समुद्रिया आपः, शमु नः सन्तु कूप्याः" इति पाठ एव युक्तः। किन्तु दुःखकारणं यत् मुद्रितेषु बहुषु एव पुस्तकेषु भ्रमपरिपूर्णः पाठो दृश्यते। कुत्रचित् "शमनः सन्तु नूप्याः" इति दृश्यते, मकारात् परं उकारस्तथा नोः पूर्वमकारस्य अर्थबोधनाय अवश्यमेव संयोज-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

नीयम्। उत्तरार्द्धेऽपि "शमु नः सन्तु कूप्या" इत्येव युक्तम् नहि "शम नः सन्तु" इति। उकारस्य वेदे एवार्थबोधकः। द्वितीये मन्त्रे च—

"ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः॥"

इति पाठ एव युक्तः। तत्र प्रदेशान्तरमुद्रिते कस्मिंश्चित् पुस्तके "द्रुपदादिवेन्मुमुचान" इति पाठो दृश्यते। अथर्ववेद-वाजसनेयि-संहितयोरिवेति पाठः। मैत्रायणीसंहितायां तथा केषुचिद्-ब्राह्मणादिषु इवेदिति पाठोऽपि लभ्यते। "आपः शुद्धन्तुमेनसः" इति पाठः कुत्रचित् दृश्यते किन्तु "आपः शुन्धन्तु मैनस" इति पाठ एव युक्तः।

कोकिलो राजपुत्रश्च द्रुपदाया ऋषिः स्मृतः।
अनुष्टुप् च भवेच्छन्द आपश्चैवास्य दैवतम्॥

(योगि-याज्ञवल्क्यः)

अत्र प्रथमे पादे नवाक्षरोपस्थितेरपि न दोषः, कुत्रचित् एकाक्षराधिके सत्येव भूरिक्त्वं, सूत्रितञ्च ऊनाधिकेनैकेन निचृद्भूरिजौ। प्रजापतिः आपः भूरिगनुष्टुप् इति सर्व्वानुक्रमणिकायाञ्च उक्तम्।

——— (अवशिष्यते)

## सन्देशाः

**संस्कृतसाहित्यसम्मेलनम्**—अखिलभारतवर्षीयसंस्कृतसाहित्यमहासम्मेलनस्य दशमाधिवेशनं ध्रुवमेव कलिकातानगर्यां जन्माष्टमीमहोत्सवावकाशे भाद्रपदमासि सम्पत्स्यत इति प्रबन्धकारिणां मन्त्रिप्रभृतीनां स्वागतकारिसमितेश्च प्रयत्नातिशयेन निश्चीयते। तत्र हि स्वागतकारिसमित्या सम्मेलनदशमाधिवेशनपरिचालनाय मद्रासप्रदेशीयाः श्रीमन्तः कुप्पुस्वामिशास्त्रिमहाभागाः सभापति-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पदं लम्भिताः। सुयोग्यानामेतेषां सभापतित्वेन सम्मेलनमिदं सर्वथा साफल्यविमण्डितं भविष्यतीत्याशास्महे। एते खलु महाभागाः सुविश्रुतवर्णा न्यायमीमांसादिबहुप्राचीनशास्त्रेषु निष्णाताश्च सुतरामाङ्गलविद्यासु। तदस्माभिर्यथैव प्रार्थिताः सभापतयः तथैव सम्प्राप्ता इति परं नः प्रमोदस्थानम्। अथेदानीं तदीये अभिभाषणे नवञ्च सुगभीरञ्च विषयमधिजिगमिषवः तिष्ठामः।

अखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनस्य—

## दशमाधिवेशने कार्य्यसूचिः

### अगष्टमासस्य अष्टाविंशदिवसे शनिवासरे

एकवादनमारभ्य पञ्चवादनपर्य्यन्तम्—

सभापति-सदस्यादिस्वागतीकरणम् तथा स्वागतसभाध्यक्षाणां मूलसभाध्यक्षाणाञ्च मुद्रापिताभिभाषणवितरणानुभाषणादिकम्।

रात्रौ सप्तवादनमारभ्य नववादनपर्य्यन्तम्—

संस्कृतसाहित्यपरिषदो वार्षिकाधिवेशने संक्षिप्त-शाकुन्तलनाटकाभिनयदर्शनम्।

एकोनत्रिंशद्दिवसे रविवासरे—

'अष्टवादनमारभ्य दशवादनपर्य्यन्तम्—

विषयनिर्वाचनसमितेरधिवेशनम्।

सार्धैकवादनमारभ्य पञ्चवादनपर्य्यन्तम्—

निबन्धविशेषाणां वाचनम् प्रस्तावविवेचनञ्च।

रात्रौ अष्टवादनमारभ्य—

परिषत्सदस्यप्रयुक्तमृच्छकटिकरूपकाभिनयः।

त्रिंशद्दिवसे सोमवासरे

प्रातः सप्तवादनमारभ्य दशवादनपर्य्यन्तम्—

संस्थाविशेषाणामवलोकनम्

द्विवादनमारभ्य पञ्चवादनपर्य्यन्तम्—

अवशिष्टप्रस्तावविवेचनम्।

रात्रौ सप्तवादनमारभ्य नववादनपर्य्यन्तम्—

सङ्गीतादिकम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

**राजकीयसंस्कृतमहाविद्यालये न्यायाध्यापकनियोगः**—विदितमिदं विदुषां बहोः कालादूर्द्ध्वं राजकीयसंस्कृतमहाविद्यालये द्वितीयं न्यायाध्यापकपदं विलुप्तमिति। तदिदानीं पुनरपि प्रोक्तविद्यालयाध्यक्षाणां श्रीमतामादित्यनाथसुखोपाध्याय-एम्-ए-पि-आर् एस्-पि-एइच्-डि दर्शनसागरमहाभागानामसमप्रयत्नेन प्रतिष्ठापितं वर्त्तते। तत्र च न्यायदर्शनादिपरमाचार्य्याः न्यायसूत्रवात्स्यायनभाष्यसंस्कारकाः महामहोपाध्यायपदभाजः श्रीमन्तः फणिभूषणतर्कवागीशपादाः अध्यापकतया विनियुक्ताः। एतेषां सुविदुषां गुणगरिमा तदैवास्माभिः सविशेषमावेदितो यदा अस्यामेव पत्रिकायां तदीयन्यायसूत्रवात्स्यायनभाष्यसंस्करणं समालोचितं तदलमद्यापि तद्गुणविनिवेदनपौनरुक्त्येन। केवलमिदमत्र प्राप्तकालं ब्रूमहे यथा सुयोग्येषु पात्रेषु सुयोग्यभारसमर्पणेन विद्यालयपरिचालकसमितेर्दाक्ष्यमिव पुनस्तद्विद्यालयसम्बन्धिप्रभूतोन्नतिप्रत्याशापि दृढ़मात्मनः पदं कुरुते। तदमी निरामयाः प्रत्यहमन्तेवासिजनसंमर्दमनुभवन्तः सुचिरमाचार्य्यकमनुगृह्णन्त्विति भगवन्तं प्रार्थयामहे।

**परिषदो वार्षिकाधिवेशनम्**—जानन्त्येव परिषदः सदस्याः पत्रिकावाचकाश्च यथा प्रतिवर्षं परिषदो वार्षिकाधिवेशनं परवर्षीय-सौराषाढ़मनतिक्रम्य सुसम्पद्यत इति। ऐषमश्च संस्कृतसाहित्यमहासम्मेलनमहोत्सवार्थमागमिष्यतां नानादेशीयविद्वत्प्रवराणां तत्रैव सङ्गतिसौभाग्यमनुभवितुं भाद्रपदे मासि सम्मेलनदशमाधिवेशनस्य अन्यतमदिवसे विहितस्तत्प्रबन्धः परिषत्परिचालकैः। तत्र प्रतिवर्षमिव कार्य्यविवरणवाचनं रसवतो रूपकविशेषस्य अभिनयः नवीनवर्षीयकार्य्यपरिचालकनियोग इत्यादिकं सम्पत्स्यते। सम्मेलनार्थमपि क्रियते परिषदेव रूपकाभिनयस्य सुप्रबन्धः। एकस्यां

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रात्रौ परिषदो वार्षिकाधिवेशनस्य कृते अपरस्याञ्च रात्रौ सम्मेलनाधिवेशनस्य कृते रूपकप्रयोगः करिष्यते परिषदा।

## ग्रन्थपरिचयः

**व्युत्पत्तिमाला**—ग्रन्थोऽयं श्रीहरिनाथतर्करत्नेन विरचितः वङ्गाक्षरेण मुद्रापयित्वा प्रकाशितश्च श्रीद्वारकानाथमुखोपाध्याय-एम्-एस्-सि-महोदयेन। प्राप्तिस्थानम् ३०।ए विडन्‌रो कलिकाता। अत्र अकारादिवर्णमालानुसारेण विनिवेशितानां संख्यातीतानां शब्दानां व्युत्पत्तिरर्थश्च सन्निबद्धौ। प्रयोजनीयबहुलशब्दसम्भारसमन्वितोऽप्ययमनतिकाय इति काम्यः खलु अनायासेन शब्दव्युत्पत्तिमधिजिगमिषूणाम्। तदेषां तर्करत्नमहोदयानां प्रयत्नस्तदैव सफलः स्यात् यदि अस्य ग्रन्थस्य परामुपकारितामुपगम्य विद्यार्थिनः पुस्तकग्रहणेन स्वं शब्दविज्ञानं परिपूरयेयुः। वयमीदृशस्य ग्रन्थस्य भूरिप्रचारं कामयामहे। ईदृशग्रन्थस्य नागराक्षरेण मुद्रापणं भूरिप्रचारमनुकूलयतीति मन्यामहे।

**रघुमणिकृत-सङ्गीतसारः**—वङ्गीय-पुराणकथकप्रवरेण स्वर्गत-रघुमणिविद्याभूषणभट्टाचार्य्येण विरचितः प्रकाशितश्च तदीयसुयोग्यपुत्रेण श्रीनीलरत्नभट्टाचार्य्येण वङ्गाक्षरैर्मुद्रापयित्वा। प्राप्तिस्थानम्—श्रीनीलरत्नभट्टाचार्य्यः श्रीकृष्णलेन, श्यामवाजार पोः।

आसीत् सुप्रसिद्धः पुराणकथको वङ्गेषु रघुमणिविद्याभूषणो नाम तस्यैव कृतिरियं संस्कृतसङ्गीतमयी। अत्र सुरसानि काललयविशुद्धानि बहून्येव गीतानि निबद्धानि। येषां श्रवणमात्रेण साम्प्रतिककथकानां मुखात् अद्यापि मुग्धा भवन्ति सामाजिकाः। एतानि सङ्गीतानि सविशेषमुपकुर्वन्ति कथकानाम्। तेषामुपादेयाः कथकतायामुपयोगिनो वर्णनात्मका अपि बहवः सन्दर्भा अत्र मुद्रापिता दृश्यन्ते। प्रतिसङ्गीतं सहैव तालरागिणीविनिर्देशेन परमुपकृतञ्च सङ्गीतविदाम्। तदाशास्महे यदस्य प्रचारेण सङ्गीतज्ञेषु तद्गुणाः सुविदिता भवेयुः।

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# A FEW OPINIONS ON THE PAVANADUTAM.

( From letters to the editor )

**Prof. Hermann Jacobi :—**.........Your careful edition of Dhoyi's Pavanadutam. Your introduction furnishes the reader with the necessary information about the author, his time, the poem, its style and contents.........

**Prof. Dr. M. Winternitz, Prague :—** ......Your valuable edition of Dhoyi's Pavanadutam .....As you have had at least one good Ms. more than the first editor had, your edition is all the more welcome. The introduction is very useful.

**Dr. E. Hultzsch :—** ...It is the first critical edition of this well-known imitation of the Meghaduta and I shall peruse it with much interest. Your introduction and your commentary form a welcome addition to the handsomely got up volume.......

**Prof. Sten Konow :—**......It has given me great pleasure to go through it and it is very much superior to the old edition. ......

**Prof. E. J. Rapson—**.........It is evidently a work of great interest.........

**L. D. Barnett of the British Museum, London :—**........ A most interesting poem and you have dealt with it in a very skilful manner.

**Prof. G. Tucci of the University of Rome :—**......... Your careful edition of the Pavanadutam, which I have read with the greatest interest, appreciating your scholarship and accepting your conclusions.........

**J. Van Manen, General Secretary, Asiatic Society of Bengal :—** ...I offer you my compliments with the interesting results obtained by you.........

**Forward (6, 6, 26) :—**......The learned and critical way in which it has been edited reflects much credit on the editor......

---

प्रकाशको मुद्रापकश्च—श्रीदुर्गामोहनकाव्यसांख्यपुराणतीर्थः एम्. ए.
संस्कृतसाहित्यपरिषत्, श्यामबाजार, कलिकाता।
मुद्रापणस्थानम्—सिद्धेश्वरप्रेस, २८ नन्दकुमारचौधुरीसेकेण्डलेन,
कलिकाता।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# Sanskrit Sahitya Parishat Series

## JUST PUBLISHED ! JUST PUBLISHED !

1. তীর্থতত্ত্বম্—রঘুনন্দনভট্টাচার্য্যকৃতম্—It gives an idea as to the most important places of pilgrimage to a Bengalee of the time of Raghunandana and gives a detailed description of the rites to be performed at those places.

Price 6 as. ; for members, 5 as.

.........It is a book which is sure to be of almost invaluable help to every Hindu pilgrim. The very name of the author is a sufficient guarantee of its utility and excellence :— A. B. Patrika.

2. पवनदूतम्—Of Dhoyi, a court-poet of Lakshmanasena of Bengal. Edited with critical and historical introduction, variants, Sanskrit notes etc. etc. It will be of interest alike to students of History and Sanskrit literature.

Price 12 as ; for members, 10 as.

3. नलदमयन्तीयम् ( नाटकम् )—श्रीकालीपदतर्काचार्य्यकृतम्—The book is an example of how even a modern Pandit can express all kinds of thought and reveal the poet in him, through the medium of Sanskrit which, according to the prevailing opinion, is but a dead language.

Price Re. 1/4 ; for members Re. 1

4. प्रभाकरविजयम्—A short but illuminating exposition of the doctrines of the Prabhakara School of Mimamsa philosophy by Nandishvara. It is published here for the first time. Price Re. 1/4 ; for members Re. 1

5. प्रशस्तपादभाष्यम्—With an unpublished commentary called Sukti by the famous Naiyayika Jagadisa Tarkalankara, and a new commentary on Sukti and Bengali elucidation by the editor. Price ~~Rs~~ 2 ; for members Re. 1/8

To be had of :—
The Sanskrit Sahitya Parishat,
Shyambazar, Calcutta.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

१८४८ शकीये
आश्विने

October, 1926

Reg. No. C. 1073.

९म वर्षस्य
६ष्ठ संख्या

Vol. IX, No. 6

# संस्कृतसाहित्यपरिषत्

संस्कृतसाहित्यपरिषदो मासिकं मुखपत्रम्




सम्पादकः—श्रीकालीपदतर्काचार्य्यः

सहसम्पादकः—श्रीदुर्गामोहनभट्टाचार्य्यः एम्. ए.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

# কে-শ-র-ঞ্জ-ন তৈল--

Digitized by Arya Samaj Foundation Chennai and eGangotri

এই আসমুদ্র ভারতের সর্ব্বত্র কেশরঞ্জনের শতমুখে সুখ্যাতি। নিত্য স্নানকালে কেশরঞ্জন মাথায় মাখিলে সমস্ত দিনটী চিত্ত প্রফুল্ল থাকে ; কেশ-রঞ্জন নিত্য মাথায় মাখিলে মাথা ধরা মাথা ঘোরা, অনিদ্রা, মন হু হু করা প্রভৃতি উপসর্গ বিদূরিত হয়। দেশের রাজা মহারাজা হইতে সামান্য গৃহস্থ-গৃহেও কেশরঞ্জনের সমাদর। আপনিও ব্যবহার করুন। মূল্য প্রতিশিশি একটাকা, ডাকব্যয় সাত আনা।




স্নায়বিক দুর্ব্বলতার আশু প্রতিকারক

## সঞ্জীবন রসায়ন

বলবর্দ্ধক, মেধাবর্দ্ধক ও স্মৃতিবর্দ্ধক মহৌষধ

স্নায়বিক দুর্ব্বলতার জন্য যাঁহাদের উদ্যম, উৎসাহ, স্ফূর্ত্তি ও স্মৃতিশক্তি বিনষ্ট হইয়াছে অজীর্ণ, অগ্নিমান্দ্য প্রভৃতি গ্লানিকর উপদ্রব উপস্থিত হইয়াছে, তাঁহাদের পক্ষে "সঞ্জী রসায়ন" অমৃতের ন্যায় উপকারী। বিশেষতঃ ইহা দ্বারা বমন, উদ্গার, হিক্কা, আ (পেট ফাঁপা) ও পেট ভুটভাট করা প্রভৃতি পেটগরমের উপদ্রবসমূহ অচিরে নিবারি হইয়া থাকে। এক কথায় বলিতে হইলে, অজীর্ণ, অগ্নিমান্দ্য, ও স্নায়বিক দুর্ব্বলতা নিবার জন্য এবং ছাত্রগণের মেধাবৃদ্ধি করিতে "সঞ্জীবনরসায়নের" ন্যায় অব্যর্থ ঔষধ অতি বির এক শিশির মূল্য ১৲ টাকা। মাশুলাদি ৶০ আনা।

পরিবর্ত্তিত **সচিত্র কবিরাজি শিক্ষা** পরিবর্দ্ধিত

### শ্রীযুক্ত নগেন্দ্রনাথ সেনগুপ্ত প্রণীত।

সমগ্র আয়ুর্ব্বেদ শাস্ত্রের সার সঙ্কলন। বড় বড় আটটী খণ্ডে সমগ্র পুস্তক বিভক্ত অতি সরল ভাষায় লিখিত হওয়ায়, কেবল চিকিৎসকের নয়—সাধারণ গৃহস্থের পক্ষে ইহা একখানি নিত্য ব্যবহার্য্য গ্রন্থ। নাড়ীপরীক্ষা হইতে আরম্ভ করিয়া সমস্ত রোগের নিদান, চিকিৎসা-প্রণালী, আয়ুর্ব্বেদীয় ঔষধ, তৈল ও ঘৃতাদি প্রস্তুত-বিধি, বিষচিকিৎসা দীর্ঘজীবন-লাভের উপায়স্বরূপ স্বাস্থ্যকারক স্থানসমূহের পূর্ণবিবরণ, রোগীর পরিচর্য্যা এবং দ্বিতীয়খণ্ডে মহর্ষিদের গৌরবস্বরূপ—"সুশ্রুত-সংহিতা" এই সংস্করণে সন্নিবেশিত হইয়াছে মূল্য ২॥০ টাকা। ডাকমাশুল ও প্যাকিং ৷৷০ বার আনা।

**কবিরাজ নগেন্দ্রনাথ সেন এণ্ড কোং লিমিটেড**

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

১৮।১ ও ১৯নং লোয়ার চিৎপুর রোড কলিকাতা।

Digitized by Arya Samaj Foundation Chennai and eGangotri

# Calcutta Oriental Series

1. युक्तिकल्पतरु:—भोजराजप्रणीत:। अत्र राजनीति:, नगरादिनिर्म्माणरूपा वास्तुविद्या, छत्रचामराखड्गारादिनानाविधोपकरणलक्षणम्, रत्नपरीक्षा, शस्त्रयुक्ति:, गवाश्वगजादिपशुपरीक्षा, नावादिविविधयानलक्षणम् इत्येवमादयो विषया निर्णीता: Rs. 2-8

2. चाणक्यराजनीतिशास्त्रम्—(pp. xxxi + 82) with a Foreword by Johan van Manen, Secretary, Asiatic Society of Bengal 0-14-0

4. **Inter-state Relations in Ancient India, Part I** by Dr. Narendra Nath Law, M. A., B. L., P. R. S., Ph. D. Rs. 2

5. मुक्ताफलम्—वोपदेवकृतम्, हेमाद्रिकृतटीकया समलङ्कृतम्, खण्डद्वयात्मकम्। अपूर्व्वोऽयं वैष्णवग्रन्थ:। (With a Foreward by Dr. N. Law, M. A., Ph. D. (pp. xlvii + 361) Rs. 6

6. चाणक्यकथा - रविनर्त्तकप्रणीता बङ्गानुवादसहिता Re. 1

9. वक्रोक्तिजीवितम्—राजानककुन्तलविरचितम् ग्रन्थकृत्प्रणीतटीकासहितमलङ्कारशास्त्रम् (Edited with Critical Notes, Introduction by S. K. De, M. A., D. Lit.) Rs. 2

13. **Economic Life and Progress in Ancient India** by Narayan Chandra Banerjee, M. A., Lecturer, Calcutta University. (Demy 8 vo. 325 + xvi pp.) Rs. 6

14. **Early History of the Spread of Buddhism and the Buddhist Schools** by Dr. Nalinaksha Dutt, M. A., B. L., Ph. D., Lecturer, Calcutta University. (Demy 8 vo. 314 + xi pp.) Rs. 7-8

15. ব্রহ্মসূত্রম্—'ভাগবতভাষ্য-সহিতম্—শ্রীহরিদাসবিদ্যাবাগীশ-ভাগবতাচার্য্যসঙ্কলিতম্। প্রত্যেকটি সূত্রের সহিত শ্রীমদ্ভাগবতের শ্লোক উদ্ধৃত করিয়া দেখান হইয়াছে যে শ্রীমদ্ভাগবত ব্রহ্মসূত্রের ভাষ্য (277 pp.) Rs. 2-8

13. **Foundation of Indian Poetry** (being a survey of the origin and development of theories of Indian Poetics from the earliest period) by Dr. J. Nobel of Berlin (188 pp.) Rs. 5

17. पद्मपुराणम् by Prof. H. Sharma M. A. It shows that Kalidasa has drawn materials for his Shakuntala and Raghuvamsha from the portion of the Padmapurana edited here. (Demy 8vo. lii + 100 pp.) Rs. 2

18. **Studies in Indian History and Culture** by Dr. Narendra Nath Law M. A., B. L., Ph. D. (Demy 8vo. 430 pp.) Rs. 8

## THE INDIAN HISTORICAL QUARTERLY
## (A HIGH CLASS ORIENTAL JOURNAL)

Each issue 200 pp. Super-Royal Octavo. Edited by Dr. Narendra Nath Law, M. A., B. L., P. R. S., Ph. D. containing contributions from the foremost oriental scholars of India, England, France, Germany.

Annual Subscription Rs. 6 (postage 0—12—0)

The Calcutta Oriental Press, 107, Mechuabazar Street, Calcutta.

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




भारतवर्षस्य श्रेष्ठानाम् औषधालयानां चिकित्सालयानां च अन्यतमः

**"आर्, सि, सेन एण्ड कों लिमिटेड्"**

(यथाशास्त्रं निर्मितानि विशुद्धानि औषधानि सर्व्वदा लभ्यन्ते)

१। **च्यवनप्राशस्य** प्रतिविंशतितोलकं मूल्यं रूप्यकद्वयं २) प्रेषणादिव्ययः ।/० आणकषट्कम् ।

२। **बृहच्चन्द्रोदयमकरध्वजस्य** सप्ताहार्थं मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्ययः ।/० आनकपञ्चकम् ।

३। **तुषारविन्दुतैलस्य** प्रतिदशतोलकम् मूल्यं २) रूप्यकद्वयम्, प्रेषणादिव्ययः ।/० आनकषट्कम् ।

(सर्वेषाम् औषधानां मूल्यादिविषयक-विवरणपूर्णं पुस्तकं मूल्यं विनैव प्रेष्यते

**कविराजः राखालचन्द्रसेनः एल् एम् एस्**

**„ श्रीसुधीरकुमार सेनः**

२५८ नं अपारचितपुररोड्, कलिकाता



सर्व्वत्र भारतवर्षे सुधीजनैः समादृतं,

कविराज-राखालचन्द्र-सेन एल्, एम्, एस्, कृतं

**कुन्तलकौमुदीतैलम्**

भवत्कुटुम्बमध्यवर्त्तिनीनां महिलानां केशप्रसाधनार्थं

विशुद्धोपादानजातं केशतैलमेतत् क्रीयताम् ।

भवत्-स्वदेशवासिना सुशिक्षितेन भिषजा निर्मितमेतत्

तैलम्, अतो भेषजगुणैः श्रेष्ठम् ।

(सर्व्वत्र गान्धिकानामापणेषु प्राप्तव्यम्)

**आर् सि सेन एण्ड कों लिमिटेड्**

२५८ अपारचितपुररोड्, कलिकाता


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४८ शकीये आश्विने ६म-वर्षस्य ६४-संख्या

## मतिमञ्जरी

**शारदस्वागतम्**—अयि भोः पारिषदाः ! वत्सरादनन्तरमद्य समुपागता शारदी प्रकृतिः सुसन्नद्धा पत्रपुष्पफलसम्भारैः। सम्भ्रान्तो वियति प्रतिभासन्ते वर्षानिर्म्मोकरिक्तकाया बलच्चलच्छोकाजीमूताः, प्रविचरन्ति पुष्पात् पुष्पान्तरे मधुलोभेन शिलीमुखाः कलसङ्गीतेन वेदयन्त इव कञ्चिदपूर्वमानन्दं दिश्यान्। प्रसन्ना चेयं प्रत्यागता मानसात् कलहंसमाला नूपुररवानुकारिणी भवतारिणीसमागमहृष्टेव विहरति नदीकूदकासारेषु। इयमसौ सरोजराजो, अयमसौ ताम्रश्रिया दीप्यमानो नवीनः पल्लवस्तोमः, इदञ्च प्रसृतं सुनिर्म्मलमाकाशम्, एता मेघसन्निरोधमुक्ताः प्रसन्नाः ककुभः, अमूनि च तरलानिलविचञ्चलानि श्यामशस्यानि, मुदिताश्चामी सङ्गीतपराः प्रणयिसमागमहृष्टा विहङ्गमतरुणा इति सर्व्वमेवेदमभिनवां भावकोटिमद्य व्याकोशयते। तत् किं सुविदितं युष्माकं निदानमस्य नवीनभावानुबन्धस्य ? यदि नो सुविदितं, श्रूयतां यदिदं निरुच्यते।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

प्रतिवर्षमेवास्यां शरदि वसुधामनुग्रहीतुकामा समुपायाति तत्र सर्वानन्दमयी शम्भुदयिता। यस्याः परमानन्दलवस्पर्शेन जीमूतरोधसंसूचितमहाव्यसनपातमपि जगदिदं प्रसन्नया प्रकृत्या समनुगृह्यते स्तोककालेन। अद्यापि नियमतः प्रकाशमानायां शरदि सैव करुणामयी महीतले सपरिवारा पदं करोतीति सुसमञ्जस एवायमानन्दः समन्ततो दीप्तः।

तत् पारिषदाः! प्राप्तसन्निधानाद्य सर्व्वकल्याणमयी भगवती लघूकर्त्तुमिव दुरितफलानि युष्माकम्, आराध्यतामियम्, अभ्यर्थ्यतामियं, प्रसाद्यतामियं ललितस्तोत्रगीतैः सन्तानवत्सला, मा तावदयमवसरो वृथैव परिहीयताम् आलस्यविषपरिक्षोभेण।

विविधार्त्तिजर्जराः! चिरमार्त्तिशतदुर्म्मणायिता यूयमपि न श्रद्धत्थ तस्या आर्त्तिनिष्कासनसामर्थ्यम्? विमुञ्चत मोहान्ध्यम्, सभक्तिकं गायत स्तोत्रमिदं मुनिगीतम्—

'शरणागतदीनार्त्तपरित्राणपरायणे।
सर्व्वस्यार्त्तिहरे देवि नारायणि नमोऽस्तु ते'॥ इति।

स्मरत सुराणामपि तादृशैरेव स्तोत्रगीतैरसुरकुलोपद्रुतानां विपदो विध्वंसम्। भक्तिगृहीता सेयमद्य भवतामिमा व्यापदो नाशयितेति कोऽयमुच्चैर्वादः।

सच्छक्तिशून्या भारतप्रसवाः! अपि शक्तिः सर्व्वैव विलुप्ता युष्माकम्? प्राचीनकालमनुस्मृत्य यदि समीक्ष्यते तदा स्वाप्निक एव सर्वो विशेषः प्रतीयते भारतवर्षस्य। न विद्यते कृत्येषु सामर्थ्यम्, आलस्योपहताः किल करणवृत्तयः परार्थेषु न प्रवर्त्तन्ते, नापि स्वार्थेषु साधनेषु भूयसामायासानाम्। तेन च प्रतिपदमेव परिहीयध्वे क्षेमशतैः सकलसज्जनाभीष्टैः। किमेवं विकुरुध्वे, कथमीदृगसारमार्गपरिभूता नैव विज्ञातुमीशिढ्वे स्वीयमङ्गलशतानि? हा हन्त! भूताविष्टा

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

इव यूयमधुना सन्तमपि पन्थानमसन्तमेव सम्भाव्य तदुपरतिं सामोद-मालम्बध्व इति किमधिकमितो दौर्भाग्यम् उन्मादग्रस्तानाम्।

शारदोत्सवः समायात इति परमानन्दपरिप्लुताः प्रतिपदं प्रयतध्वे ललितवसनाभरणसम्भारेण समलङ्कर्त्तुमात्मानमिति व्यतिकरेऽपि पुत्र-कलत्रपरिजनादीन्, प्रवासिनः स्ववसतिसम्पर्कप्रवणा व्यतीतपरिक्लेश-विस्मरणमिवोपकर्त्तुकामाः समवस्थिता विविधविधिव्यासङ्गेषु, परं लेशतोऽप्यद्य न दृश्यते प्रयत्नस्तथा भवतां येन परिपूजिता भगवती शुम्भवैरिणी समुपगन्ता सन्तानेषु विशेषतः करुणामृतप्रदानरागम्। विस्मृतः किल सुपथो युष्माभिः।

अथ यदि स्वस्ति कामयध्वे, तदियमाराध्यतां भक्त्या, समा-मन्त्र्यतां स्तोत्रगीतैः, प्रसाद्यतामेषा कल्याणी स्वदुःखविनिवेदनलाघ-वेन। एवं कृते करुणामयी करुणया समपसारयेत् सर्वाणि वो दुःखानि, समुपपादयिता चेयं सन्तानवात्सल्येन निखिलानि कल्याणानि। परि-ह्रीयतां भीतिः, समाश्रीयतां समुत्साहः सत्कृत्येषु, समासाद्यताम् अनालस्यं, गीयतां तथा सानुरागञ्च सभक्तिकञ्च सस्नेहञ्च सप्रश्रयञ्च सपरिहारञ्च—

"दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभान्ददासि।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता॥" इति।

मातः सर्वमङ्गलमङ्गल्ये! प्राप्तासि वत्सरात् परमद्य वसुन्धरायाम्। व्यतीते वर्षे यथा किल दृष्टवती भवती तदवस्थाम्, किमद्यापि तथैव वीक्षते? जगज्जननि! संविचारमालोकयतु भगवती कियानयं विक्षोभो भारते वर्षे वर्षेण समापतित इति। अद्य द्विषन्ति हन्त भ्रातरः परस्परमतिमात्रम्, निर्मूलसम्परायविमनायिताः परस्पर-मस्रघातमपि प्रियाय मन्यन्ते, समूलमुत्सादिता मानससन्धि-वार्त्तापि। सर्वकल्याणमयि, अपि तावदिदमेव कल्याणं त्वदेक-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

चरणशरणानाम्? मुग्धाः स्म, विमनायिताः स्म, क्षोभशतविक्लवाः स्म, नालमात्मनो हितं विनिर्णेतुम्, तदुपदिशतु भवती कल्याणीं दिशम्, परिरक्षतु विविधक्षोभराक्षसपरिक्षतजीवनाशानां सुतानान्ते परिस्थितिं कल्याणमयीम्।

क्व नु खलु प्रस्थिता प्राचीनेषु रतिः साधुविषयेषु, क्व वा सन्धिरान्तरिकः परार्थपराणां त्वदीयतनुजानाम्? सर्व्वमेवेदमद्य सुदूरापेतमुपेयते। तदयर्ण्णे! शीर्णधर्म्मान्वये क्रियतां करुणालवोऽपि भारते वर्षे यथा नवीनविक्षोभपरिक्षताः सुखमेधेरन्नात्मजास्ते न चिरेण। समादिशतु भवती स्वसुतं गणाधिपं विघ्नविध्वंसपटीयांसम् विघ्नविद्रावणार्थम्, कोऽन्यस्तमन्तरेणालं जगन्निरन्तरायीकर्त्तुम्, प्रेषयतां स्वप्रियां कमलां भारते वित्तमेधयितुम्, नियुङ्क्तां विद्याधिदेवतां भगवतीं भारतीमतीतयुगविद्यातुलनया जनयितुमत्र परमोत्तमां विद्याम्। किमपरं, सञ्चारयतु कुमारं देवसेनापतिं निखिलक्षेमप्रतिबन्धकवैरिविध्वंसे, यतः खलु सर्व्वक्षेमसम्पर्कः पदमादधीत भारतीयेषु। तदिदं श्रूयतामर्थितमेषाम्—

देवि! प्रसन्नार्त्तिहरे प्रसीद, प्रसीद मातर्जगतोऽखिलस्य।
प्रसीद विश्वेश्वरि! पाहि विश्वं, त्वमीश्वरी देवि! चराचरस्य॥ इति।

देवि, रोगशतशीर्णे भारतवर्षे क्रमेणावसीदन्ति कर्म्मशक्तयः, प्रत्यहमाविर्भवन्तीव नवा रोगराक्षसा भक्षयितुमक्षिपक्ष्मपातसमयमात्रेण भवत्यास्तनयप्राणान्, तदलमसन्तोषेण, मुक्तरोषा सन्तोषमुपाश्रिता सार्थकं कुरुष्व—

रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान्।
त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति॥

इति सप्तशतीवचनम्, येन भारतीयेषु पदं कुर्व्वीरन्नखिलमङ्गलानि। देवि शक्तिस्वरूपे! किं बहुना, स्वागतन्ते स्वस्ति विधेयात्! स्वस्ति विधेयात्!! स्वस्ति विधेयात्!!! करुणालवस्ते शान्तिं क्रियात्! शान्तिं क्रियात्!! शान्तिं क्रियात्!!! इति शम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# गतासुवीरः

[ निबन्धकः—H. G. S. Bivar, I. C. S. ]

ततो मृतो गृहं तस्या भर्त्तानीतो महारथः।
नामूर्च्छत् सा पतिं दृष्ट्वा न किञ्चिद्वाक्यमब्रवीत्॥
रुद्यात् पत्नी मृते पत्यौ नो चेत् सैव मरिष्यति।
इति तास्तत्र पश्यन्त्यस्त्वाब्रुवन् परिचारिकाः॥
प्रास्तुवन् वै पतिं तस्या ब्रुवत्यस्ताः शनैः शनैः।
अरीणां परमो नूनं मित्राणां चोत्तमोऽभवत्।
सुवल्लभः स खल्वासीत् सा तु तूष्णीं स्थिरा स्थिता॥
काचिद्दासी तदोत्थाय मुखाद्वस्त्रमपानयत्।
मृतस्य वीरवर्य्यस्य पत्नी तूष्णीं स्थिरा स्थिता॥
काचिद्धात्री महावृद्धा समुत्थाप्य तयोः शिशुम्।
क्रोड़े सैव तदा मातुस्तं दधौ पितृवत्सलम्॥
रुदती गुरुवात्येव पत्नीदमब्रवीत्तदा।
एका त्वां पालयिष्यामि त्वं प्रियोऽस्यावयोः सुत॥

---

# वङ्गेषु देववाणी *

[निबन्धकः—श्रीननीगोपालवन्द्योपाध्यायः एम्-ए]

बौद्धाधिष्ठितवङ्गभूमौ ब्राह्मणप्रादुर्भावः

कदा कथमनार्य्याध्युषितायां वङ्गभूमौ ब्राह्मण-सेवधिर्भारत्युपानीयतेत्यत्रास्ति अद्यापि विदुषां विप्रतिपत्तिः। कान्यकुब्जतो ब्राह्मणागमनात् प्रागेव वङ्गेषु देवभाषानुशीलितासीत् इत्यत्रास्त्येव प्रमाणम्। सर्व्वथा निर्विवादमेतद् यत् खीष्टाब्दसप्तमशतके बाणो-

* अ० भा० संस्कृतसाहित्यमहासम्मेलनस्य दशमाधिवेशने पठितोऽयं निबन्धः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

"गौड़ेष्वचरडम्बर" इत्यवादीत्, ध्रुवं स च गौड़देशो वङ्गदेश एव। यतो बाणेनैव वङ्गराजः शशाङ्कदेवो "गौड़ापसद" इत्यभ्यधायि। "इत्सिङ्ग"समकालीनो बौद्ध-वैयाकरणचन्द्रगोमी तावदस्ट्देश एवावर्त्ततेत्यन्यच्चात्र आदिशूरादर्वाक् संस्कृतानुशीलन-प्रमाणम्।

आदिशूरेणाध्येषिताः किल पञ्च ब्राह्मणाः कान्यकुब्जादत्रागतास्ते चात्रैव कृतवसतय आर्षज्ञानज्योतिषा बौद्धविप्लुतां भूमिमिमां चिरादुददीधरन्निति प्रसिद्धिस्तां तु प्रतीच्या न प्रतियन्ति। तन्मते आदिशूरस्य ताम्रशासनादिप्रमाणाभावात् अस्तित्वमप्यसिद्धम्। तस्य प्रामाणिकत्वमप्रामाणिकत्वं वा नास्मद्विचारविषयः। किन्त्विदमत्रावधेयम्—(१) यदस्मिन्नेव समये बौद्धग्रस्ते भारते कुमारिलप्रमुखैः बौद्धान् निरस्य सर्वत्र श्रौत स्मार्त्त-धर्म्म-प्रवर्त्तनाय महान् प्रयासश्चक्रे। (२) कान्यकुब्जभूपतेर्यशोवर्म्मदेवस्यास्थानकवेः कुमारिलशिष्यभवभूतेर्मालतीमाधवरूपकेऽपि स एव तात्कालिकबौद्धनिरासप्रयासो व्यक्तं लक्ष्यते। (३) तस्य च कान्यकुब्जभूपतेर्यशोवर्म्मदेवस्यैव समयेऽत्र श्रौतकर्म्मानुष्ठानाय कान्यकुब्जीयब्राह्मणाः समानीता इत्यैतिह्यम्। अतएवेतिहासानुसारी प्रवाद एष यावद् बलवत्तरैः प्रमाणैर्वानुपपन्नस्तावत् स कथं नाङ्गीकार्य्यः? तच्च कान्यकुब्जाद् ब्राह्मणागमनं राज्ञः साहाय्यमन्तरेण कथमपि नोपपद्यते। भवतु स राजा आदिशूरो वाऽन्यो वा कश्चित्।

—००—

## पालाधिकारे वङ्गभूमिः

अत्र किल पालराजाभ्युदये देववाण्याः कोऽप्यभ्युदयो जातः। वङ्गेषु खीष्टाब्दाष्टमशतकशेषार्द्धे पालराजा अभवन्। तेऽत्र त्रीण्यब्दशतानि राज्यमभुञ्जन्। तदानीं ज्ञाने धर्म्मे साहित्ये सर्वत्र वङ्गानामभ्युदयः संवृत्त इत्यत्र पुराविदामैकमत्यम्। खीष्टाब्दैकादश-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्रुतकि महीपालादिष्टः किल आर्य्यक्षेमीश्वरः कवि "चण्डकौशिक"-नाटकं प्रणिनाय। तेन राज्ञा कर्णाटराजः [ राजेन्द्रचोड़ः ] समरे निर्ज्जितः। तद्विजयमहोत्सवे गौड़नगरे तन्नाटकमभिनीतम् आसीत्। नूनं श्लाघनीयः समयो महीपालदेवस्य। तदानीन्तनैर्दीपङ्कर-श्रीज्ञान-प्रभृतिभिः बौद्धपण्डितैर्विक्रमशिला-विहारात् सुदूरं तिब्बतदेशं सद्धर्म्मो नीतः। तत्रत्या हि पशुप्राया आसन्। तानपि ते बौद्धा धर्म्म-विनयमग्राहयन्निति प्रसिद्धिः।

—००—

(१) पालाधिकारे सन्ध्याकरनन्दी

(२) पालाधिकारे तदुत्तरकाले च बौद्धब्राह्मणयोरेकत्र शास्त्रानुशीलनम्

पालाधिकारे हि सद्धर्म्मः श्रौत-स्मार्त्तधर्म्मश्चेति द्वयमेव वृद्धिमभजत। तदानीन्तनरामचरितकाव्ये श्लेषकाव्यादर्शभूते विमलादर्श इव अभिदृश्यते महीयसी कापि च्छविर्वङ्गजनन्याः। तत्कविः श्रीसन्ध्याकरनन्दी रामपालस्य सान्धिविग्रहिक-पिनाकनन्दिनस्तनयः श्रीपौण्ड्र-वर्द्धनपुरवास्तव्य आसीत्। स "वचनाविरिञ्चि" "गम्भीरोदार-भारतीसारैः "अक्लेशनश्लेषैः" श्लोकैर्नारायणावतारस्य रामस्य रामपालदेवस्य च चरितमवादीत्। तद्धि काव्यं मदीयाचार्य्यैः श्रीमद्धिहरप्रसादशास्त्रिपादैर्नेपालशैले प्राप्तं प्रकाशितञ्च। सर्वथा ज्ञातव्यमेतद्विदुषां विशेषतः पुरातत्त्वामोदिनामिति तत्परिचयः संक्षेपत उच्यते।

काव्येऽस्मिंश्चत्वारः परिच्छेदाः, तत्र प्रथमे रामचरिते—रामजन्मत-स्ताटकावधः, रामलक्ष्मणयोर्विश्वामित्रतपोवनाय प्रस्थानं, रामादीनां मिथिलायामुद्वाहः, रामवनगमनं, सीताहरणं, कपिराजेन रामस्य मैत्री, सीतान्वेषिणो हनूमतो लङ्कापुरप्रवेशः—रामपालदेवचरिते तत्कुलपरिचयः, विग्रहपालस्य महीपालः शूरपालो रामपालश्चेति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

पुत्रत्रयजन्म, रामपालप्रशंसा, महीपालेन कारायां रामपालस्य बन्धनं, दिव्वोकेन कैवर्त्तसेनापतिना वारेन्द्रीविजयः। रामपालेन च कारामुक्तेन शिवराजप्रमुखैः सामन्तव्रजैः सन्धाय पितृभूमिरुद्धारचेष्टा।

सर्गे द्वितीये रामचरिते कपिबलानां वर्णनं, सेतुबन्धनं, समुद्र-वर्णनं, सुवेलवर्णनं रावण-सभायाम् अङ्गददौत्यं, कुम्भकर्णादिनिधनं, रावणबधश्च।

अत्र रामपालचरिते रामपालसाहाय्याय मिलितसामन्तचक्र-वर्णनं, नौकामेलकेन तेषां गङ्गोत्तरणं, भीमेन कैवर्त्तराजेन समर-स्तद्बन्धनञ्च, भीमस्य वर्णनं, रामपालसूनोर्वित्तपालस्याभ्यासे भीमस्य प्रेषणं, ततश्च तस्यान्तर्द्धानं, तस्य हरिसुहृदा कथं भीमानीकं समचोयतेति कथनं, पुनः समरारम्भः, वित्तपालेन दानमानैः सामन्त-नरपतीनुपजापसहानुपजप्य भीमस्य हरिसुहृदमपि स्ववशमानीयारि निग्रहः, ततो "मृत्युस्थानं" नीतः स भीमः। पश्यत एव च तस्याप्त-वर्गो निहतः, ततोऽवसितः स कैवर्त्तवीर इति कथितम्।

तृतीये अग्निपरीक्षानन्तरं सीतायाः परिग्रहस्ततः षड्विंशति-श्लोक्या कुलकेन सीताया वर्णनं, विभीषणाय लङ्कादानं, रामस्य कुवेरदत्तविमानयोगेन प्रस्थानं, भरतेन पथि मिलनमयोध्यायां, प्रत्यावर्त्तनञ्च।

रामपालेन पितृभूमेः स्वीकरणं, षड्विंशतिश्लोकीकुलकेन वारेन्द्रीवर्णनं राजधानी-रामावत्याः प्रतिष्ठा, तत्र हरिराजस्यापि "महाद्रविणवेष्टितस्य" निवेशनं, "आनन्दैकनिदाने विश्वकर्म-निर्म्मिते" कस्मिन्नपि मन्दिरे देवयोः (?) साक्षात्कारः। ततो रामा-वदानवर्णनं—पूर्त्तपुष्करिण्यादिप्रवर्त्तनम्; प्राच्यवर्म्मनरपतिना गज-रथाद्युपायनेन रामपालस्य प्रसादनम्; समरे देवराचितानुकूल्यात् जयलाभः। कामरूपादि-विषय-विजयविनिवृत्तस्य तस्य राज्ञा सम्भावनम्; कलिङ्गतो नागवंशोत्सादनम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अथ चतुर्थपरिच्छेदे अलीकपौरप्रवादोद्विग्नेन रामचन्द्रेण सीता-निर्व्वासनम्। अत्र चतुर्थसर्गे न्यूनता दृश्यते,—यतश्चतुर्थे पञ्चमे च निर्व्वासनाज्ञामाकर्ण्य सीतायाः परिदेवनारम्भः, षष्ठे पुनः रामेण कुशस्य यौवराज्येऽभिषिक्त इति बहूनां श्लोकानामभावोऽत्र सुप्रतीय-मान एव। ततश्च सरयूजले रामादीनां तनुत्यागः, कुशस्य राज्य-प्राप्तिः तद्गुणकीर्त्तनञ्च।

सूनु-समर्पितराज्यस्य रामपालदेवस्य विश्रामः। पुत्रे राज्य-पाले रामपालस्य प्रसादः। ततः "अधिमुद्गिरि" स्थितो राजा रामपालः बहुसमरविजेतारं राष्ट्रकूटसुभटं दुर्जातबन्धुं मथनदेवं दुष्टशिल्पिसङ्घस्य कपटप्रबन्धादस्ततनुं निशम्य शोकार्त्तो जातः। ततः प्रायोपवेशनमतिर्नृपति-"मंहासरितं" गङ्गां प्रतस्थे; तत्र च बहु-वितरणेन ब्राह्मणान् परितोष्य "रुदति जनजाते" गङ्गां नीरवमव-गाह्य तनुत्यागमकरोदिति वार्त्ता। ततः कुमारपालस्य राज्यलाभः। तदन्ते च "शत्रुघ्नोपचारात्" स्वर्गते गोपाले मदनदेवस्य गौड़-सिंहासनप्राप्तिः। ततो दीर्घमदनदेवप्रशस्त्या सर्गपरिसमाप्तिः।

अत्र प्रशस्तौ बहुधा स्तुतस्य "सुवर्णजात"चन्द्रस्य बन्धोरानु-कूल्यादेव मदनदेवस्य विजयलक्ष्मीलाभ इत्युल्लेखो ध्येयः। अपर-श्चोल्लेखार्हो विषयः—कलिङ्गराजेन राज्ञा मदनदेवेन गोवर्द्धनाख्यः कश्चिद् धरित्रीभृदुत्खात इति।

प्रागुक्तवारेन्द्र्युपवर्णने हि तदानीन्तनवारेन्द्रीविषय आदर्शतल इवालक्ष्यते। आदौ तत्रत्यराजनिर्म्मित"मोचणामृतौघमुचम्" आराममेकं निर्वर्ण्य दृष्टिरन्यतो न वलति। चैत्रे चैत्रे "लक्ष्मीः काम्यरूपा" "धान्यराजसंहतौ" शोभते। "प्रस्फुरदिक्षु"वाटेन वारेन्द्री पृथ्वीललामभूता भाति। "दरदलितकनककेतककान्तिः" "फलरसमितसुधाशनपूगोद्याना" "अरविन्देन्दीवरमय-सलिल-सुरभिशीतलश्वसना" वारेन्द्री "कुन्तलरुचि"मपि कलासौभाग्येना-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पिवति "अङ्गमवनमयति" "कर्णाटिच्चणलीलामधरयति" "लाट-कान्तिमाविलीकरोति" "मध्यदेशतनिमानञ्चातनोति"।

"ब्रह्मकुलोद्भवा" "सुमनोभिरभिव्याप्ता" सा वारेन्द्री। तत्र किल बौद्धा ब्राह्मणाश्च चिरन्तनविरोधमुत्सृज्य प्रतिवसन्ति स्म। 'असृतस्य परिपूर्णा'स्ते यथास्वं वाग्देवीमाराधयन्त आसन्। तथा ह्येकतः 'सत्याचारैककेतने' तस्यां 'पूण्यभूमौ' "भगवद्भिर्विप्रवरैः" "प्रशान्ततमैश्चानूचानै" रावाहिताः "सद्विद्याद्वादशादित्याः" "प्रकाशरूपास्ते रुद्राः" "विततास्सदाश्च विश्वे देवाः" अन्ये च 'देवमुख्याः' "प्रांशु-प्रासादवेदीषु" व्यराजन्। अन्यतश्च "जगद्दल-महाविहारचितरागा" "लोकेशं दधती" वारेन्द्री सुतरामदीप्यत—तस्या महामहिमानं महत्तरास्तारमुदैरिरन्।

वस्तुत एवात्र ते बौद्धा ब्राह्मणाश्च विद्वांसः स्वस्वविद्या अवधारयन्तो भूमिमिमां चिरं अध्युषिता इत्येवं अग्रेऽपि वक्ष्यते, राजानश्च जातिधर्मनिर्विशेषेण विद्यां प्रोत्साहयामासुः। केवलं ब्राह्मणपक्षपाती बल्लाल एव बौद्धेषूदासीन इवासीत्, तत्पुत्त्रो लक्ष्मणसेनस्तु बौद्धान् ब्राह्मणांश्च विदुषः समसुपचरन्ति स्मेति अग्रे च सप्रमाणं दर्शयिष्यते। अत्र सम्प्रदायद्वयस्यैकत्रावस्थितिर्मदीयाचार्य्यैः शास्त्रिपादैरगणित-प्राचीन-पुस्तक-पूलकैः सुप्रतिपन्ना। तेषु प्राचीनतमं कालचक्रयान-पुस्तकं यशोहरे वेङ्गनद्यास्तटे हरिवर्म्मदेव-विजयराज्ये लिखितमिति तस्य कालः सहस्रवर्षात् किञ्चिन्न्यूनः। तेषु अर्वाचीनतमं पुस्तकञ्च खीष्टाब्दपञ्चादशशतके लिखितं सुप्रथितं बोधिचर्य्यावतारपुस्तकम्। तल्लिपिकारो राढ़ीयः कश्चित् कायस्थः। अतःपरं बौद्धवार्त्ताव न श्रूयते।

अन्यच्च—खीष्टाब्दचतुर्दशशतके ब्राह्मणाचार्य्यैः रायमुकुटैः वन्द्यघटीयसर्व्वानन्देन चामरटीकायां बुद्धचरित-सौन्दरानन्दप्रणेतुरश्वघोषस्य श्लोक उदाहारि। एतेन तस्मिन्नपि काले ब्राह्मणैर्बौद्धग्रन्थ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

विशेषा अधीता अध्यापिताश्चेति प्रमाणीकृतं ; किन्त्वहो विपाकः अस्मद्देशे स बौद्धकविराधुनिकैः विस्मृत एवासीत् ।

—००—

कीचकवधम्—यमककाव्यम्

अधुना प्रस्तुतमेवानुसरामः। पुरा श्लेषप्रिया यमकप्रियाश्च वङ्गा आसन्। रामचरितसमकालीनमेव कीचकवधाख्यं यमककाव्यं तैः प्रत्यादृतम्। अस्य कवयितुर्नीतिवर्म्मणः समयोऽद्यापि न यथावन्निरणायि। किन्तु लक्ष्मणसेनसमकालीनेन भाषावृत्तिकृता बौद्धपुरुषोत्तमेन काव्यादस्मात् द्वितीयसर्गतो "नृपतिसभामगमन्नवेऽपमाने" इत्येष श्लोक उद्धृतः।

एतावदेव तत्प्राचीनत्वनिदर्शनम्। अपि च संक्षिप्तसारे जुमरनन्दिनाऽमरकोषटीकायां रायमुकुटेन सर्व्वानन्देन च, मुग्धबोधटीकायां रामतर्कवागीशेन काव्यमिदमुद्दिष्टम्। काव्यादर्शटीकायां प्रेमचन्द्रतर्कवागीशेनापि काव्यसुखमाशोरित्यस्योदाहरणं कीचकवधमेव निर्दिष्टम्, तच्चान्यत्र नोपलभ्यते।

अस्याधिगतानि पुस्तकानि सर्व्वाण्येव वङ्गाक्षरेण लिखितानि, लण्डननगरेऽपि सटीकं वङ्गाक्षरलिखितं कीचकवधपुस्तकं विद्यते, सा टीका वङ्गोद्भवेन जनार्दनसेनेन प्रणीता। एतावता काव्यस्यापि वङ्गोद्भवत्वं तर्क्यते। तच्चेन्न स्वीक्रियते, तदपि न काचित् क्षतिर्यतः श्लेषयमकं वङ्गैः पुरा सादरमनुशीलितमित्येव नः प्रधानतो वक्तव्यं तच्च सुप्रतिपन्नमेव।

काव्येऽस्मिन् पञ्च सर्गाः, प्रधानत एतद् यमककाव्यमभिधीयते। अत्र तृतीयसर्ग एव श्लेषात्मकः, शेषेषु यमकम्। काव्यवस्तु प्रसिद्धमेव। ग्रन्थकृता कस्यचिद् राज्ञः प्रीत्यै ग्रन्थोऽयमरचि ; तन्नामनिर्देशस्तु न कृतः, तेन राज्ञा राज्यमाकलिङ्गं विस्तृतमित्येतावदुक्तम्।

—००—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

पालाधिकारे राढ़े ब्राह्मणसमाजः

पालाधिकारेऽपरोऽपि विद्वत्समाजः राढ़े भूरिश्रेष्ठनगरे अवर्द्धत। तत्र किल विद्यामदाः प्रौढ़वादा ब्राह्मणा आसन्, एवंविधास्ते खीष्टाब्देकादशशतके कृष्णमिश्रकृतप्रबोधचन्द्रोदयनाटके प्रदर्शिताः।

'अहंकारः—आः पाप कथमस्माकमपि कुलशीलादिकमिदानीं परीक्षितव्यम्। श्रूयतां तावत्—

गौड़ं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढ़ा ततो
भूरिश्रेष्ठिक-नामधाम परमं तत्रोत्तमो नः पिता।
तत्पुत्राश्च महागुणा न विदिताः कस्यात्र तेषामपि
प्रज्ञा-शील-विवेक-धैर्य्य-विनयाचारैरहं चोत्तमः॥

अत्र भूरिश्रेष्ठिसमाजे खी: ९९. मितेऽब्दे श्रीधरेण पदार्थधर्म-संग्रहटीका न्यायकन्दली प्रणीता। अत्र च भूरिश्रेष्ठि-समाजे वङ्गकवि-र्भारतचन्द्रो ब्राह्मणकुलेऽजायत, हरिवर्मदेवस्य प्रधानामात्य-श्रीभव-देवभट्टो दशकर्म्मपद्धतिकारः सर्वेषां विदित एव, सोऽप्यमुष्मिन् काले भास्वरग्रह इव वङ्गाकाशे प्रकाशते स्म। तस्य "बालवलभीभुजङ्गस्य" वाचस्पतिमिश्रकृता प्रशस्तिः सुप्रसिद्धा। सोऽयं सिद्धलग्रामीणः जन्मना राढ़देशमलङ्कारेति ज्ञायते। (क्रमशः)

---

## शरद्विलासः

[ लेखकः—श्रीरामलक्ष्मीनारायणशर्म्मा ]

आलिङ्गयन्ती हृदयं जनानां व्याजेन शीतस्य निशानिलस्य।
एषा प्रवृत्ता हरितास्तरायां नीलाम्बरा काऽपि शरद्धरायाम्॥ १
नवानि शस्यानि जलम्प्रसन्नं फुल्लानि पद्मानि वराश्च हंसाः।
व्योम प्रकाशं विमलः शशाङ्कः सिताः पयोदाः परिधावमानाः॥ २

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्यामान्यरण्यानि विकाशिताशाः सरःसु नक्तं कुमुदप्रहासाः ।
नात्यर्थतिग्मप्रसरो विवस्वान् विहङ्गमा मत्तविरावभाजः ॥ ३
वितामसा वीतरजोविताना दिशः प्रसन्ना विरजा धरित्री ।
एतानि यूनां मदनार्थसिद्ध्यै कान्ताजुषां शारदमण्डनानि ॥ ४
ऋत्वन्तरेण प्रतिपन्नभिन्ननूत्नश्रि सञ्चारयताऽङ्गनासु ।
पुष्पेषुणा यौवनमादधाना पदं धरित्र्यां जयिनो शरन्नः ॥ ५
कणाचयालीनवयोव्रजानि कलैर्निनादैरुपकूजितानि ।
विपाकरम्याणि ससौरभाणि नवानि शस्यानि मनोहराणि ॥ ६
सुगुप्तमन्त्रा इव शस्यमालिनश्चिरं श्रिताः कापुरुषेतरे यथा ।
फलानि वप्राः परिपाकशोभिनः कृषीबलानां प्रमदाय दित्सवः ॥ ७
वृक्षावलीमञ्जुलताविताना फलप्रसूनं विविधं दधाना ।
ध्वानैः प्रगीतेव शिलीमुखानां शरत्कृते तिष्ठति सोपदेव ॥ ८
लोकमानसहरा विनिवार्यं सम्प्रवृद्धविषयान्यनियोगम् ।
केतकी सुकविसूक्तिरिवालीन् कर्षते सदनुमोदितगन्धम् ॥ ९
तालावली काञ्चनकान्तिभाग्भिर्दण्डैः पलाशान् गजकर्णमानान् ।
वातेन मन्द्रध्वनि धूयमानान् धृत्वाऽभितः सव्यजनेव भाति ॥ १०
अमी तिरोभूतविहङ्गमानां सान्द्रैर्विरावैः सविकासहासाः ।
काशाः समन्तादवनौ प्रवृत्तं शरद्विलासं विनिवेदयन्ति ॥ ११
अपेतपङ्कं परिवर्जितोत्पथं शनैः शनैर्वायनुकूलमञ्चितम् ।
गभीरमम्भोजपलाशशोभितं सशैवलं नातिनिनादि शीतलम् ॥ १२
यथा ह्यवस्थान्तरमात्मसंविदां गतं हृदि ज्ञानमरिक्तकर्मकम् ।
तथा प्रसन्नं नवया युतं श्रिया नदीषु वापीषु सरःसु राजते ॥ १३
श्रेणीनिबद्धा गगनं पतन्ती मालीभवन्तः शरदङ्गनायाः ।
विध्वंसमानाम्बुविहीनमेघलक्ष्मीं हयन्तीव वलक्षपक्षाः ॥ १४
रुतं प्लवानां भुजगाशनानां भृङ्गारिकाणां विरतिं दधाति ।
साधुस्वनाः सम्प्रति राजहंसा वाणीविलासं दधतेऽङ्गनानाम् ॥ १५

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

निलीनभृङ्गाणि ससौरभाणि कल्ये नवोढ़ावदनानि कान्तः।
शनैर्मृदुस्पर्शवता करेण प्रबोधयत्यम्बुरुहाणि भानुः॥ १६
निर्विघ्नमत्र स्फुरदंशुमाली व्योमाश्रवानः किरणैरशेषैः।
नात्यन्ततिग्मप्रसरो जनानां मोदं नृपः सौम्य इवादधाति॥ १७
मुक्तानिभानत्र विभातकाले पलाशिनो नव्यदलैर्वहन्ति।
हिमस्य बिन्दून् दिवसेश्वरार्थोपहारभूतानपृथून् पृथूंश्च॥ १८

( अवशिष्यते )

---

# वेदान्ततत्त्वम्

( श्रावणादनुवृत्तम् )

[ निबन्धकः—श्रीअशोकनाथभट्टाचार्यः वि. ए. ]

अथेदानीमालोचनीयं यत् कथं ब्रह्मपदस्य श्रीभाष्यकारादिसम्मतोऽनन्तगुणविशिष्टसगुणनारायणस्वरूपार्थो न सम्भवति। किं वात्र सूत्रकाराणामभिमतं तत्त्वमिति च।

अत्रेदं समाधानम्। ब्रह्मपदार्थो हि सूत्रकारेण "जन्माद्यस्य यत" * इति सूत्रेण निर्णीयते। तस्मिंश्च सूत्रे "जन्माद्यस्य यत" इति "यतः" पदे"नास्ये"तीदंपदेन च विचारणीयतया—"यतो वा इमानि भूतानि जायन्ते" † इति विषयवाक्यं सूच्यते। तेन च विषयवाक्येन सकलजगत्कारणं ब्रह्मपदार्थ इति निरूप्यते। तस्मिन् वाक्ये जगत्कारणत्वं ब्रह्मणोऽसाधारणं लक्षणमिति न विवक्षितम्। यतस्तस्मिन् प्रकरणे "अन्नं ब्रह्मेति व्यजानात्" "प्राणो ब्रह्मेति व्यजानात्"—"मनो ब्रह्मेति व्यजानात्""विज्ञानं ब्रह्मेति व्यजानात्"‡-

* ब्रह्म १।१।२ † तै, उ, ३।१७ ‡ तै, उ, ३।२,३,४,५।१

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


इत्यादिसन्दर्भेणान्नप्राणमनोबुद्ध्यादिद्वारेण ब्रह्म निर्णीयते। अयञ्च निर्णयस्तदैवोपपन्नो भवति, यदि यत्स्वरूपं ब्रह्मपदार्थतयाभिमतं तदविविक्ततया (अभिन्नतया) शरीरे प्राणमनोबुद्ध्यादिकं गृह्यते; अनन्तरं शरीरादीनामिकैकस्य पृथक्करणद्वारा शरीरादिसम्बन्धरहिततया किञ्चिद्ब्रह्मपदार्थस्वरूपं निर्णेयं भविष्यति। तच्च प्रथमतः शरीरादिसम्बन्धो यत्रासीत्तस्यैव शरीरादिसम्बन्धरहिततया ब्रह्मपदार्थतायामुपपद्यते। तथा चेदं सिद्धं भवति यच्छरीरान्तःकरणसम्बन्धरहितं स्वरूपचैतन्यमेव ब्रह्मपदार्थ इति। वैकुण्ठलोकवासी तु नारायणो न शरीराद्यविविक्ततया केनापि ज्ञायते, न वा शरीरप्राणादिविवेचनस्य तत्स्वरूपज्ञानोपयोगिता वर्त्तते। अतो न श्रीभाष्यकाराभिमतो ब्रह्मपदार्थः सूत्रकाराभिमतः, किन्तु शङ्करभगवत्पादसम्मत एव स सूत्रकारसम्मतः। अयञ्च सूत्रार्थोऽन्तःकरणादीनाञ्चैतन्ये कल्पितत्वमन्तरा न सुनिरूप इत्यन्तःकरणचैतन्ययोः परस्परारोपनिरूपणमत्यावश्यकम्। इदमेवाभिप्रेत्य भाष्यकारा ब्रह्मपदव्याख्यानावसरे देहमात्रञ्चैतन्यविशिष्टं ब्रह्मेति केचन वदन्ति, केचनेन्द्रियादिकं ब्रह्मेति वदन्ति, केचिदन्यदिति विप्रतिपत्तिनिरासार्थं वेदान्तमीमांसाया उपयोग इति वर्णयन्ति। तथा च शरीरादिसम्बन्धनिरासे स्वरूपचैतन्यमात्रनिरूपणमेव वेदान्तशास्त्रस्य विषयः।

एतादृशस्वरूपचैतन्यं यदान्तःकरणादिसम्बद्धं तदा 'जीव'पदेन व्यवह्रियते। यदा तु सर्वान्तःकरणकारणमायासम्बद्धं तदा ईश्वरपदेन व्यवह्रियते। तत्र तु मायासम्बन्धस्तथा बन्धप्रयोजको न भवति, यथान्तःकरणसम्बन्धो बन्धप्रयोजकः। एवमन्तःकरणसम्बन्धोऽपि तथा बन्धप्रयोजको न भवति, यथा चैतन्ये ममतासम्बन्धो बन्धप्रयोजकः। अतोऽस्माकमिदमेव प्रथमं निरूपणीयं, यन्ममतासम्बन्धः शरीरादिष्वेवमहङ्कारसम्बन्धश्चैतन्ये, उभयमेव कल्पितमिति। अत

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

ममताध्यासो नाम धर्माध्यासः ; अहङ्काराध्यासो नाम धर्म्यध्यासः। ममताध्यासस्याकारो ममेदमिति ; अहङ्काराध्यासस्याकारोऽहमिति। ममता ह्यहङ्कारस्य धर्मः। अहङ्कारधर्म्मो ममता शरीरादिषु तदाध्यसितुं शक्येत यद्यहङ्कारे शरीरमध्यस्येत। शुक्तिधर्मस्त्विदन्त्वमिव शुक्तावध्यस्ते रजतेऽध्यस्यते। अहङ्कारे च शरीराध्यासो न भवति। तत्रैवाध्यासो भवति यत् किञ्चिद्रूपेण ज्ञातं किञ्चिद्रूपेण चाज्ञातं भवति, यथा रज्जुः सामान्यतो ज्ञायते विशेषतस्तु रज्जुत्वेन न ज्ञायत इति भवति सर्पस्याधिष्ठानम्। तच्चाज्ञानं चैतन्यस्यैवावरकं न तु जड़पदार्थस्य। अतो रज्जुर्न ज्ञायत इत्यस्यायमेवार्थो यद्रज्ज्वच्छिन्नं चैतन्यं न ज्ञायत इति। एवमहङ्कारोऽपि शरीरादीनामधिष्ठानन्तदा भवितुमर्हति, यदि स किञ्चिद्रूपेण ज्ञायते किञ्चिद्रूपेण न ज्ञायते च। जड़स्याहङ्कारस्याज्ञानेनावरणं पूर्वोक्तरीत्या न सम्भवति, ततः इदमवगन्तव्यं यदहङ्कारावच्छिन्नचैतन्यं शरीरस्याधिष्ठानमिति। अहङ्कारावच्छेदश्च चेतन्यस्याहङ्कारेणाभेदाध्यवसाय एव सम्भवति, तच्चेदमालोचनीयं समापतितं यच्चैतन्येऽहङ्काराध्यासः सम्भवति नवेति।

अध्यासे हि सर्व्वत्र त्रीणि कारणान्यपेक्षितानि—

(१) आरोप्याधिष्ठानयोर्भेदाग्रहः, (२) सादृश्यज्ञानम्, (३) सामान्यतोऽधिष्ठानज्ञानञ्चेति।

(१) अत्र चैतन्यं ज्ञानरूपमन्तःकरणं दृश्यजड़पदार्थः। अत उभयोः स्वरूपतो भिन्नत्वमेव वर्त्तते। अतो भेदाग्रहरूपप्रथमकारणासम्भवः।

(२) एवमन्तःकरणस्य चेतन्यस्य च तमःप्रकाशवद्विरुद्धस्वभावत्वान्न सादृश्यज्ञानसम्भवः।

(३) सामान्यतोऽधिष्ठानज्ञानरूपं तृतीयकारणन्त्वत्र न सम्भवत्येव। तदेवाधिष्ठानं यत् किञ्चिद्रूपेण ज्ञातं किञ्चिद्रूपेणाज्ञातञ्चेति पूर्वमुक्तम्। अत्र चाहङ्कारश्चैतन्यस्य नाधिष्ठानं भवति, यतोऽहङ्कारो नाज्ञानेनावृतो भवति जड़त्वात्। (क्रमशः)

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# शिवसन्तोषस्तोत्रम्

( पूर्व्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीश्यामादासवाचस्पतिः ]

कस्मादकारि विषमार्थकृदेष मोहः
किन्तेऽत्र संसृतिविधौ करणं न चान्यत् ।
तातोऽखिलस्य जगतोऽखिलशक्तिशाली
त्वञ्चेत् प्रजा नटयसीह निराश्रयास्ताः ॥ ११ ॥

मोहकृतान्धताया ईश्वरज्ञानप्रतिबन्धकत्वं प्राक् प्रतिपाद्य इदानीं सर्व्वशक्तिमतो भगवतो जगत्सर्ज्जने प्रजानामत्यनर्थकरमोहादन्यदुपकरणमविधाय तेनैव तथाविधजगत्सर्ज्जनमिति प्रजानां निराश्रयत्वं दर्शयति कस्मादिति। विषमार्थकृत् नित्यानित्यवस्त्वविवेकसम्पादकः एष मोहः अज्ञानं विपर्य्ययसंशयतर्कमानप्रमादभयशोकरूप इति यावत्। कस्मात् किमर्थम् अकारि व्यतानि त्वयेति शेषः। स्वप्रजानां स्वविषयकज्ञानप्रतिबन्धकीभूतमोहोत्पादनं त्वया न साधु कृतमिति भावः। मोहमन्तरेण सृष्टिरेव न सम्भवतीत्याह, किमिति।—अत्र संसृतिविधौ संसरणविधाने, भूतबन्धे इति यावत्। "भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्" इति जन्ममरणप्रबन्धे ( वै: उ: ६।२ )। अन्यत् अत्यनर्थकरमोहभिन्नं करणं साधकतमं तदिच्छादिरूपमिति यावत्, ते तव किं न च अस्ति ? अखिलशक्तिशालिनस्ते इच्छया कारणान्तरस्यापि तत्र सम्भवादिति भावः। ननु समर्थोऽपि कथं मोहमपास्यान्यत् कुर्व्वीय इत्यत आह, तात इति—त्वम् अखिलस्य जगतः तातः जनकः "अहं वीजप्रदः पिता" "पिताऽहमस्य जगतः" इति च भगवद्गीतायाम् ( १४अ: ४श्लो: )। "पिता नोऽसि पिता नो बोधि" इति श्रुत्यामपि श्रूयते ) जनकस्यात्मजं प्रति हितसाधनस्य सर्वत्र दृष्टत्वात् समर्थस्य जगत्पितुस्तवापि तदवश्यमेव विधेयमिति भावः। ननु मोहादन्यत् करणं विधातुं नैव समर्थ इत्यपि त्वया न वाच्यमित्याह अखिलेति।—अखिलशक्तिशाली सर्वशक्तिमान्, सर्वशक्तिमतो हि किमपि नासम्भाव्यमिति भावः। एतेनाल्पशक्तिनिबन्धनासामर्थ्यं पितृत्वेन स्नेहाभाववत्त्वञ्च खण्डितमिति सूचि-


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

तम्। लीलामयस्य तस्य एषैव लीलेत्याह, त्वमिति।—त्वं तथाविधः शक्तिमान् पितृभूतश्चेत्यर्थः, चेत् यदि, प्रजाः तनयान्, सर्वप्राणिनः इति यावत्, इह संसारक्लेशनाट्यशालायां, नटयसि नर्त्तयसि, तदा ताः प्रजाः निराश्रयाः गत्यन्तरहीना एव भवन्तीति शेषः ॥ ११ ॥

मोहाद्यदर्थितमहो निखिलं व्यधायि
न प्रार्थितं यदपि तत् स्वयमेव दत्तम्।
ईदृग्दयाजलनिधेस्तव पश्यतो नः
किं यातनां भवभवां सदयं न चेतः ॥ १२ ॥

मोहमुत्पादयतोऽपि दयाधारस्य भगवतः क्वचित् दयाधिक्यं क्वचित् तदभावमिव च पश्यामस्तत्किमिदमित्याह, मोहादिति—मोहात् अज्ञानात्, यत् वस्तु अर्थितं याचितं, तन्निखिलं समग्रं न तु यत्किञ्चित् इति भावः। व्यधायि विहितम्, कामिनीकाञ्चनादिकं सर्वं प्रार्थनानुरूपमेव दयावता त्वया विहितम् इत्यर्थः। यदपि ऋतुक्रमिकत्वबहुत्वादिकं न प्रार्थितं याचितं, भवदन्तिके अस्माभिरिति शेषः; तत् तदपि स्वयमेव आत्मनैव दत्तं अर्पितम्। अजानतोऽपि मम विजानता त्वया प्रयोजनानुरूपं सर्वथा विहितमित्यर्थः; प्रार्थितप्रदानापेक्षया अप्रार्थितार्पणं विस्मयकरमिति भावः। ईदृग्दयाजलनिधेः करुणार्णवस्य तव, नः अस्माकम्, भवभवां जन्ममरणादिजनितां, यातनां क्लेशं, पश्यतः भवतः चेतः किं कथं, सदयं दयापरवशं, न भवतीति शेषः। सम्प्रार्थितस्याप्रार्थितस्य च पूर्णतामापादयता भवता निखिलक्लेशमूलभवदुःखराहित्योपेक्षणं नैव युक्तमिति भावः ॥ १२ ॥

आदि स्वकर्मफलभुङ्मनुजस्य जन्म
केनेरितं प्रवहतीत्यपि सृष्टिरेषा।
स्वातन्त्र्यमत्रभवतो जगदीश कुत्र
लीलामय त्वमसि भोस्तव तत्त्ववेत्ता ॥ १३ ॥

प्राक् परमेश्वरस्य निर्दयत्वमाशङ्क्य अधुना सृष्टेरनादित्वेनादृष्टेनैव जन्तूनां सुखदुःखादिमत्त्वमिति भगवतः स्वातन्त्र्यं प्रति सन्देहाभावं दर्शयन् स्तौति, आदीति। हे जगदीश! स्वकर्मफलभुङ्मनुजस्य स्वस्य स्वकीयस्य इत्यर्थः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

कर्म्मणः पूर्वकृतस्य अदृष्टस्य इत्यर्थः फलं शुभाशुभरूपं भुङ्क्ते इति तथाविधस्य मनुजस्य अदृष्टस्यापि कारणान्तरत्वेनाङ्गीकारादिति भावः; आदि प्रथम, जन्म उत्पत्तिः केन तत् प्रेरितं, तत्र कर्म्माभावात् सृष्टिः कथं सम्भवेदत-स्त्वमेव सृष्टेः निदानं सुखदुःखयोर्विधाता च इति भावः। एषा सृष्टिः एवंरूपा प्राणिनामुत्पत्तिः प्रवहति चिरमेव प्रवर्त्तते, इत्यपि चेदेवमुच्यते इति शेषः। प्राणिनो हि जात्या अदृष्टम् अदृष्टेन च जातिरित्येवं क्रमेण अनादिकालात् बीजाङ्कुरन्यायेन प्रवर्त्तिते सर्ज्जनकर्म्मणि स्वकर्म्मवशादेव शुभाशुभफलमुप-भुञ्जते इत्यभिप्रायः; तथात्वे दोषमुद्भावयति स्वातन्त्र्यमिति। एवञ्चेत् अत्रभवतः श्रेष्ठस्य तव स्वातन्त्र्यं स्वाधीनता कुत्र नैव कुत्रापि इत्यर्थः। शास्त्र-वाक्यमत्र प्रतिहतमेवेति किन्तु भगवत्स्वातन्त्र्यमन्तरेण सृष्ट्यनुपपत्तेस्तत्-स्वातन्त्र्यमवश्यमङ्गीकार्य्यमिति भावः। शास्त्रप्रमाणेन स्वबुद्ध्या वा त्वत्-स्वरूपनिर्णयो नैव सम्भवतीत्याह लीलामय इति। हे लीलामय! हे निरङ्कुश! भोः शिव! तव तत्त्ववेत्ता याथार्थ्यविज्ञाता, त्वं कर्त्ता अकर्त्ता वा दयालुर्निर्दयो वा इत्यस्य स्वरूपनिर्णायको नान्य इत्यर्थः ॥ १३ ॥

—००—

# हर्षावसानं नाटकम्

[ निबन्धकः—श्रीकानाइलालपञ्चतीर्थः ]

## नान्दी

कुर्व्वाणा कालभेदं भुवनभरहरा लौकिकी शक्तिरेशी
जीवस्रोतो नयन्ती मिलनमपि गिरिस्थूलकर्म्मासभेदम् ।
रौद्राद्व्यावर्त्तयन्ती किमु कृषकवधूस्तप्तसंसारशस्यं
स्रष्ट्री चित्रावतारानपि निखिलकृपालक्षणा पातु युष्मान् ॥

अपि च

अवतु स वीऽग्रकवियः कर्त्तव्यमुपदिष्टवान् स्वजनेषु ।
अपहृत्य रामनाम्ना दास्यवपापाग्रहात्पापम् ॥

नान्द्यन्ते—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

सूत्रधारः। अलमप्रस्तुतनिर्भरेण, यावत् सदस्यान् सन्तोषयामः, तत्र नवीनकवेर्नाट्यं हर्षविलासं नामैतेषां समयानुसारितया हृद्यमित्यतस्तदेवाभिनेयम्, तथा च—

दोषज्ञै रसिकवरैर्हृताङ्गनोर्व्वरां
संलीना रहसि मनोगृहान्तराले।
यस्यास्ते नवकविताबधूः कदाचिद्-
दृश्या स्यात्कुतुकितया कृतावकाशा॥

सोऽयं नवीनकविरसवर्णस्वयंवरणाभिधानप्रहसनप्रणयनेन रसव्यञ्जने भाषारीतिमभिमतां विहितवान्, तथाहि—

सरस्वती स्वादसमीक्षिरीतौ भावप्रवाहो न तु सर्व्वदृश्यः।
अतः सकाशेऽर्हति सा प्रकाशं तटस्थसारस्वतसेवकानाम्॥

पारिपार्श्विकः। (प्रविश्य गायति)

"जन्म वृषभ! तव धन्यं स्वादसि जहदपि मलमतिपुण्यम्
परगृहवासे परतृणघासे न मनस्तव सुखशून्यम्।
न च परचर्च्चाघटदृषदर्च्चा कुरुषे कार्य्यमकामः
बन्धहरन्तव मरणं शरणं पिशितभुजां न तु रामः॥" '

(इत्युद्गिरति)

सूत्रधारः। अहो भावस्य भावप्रवणत्वं यत्सत्यमुत्तरकोशलाद् दशरथगृहे भुक्त्वा प्रत्यावर्त्तते तत् का गतिरहमपीत्थम्भूततां सम्पादयामि, (सृषा हिरुद्गीर्य्य) धिग् वयस्य! यदर्थं भूरिभोजनमद्यापि नागवायुध्वनिना परितो विकीर्य्येव चलसि तमेव गर्हयसि, तथा च—

यस्मिन् जाते रामनामामृताब्धौ साद्रिद्वीपाभून्निमग्ना धरित्री।
सर्व्वेषां नो मोक्षदायी सहायो रामः कस्मान्नेदृशो राक्षसानाम्॥

यदीयजन्मोत्सवं श्रुत्वा वयमपि तत्रैव यामः।

पारिपार्श्विकः। सखे! गृध्रगोमायवो मृतवृषभस्य मांसभोजनेनो-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

 Digitized by Arya Samaj Foundation Chennai and eGangotri 

पक्रियन्ते इत्यर्थकपूर्ववाक्यत: सन्दिहानमपि भवन्तं प्रश्नानुरोधेन किमप्युपदिशामि, मन्त्रप्रभावमनङ्गीकुर्वाणा देवयोनयो रामादीनां चरुभोजनफलेषु जन्मसु संशेरते, नास्तिकतया यज्ञविघाताय रात्रिन्दिवं प्रवर्त्तमानांश्चैतानुच्छादयितुश्चतुर्धा विभज्यात्मानमाविर्भूतवान् यज्ञभागेश्वरस्तस्य बाहवो वा मायया चतु:चत्त्रेशविग्रहा इत्यालपन्ति प्राञ्च: ।

सूत्रधार: । न्याय्य: स्वजन्मनि संशयालून् प्रति द्वेष: । बन्धो ! मया पुन: श्रुतं निकषाया राचस्या गर्भदुर्गमाश्रयिणो विदित्वा देवद्विषो भक्ष्यतया तेषां जिघांसासंस्कारमुत्तेजयितुं (छद्मना) शाखामृगवेषै: सुरा नारायणश्च मानववेषेण सञ्चरन्तीति ।

पारिपार्श्विक: । तदेते पूर्वविद्वेषवशगा: केशवस्य कुजन्मकदर्थनामहिम्न्यालीमिवोद्घाटयन्तु नैकषेया यज्ञभागापहत्वमादितेयानां दितिजेषु सपत्नतयैवातिप्रथितमिति को नो विवाद: ?

सूत्रधार: । तद्देहि—

नरकसदृशनारीगर्भवासेन खेदं
वहति क्रमिरिवारीन् हन्तुमेषोऽसपात्न: ।
इति नरकजितोऽपीशस्य माहात्म्यमग्नौ
सुखमिलितदृशावन्योन्यमालिङ्ग्य यावः ॥

( इत्युभावाश्लिष्येते )

पारिपार्श्विक: । तत्र खलु मित्र ! रामाभिरामे श्रीमदयोध्याछद्मनि वैकुण्ठधामनि—

ध्वनितललितघण्टातूर्य्यतालानुनृत्यात्
कलितबलिकरस्रग्वैष्णवीमुग्धगीतै: ।
हसितमधुरकेलौ मन्दिरौघे मुरारे-
स्त्रिभुवनशुभहेतू रामजन्मोत्सवोऽभूत् ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

अपरश्चात्र वयस्योत्सवानन्दहृतहृदयेनापि ग्रामीणजनदुर्लभं किञ्चिदवेक्ष्य प्रत्यावर्त्तनीयम् ।

सूत्रधारः । किं किम् ?

पारिपार्श्विकः ।

नृपतिरनुगताभिः संस्तुतोऽपि प्रजाभिः
किमिति मधुरवाचा लालयत्यात्मजान् सः ।
रघुकुलगृहहर्म्यश्रीरतो रामतातो
विहरति युवजायाभिः कथं वेति दृश्यम् ॥

सूत्रधारः । ( विहस्य ) तथा ।

इति निष्क्रान्तौ प्रस्तावनया ।

---

## प्रथमोऽङ्कः

दृश्यमयोध्याप्रासादे कौशल्यामन्दिरं प्रविष्टः ससख्या कौशल्यया बालराममुपलालयन्

दशरथः ।

रामो मे प्रिय आत्मनोऽपि दयिते यो यज्ञपुण्यार्जितः
यद्भुङ्क्ते सुधया सुखं सुरपतिर्वक्त्रेन्दुदृष्ट्यास्य तत् ।
किं प्रेम्णा हरिदालिदर्पणचये वक्षः पृथग्विम्बितः
का माधुर्य्यमयी नवीनजलदश्यामा तनूः के वयम् ॥

अपि च—यत्प्रेम त्वयि मे वधूव्रजरतस्याज्ञातपूर्वं स्थितं
श्रेष्ठाधारतया प्रवर्द्धितगुणं पुत्रेऽद्य तद्दृश्यते ।
वापीः श्लिष्यति याः करैः शशधरो यद् विम्बितश्चुम्बते
काचित्तासु मनोज्ञफुल्लकुमुदैस्त्वं नन्दयत्यात्मजैः ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

कौशल्या। (१) णाह ! ललिदकोमलविलक्खणसअलसोहग्गलक्खण-
सलीलं वच्छसुवलालेदुमहमहमिआए धाअन्तेसु वि महाहि-
अणपलिअणेसु णेणं खणं वि पलिजिहासेसि, केअलं अब्भअ-
मुहेन्दुमण्डलणिअद्धदिट्ठी हिदप्पत्तं विअ किं वि पिअमोलो
एसि, ण गणेसि सम्रज्जं सइसअसुहिदो वत्ति कुदो दे
एसो प्पमादो ?

दशरथः। अयि मुग्धे !

पश्यामि मुग्धचिरवाञ्छितवक्त्रचन्द्रे
तत् क्वापि दृष्टमिह यन्न पुरा कदाचित्।
आकर्षणीव सुषमा सुखपुञ्जपुष्पा-
ण्यानम्य चित्ततरुमस्य शिशोश्चिनोति ॥

अहो बलीयसी मे दीनता—

शैशवात् प्रभृति सत्कृतैर्मया श्रीप्रजासहचरादिभिः प्रियैः।
वीचितां कृपणतां सुतं विना मां जिहासुमपि सा जहाति न ॥

कौशल्या। (२) सच्चं एव्वं जीइदेस ! मइवि अस्सिं वालए हिअअं
किंदु संसेमि किं वि अणेण असमअहणा आमेण विअसस्स
संचअस्स मे अदिट्ठं णाहस्स अउसलं संवादस्सइ णवत्ति।

दशरथः। अयि भीरु ! मा मैवम्—

विकसदवयवानामात्मकर्मस्वशक्ते-
रधृतविषयतृष्णानिश्चलं बालचेतः।

(१) नाथ ! ललितकोमलविलक्षणसकलसौभाग्यलक्षणशरीरं वत्समुपलालयितुमह-
महमिकया धावत्स्वपि महाभिजनपरिजनेषु नैनं क्षणमपि परिजिहाससि केवलमर्भकमुखेन्दु-
मण्डलनिबद्धदृष्टिर्हृतप्राप्तमिव किमप्यवलोकयसि न गणयसि साम्राज्यं शैशवसुहृदो वेति
कुतस्तेऽयं प्रमादः ?

(२) सत्यमेवं जीवितेश ! ममाप्यस्मिन् बालके हृदयं किन्तु संशये किमप्यनेनासमय-
धनागमेनेव शस्यसञ्चयस्य मेऽदृष्टं नाथस्याकुशलं सम्पादयिष्यति नवेति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

अचकितमिह चेतोदर्पणं साक्षिचक्षु
हसितरुदितहेतू मुक्तवन्नास्य तत् स्तः ॥

एवमिदानीं—

एनं हरिष्यति हनिष्यति वेति मत्वा
संविश्वसिम्यनुचराय सुतं न दातुम् ।
अभ्यस्तनित्यक्ततिवर्त्मनि बंभ्रमीमि
त्यक्त्वा मणिं भुजगराज इव प्रियं मे ॥

कौशल्या। (१) कन्त ! मह वि एव्वं किंदु पड़िदिअहो वड्ढअमाणसुसमेसु सिदणिसाचएन्दुज्जुदीसुं लड्ढेसुं वि चदूसुं तणएसुमत्थदे अच्चादरं आलोइअ किं वि अच्चाहिदं आसंकइ णालोअणसुलहसंदेहाउलं मे हिअअं किमिमो अग्गजादेऽस्सिमहिअक्खिणिक्खेबप्पहाओ अहअं धमुणिणो सावप्पहाओत्ति ।

दशरथः। अहह !!

इह जनुषि न बुद्धा लोभितः सञ्चिताद्वा
श्रुतिहृदयविदारी दुष्कृतान्मृत्युकेतुः ।
स्थगितनयनतारं भीतभीतेन दृष्टः
प्रभवति यमदण्डो ब्राह्मणस्यापि रोषः ॥

अपि च—पादाहतिक्षुभितशेषशिरःसहस्रात्
पृथ्वीं निपात्य सहसेव विमूर्च्छयन्ती ।
उत्पाटितस्वयमुदञ्चितवेशदण्डे-
र्दिग्व्योमबन्धनहरा मुनिरोषमूर्त्तिः ॥

तमधुना पित्रोः पिपासोपशमनायोपसरोऽम्बुना घटमापूरितवन्तम्—

---

(१) कान्त ! ममाप्येवं किन्तु प्रतिदिवसोपचीयमानसुषमेषु सितनिशाचरेन्दुद्युतिषु लब्धेष्वपि चतुर्षु तनयेष्वत तेऽत्यादरमालोक्य किमप्यत्याहितमाशङ्कते नारीजनसुलभसन्देहाकुलं मे हृदयं किमयमग्रजातेऽस्मिन्नधिकाक्षिनिक्षेपप्रभावोऽथवान्धमुनेः शापप्रभाव इति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

हा तात ! मत्परभृते ! कथमस्त्वया मां
जन्मान्धयष्टिमिषुविद्धहृदं विदित्वा ।
प्राणिष्यति क्षणमपीत्थमुदस्तमुक्ता
प्रेतं स्मराम्यृषिसुतं स्खलितोदपात्रम् ॥

अपि च— संक्रन्द्य पाणितलताड़ितसव्रणोरः-
स्थानोच्चरत्पटपटारवकैतवेन ।
शोकेन हो मुनिशिशोर्व्यथितेव भाले
तद्भक्तचन्दनभृतावयवाभवद्भूः ॥

( इति मूर्च्छितः पतति )

कौशल्या । ( साक्रन्दं ) (४) हा णाह किं मए अअलुणाए आचलिदं अदीदवुत्तं सुमलावेन्तीए, ता सहि महुउल्ले ! समाणेहि तालबेण्टं भिंगालसम्भिदं सुलहिसलिलं अ विस्सवञ्छिद-जीइदं जोअणेसं बीजिदुं अहिसेइदुं अ सिलसि णअणेसुं बि सीअरेहिं !

मधुकुल्ला । (स्वगतं) (५) अम्महे आआलिअं सव्वं ज्जेव्व दूसहं (प्रकाशं) जहा आणवेदि भट्टिणी ( इति निष्क्रम्य पुनः प्रविश्य यथोक्त-माचरति ) ।

दशरथः । ( उत्स्वप्नायमानः )
संलग्नहारमुकुटाङ्गदकुण्डलाङ्गो
भासा स्वया द्युमणिमण्डलसंवृताभः ।
पार्श्वे स्थितो नयनयोर्मम कोऽसि देवो
दूरस्थितोऽपि सवितेव सुदर्शदेहः ॥

---

(४) हा नाथ ! किं मया अकरुणयाचरितमतीतवृत्तं स्मारयन्त्या, तत्सखि मधुकुल्ले ! समानय तालवृन्तं भृङ्गारसम्भृतं सुरभिसलिलञ्च विश्ववाञ्छितजीवितं जीवनेशं वीजयितुमभि-षेचयितुञ्च शिरसि नयनयोरपि शीकरैः ।

(५) अहो आकालिकं सर्व्वमेव दुःसहम् । यथाज्ञापयति भर्त्री ।


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

पद्मा स्थिता वपुषि ते किमिदन्तु विश्वं
त्वन्नाभिजन्मनलिनोद्भवबीजमग्नम् ।
तस्मान्न दर्शनपदं वहसीति चित्रं
पद्मालयेष्टकमलाकरमर्त्यधामन् ! ॥

(आकाशे) किमुरसि तव हेमाङ्गात्थ तातेति किं मां
द्विजपदयुगलक्ष्मेत्यात्थ यो मे शरव्यः ।
द्विज इह भृगुनामेत्यात्थ किं प्रादुरासी-
र्नृयुगलभुज ! मत्तो दातुमेनः फलं मे ॥

कौशल्या । (६) बहिम्मुही कावि अलोअन्तस्सा कन्तस्स दिट्ठिआ
अचिलहादूणीं बहीवुत्तिं सूएदि ।

( नेपथ्ये गायति ) वैतालिकः ।

हे दशरथसुत ! तारय भारतमरिकुलविदलितभव्यं
सुरभिविनाशन विगतसुरार्पण शिशुजनतर्पणहव्यम् ।
प्रतियुगमाहवयोनिसमुद्भवमाप्तवानसि दुःखं
पातकिदुर्वहमर्पय सुत इह कुवलयनयन ! कटाक्षम् ॥
धृतहुतिभाजन-पुण्यतपोवन-धरणी राक्षसकीर्णा
सचकितमुनिजनधावनमूर्च्छनपतना करुणापूर्णा ।
अहितविनाशन ! भवदहितेक्षणशङ्कितजनकविमोहं
शमय दयामय ! सोऽहमितीक्षय जीवं मायिकदेहम् ॥

दशरथः । ( ईषल्लब्धसंज्ञश्चक्षुषी उन्मीलयति )

नेपथ्ये—विस्पष्टज्ञानभाषाविनिमयविलसद्दीर्घलाङ्गूललम्फो
धात्रा सृष्टोज्झितो वा कृतिविषमनरो वस्तुवैकल्यहेतोः ।
गोलव्यात्तास्यरन्ध्रोत्कटखरदशनैर्भाययन् बालयोषा
भ्राम्यत्युत्प्लुत्य सौधच्छदिषु चपलदृक्त्यक्तगोत्रः खवृत्तेः ॥

(६) बहिर्मुखी काप्यलोकान्तःसंज्ञा कान्तस्य दिष्ट्या चिरभाविनीं बहिर्वृत्तिं सूचयति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

दशरथः। भोः क्वेदानीमहम् ?

पुनर्नेपथ्ये—हा हा पोतं हरति तरसाङ्के दधत्कोऽपि कोशस्
सौधात् सौधान्तरमुपनयन् वेद्मि मत्त्वा स्वडिम्भम्।
आक्रन्दिष्यद्यदि नृपसुतस्तत्त्ववेत्तामुना स्या-
स्थूणां चोदानिष्टकचितधरापातितस्याधरिष्यत् ॥

(कौशल्या सखी च सहर्षविषादं मिथो वदने अवेक्षेते)

दशरथः। (आकर्ण्य) आम् अहमेवैषां राजा इदन्तु ममैव देव्याः कौशलराजसुताया निवासभवनमिति तत्कोऽयं शान्ति-निकेतनसन्निकृष्टो विलापकोलाहलः, (उत्थातुमुपक्रम्य) राज्ञि! किं रामो मे व्यापाद्यते ?

मधुकुल्ला। (७) णोव्विइदव्वं सव्वहमोसलेण जमचिलसंगदं संविदं पुणोवि अवहत्तमलं होदिज्जेव आहित्तेअणा।

कञ्चुकी। (ससम्भ्रमं प्रविश्य) विजयतां महाराजः।

दशरथः। भद्र! को वृत्तान्तः ?

कञ्चुकी। देव! श्रूयताम्।

भवन्मध्यजायागृहादागतायाः शिशुः सव्यहस्तेऽन्यतो यष्टिरास्ते।
मृषा वाचि यस्या कृषा सोल्वनास्या त्रिपादाद्यमूर्त्तिः कलेर्मन्थरति ॥

दशरथः। (ससम्भ्रमं) कथं कैकेयोपरिचारिका मन्थरैव एवाभि-वर्त्तते तत् सत्वरमुपसर्प भद्र! पुत्रसहितामेनां सम्भावयितुम्।

कञ्चुकी। तिरस्कृत्त्य कामामिमां ज्येष्ठवामा-
सुतं लालयन्तं द्रवन्तीं भवन्तम्।
पराभूय वासोद्गमाश्रित्य कोशो
हरत्यङ्कतोऽस्याः सुतन्ते नरेश! ॥

---

(७) नोद्विजितव्यं सर्व्वभूमीश्वरेण यदचिरसङ्गतां संविदं पुनरप्यपाहर्त्तुमलं भवत्येवा-धिकोत्तेजना।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

 Digitized by Arya Samaj Foundation Chennai and eGangotri 

मधुकुल्ला। (८) सा दाणिं अह्माणं तिहुअणाणन्दणन्दस्सव्भसूअन्ती खुज्जा मन्थला णाम कहं ?

कञ्चुकी। सोरस्ताड़मुदग्रधूलिधवलांम्छित्त्वा किरन्तो कचान्
खे वर्षोन्नतकीटभां वितनुते पुच्छं विना मन्थरा।
दण्डं भूषणमश्म लोष्ट्रनिवहं हन्तुं प्लवङ्गं प्रति
चिप्ता तैः कपिना धृतैरभिहता रक्तोच्चिता मूर्च्छिता॥

दशरथः। अहो अत्यारूढ़ा खलु मर्कटस्याविमृष्यकारिता, तदधुना भद्र! मन्नियोगादादिश सौधाध्यत्तं सौम्यद्युतिम्।

कञ्चुकी। आदिश्यतां स्वामिन्!

दशरथः। द्वौ द्वौ चतुःकरधृतैर्वसनैरखण्डैः
सौधान्तराध्वसु शिशुं पतनाद्दधाताम्।
अन्ये बलीकनिचयाङ्गनभूषु कोशं
दण्डासिकार्म्मुकधराः परिवारयन्तु॥

अपि च—यदीन्दुशालापटलेऽर्कतप्ते निधाय कण्ठेऽङ्कुरकोमले वा।
जिघांसतीमं परिपिष्य दुष्टः पाशेन नोऽवध्यमिमं वधान॥

कञ्चुकी। तथा। (इति निष्क्रम्य रक्षिपुरुषवृतं वानरमादाय प्रविश्य च)

भूपालनन्दनपटच्चरमर्कटोऽयं वेत्रेण बाल इव नाग इवाङ्कुशेन।
बद्धायसेन निगड़ेन दृढं विनीतः प्रह्वत्वहेतुरिह लोलधियान्तु दण्डः॥

वानरः। अब्रह्मण्यमब्रह्मण्यं स्वामिन् शरणागतोऽस्मि।

दशरथः (सास्रव्यं वानरमुखं निरीक्ष्य)

हर्त्तुं चौरार्भकमतनयः प्रेरिरत् पालकः किं
व्यक्तामध्यापिपदपि गिरं पश्य नृत्येन यस्त्वाम्।
शप्तोऽसि त्वं प्लवग! दिविषत् कोऽपि वा कामरूपो
हेतुर्वाच्योऽपहरणविधेरस्य यो मर्षणीयः॥

---

(८) सेदानीमस्माकं त्रिभुवनानन्दनायाभ्यसूयन्ती कुब्जा मन्थरा नाम कथम्?

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

वानरः। ( लब्धावसरः स्तौति )

जय जय राजन्नचिन्त्यमहिमन्नुत्तरकोशलपाल !
दिशि दिशि कीर्त्तिर्भवतो भ्रमति प्रणतिपराहितजाल ! ।
उटजे चेत्रे विपिने गोत्रे तावकसौभगगीति-
रपि हृतपुत्रकमिह रमयति न कमीदृगवनिपतिनीतिः ॥

तदवधार्य्यतां सर्व्वावनीपते ! यदर्थमहमप्रियङ्करो भवतां संवृत्तः ।

सर्व्वे। ( सविस्मयं ) कथ्यतां कथ्यताम् ।

वानरः। सुग्रीवो मां कपिपरिवृढः पर्व्वतादृष्यमूकात्
स्निग्धच्छायैः फलभरनतैः पादपैर्नोऽतिहृद्यात् ।
पम्पावातत्रिगुणसुभगात् प्रैषयद्दर्त्तुमेनं
रामे स्वस्मादृरतमधिकं भाविभक्तं विदित्वा ॥

भवद्भृत्यैस्तु महाराज ! तत्र प्रयासोऽवगतपूर्व्वो विफलीकृत-स्तदिदानीम् ।

अवयवसुषमा नवीनदूर्व्वावनचरमोचकलोलटङ्कगाङ्कम् ।
परिवृतमवदातदिव्यभासा क्षितिचरमोचय भूप ! रामचन्द्रम् ॥

यं विलोक्य न कोऽपि विफलकामो भवति ।

दशरथः। अहो विभूतिर्वत्सस्य निकषोपलोपमजलदजालाहत-तड़िल्लताग्निशिखेव युगपदेव मनांसि मूर्च्छयन्ती परितः प्रसृता तदवलोकय प्लवङ्गपुङ्गव ! भवतां भजनीयं रामभद्रम् । ( इति वानरं स्वयमेव मुक्तपाशं कृत्वा रामभद्रं शयानं विलोकयति )।

वानरः। ( नितरां भक्त्या विलोक्य )

तमभिलषितवश्यं संसरद्विश्वमेतत्
किमुकरचलचक्रारोपितं भ्रामयन्तम् ।
नियतकृतिमचिन्त्यैश्वर्य्यमप्यस्मदर्थं
परिजनपरतन्त्रं बालरामं नमामि ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

अशनवसनशय्यास्नानदानादिकर्म-
स्वपि य इतरतन्त्रत्वेन यन्त्रायमाणः ।
नयनकुवलये द्वे भाविभूतप्रभाव-
द्युमणिमिलनसौख्यं मुद्रिते ध्यायतोऽस्य ॥

अपि च—आश्रित्योर्ध्वं विलम्बिकृत्रिमखगां दोलां रणत्किङ्किणीं
निद्राणं हरिलोकताजितचतुर्हस्ताभपाशैर्धृताम् ।
भ्रश्यन्तं किमुतानुगद्विजनुतं व्योम्ना स्वधाम्ना समं
मृत्स्नासत्यसिताच्छहाटकमयाङ्गं बालविष्णुं भजे ॥

(इति स्तुत्वा बालकमाघ्राणचुम्बनगात्रावमर्षणादिभिरुप-
लालयन्निष्क्रान्तः)

दशरथः । लोलं द्वितीयतनयापजिह्वीर्षया मे
चेतो हरिः स्थगितवान् स्फुटसत्यवाचा ।
भाविप्रभावकथयास्य वियोगशङ्का-
शल्यं निरस्य सममाद्रियताग्रसूनुम् ॥

(विचिन्त्य) धिगद्भुतप्लवङ्गसंवादेन स्मृतिपथमतिक्रान्तः
क्वेदानीं स मे नवीनजलधरश्यामो रामाभिरामो मध्यम-
स्तनयः ?

कञ्चुकी । स किलायुष्मान् मन्थरया मातृगृहं नीतः ।

दशरथः । तत् प्रियङ्कर ! मन्नियोगात् सविनयमावेदय मदन्ववाय-
भूषणं पुरोधसं वशिष्ठदेवं तनययोः कपीन्द्रसत्कारासत्कार-
सूचितं दैवमन्यथा कर्त्तुं किमपि तदनुमतं स्वस्त्ययनमाचर-
णीयम् । अहमप्यनुष्ठितप्रातःकृत्यो देवोपासनायालं भवि-
तास्मि । (इति निष्क्रान्तोऽन्यैः)

## गतः प्रथमोऽङ्कः

—००—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# विविदिषा

( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः ]

यस्मिन्निक्ष्वाकूणां महति कुले भगवान् रामचन्द्रो जन्मपरिग्रहं चक्रे भगवान् बुद्धोऽपि तमेव महान्तं वंशं स्वजन्मनालञ्चक्र इति पुराविदः प्रचक्षते। तस्मिन् जातमात्र एव इन्द्रादयो देवाः स्वर्गादागत्य महोत्सवमग्नाः नानाविधवन्दनादिभिस्तमुपातिष्ठन्त, देवमन्दिरं प्रवेशिते नवकुमारे सर्वाः कुलदेवताः शिववरुणादयः साष्टाङ्गपातं प्रणम्य धूल्यवलुण्ठितकायाः जगदुद्धरणक्षमं तमेव तुष्टुवुः। कौमारे एव भगवान् सर्वासामेव विद्यानां पारं जगाम, तथा च तदधीतानां परःशतानां विद्यानां मध्ये "निगमपुराणेतिहासवेदव्याकरणनिरुक्तशिक्षाच्छन्दोयज्ञकल्पज्योतिषसांख्ययोगक्रियाकल्पवैशेषिकार्थविद्यावार्हस्पत्य" प्रभृतीनामपि नामान्युल्लिखितानि दृश्यन्ते। (ललितविस्तर १२अ० ) पित्रा विविधभोगोपचारपरिपालितः स कदाचित् सारथिना सार्द्धं स्वनगरं परिक्रामन् पथि जराक्लिष्टं रोगपीड़ितं पञ्चत्वगतं च नरत्रयं दृष्ट्वा सर्व्वं सुखमनित्यमिति कृत्वा—

धिग् यौवनेन जरया समभिद्रुतेन
आरोग्य धिग् विविधव्याधिपराहतेन।
धिग् जीवितेन पुरुषो न चिरस्थितेन
धिक् पण्डितस्य पुरुषस्य रतिप्रसङ्गः॥ ( ल,वि, १४अ)

इत्यादिभिरनेकाभिर्गाथाभिः यौवनादीनि सुखानि गर्हयितुमारेभे। ततश्च प्रशस्तविग्रहं कमपि सन्यासिनं दृष्ट्वा स्वयमपि प्रव्रज्यां ग्रहीतुं मनश्चक्रे। प्रव्रज्यया भुवनहितं कर्त्तुं शक्यामीति तस्य प्रव्रज्यायां दृढ़ाभिलाषोऽजायत। तथा च—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

साधु सुभाषितमिदं मम रोचते च
प्रव्रज्य नाम विदुभिः सततं प्रशस्ता ;
हितमात्मनश्च परसत्त्वहितश्च यत्र
सुखजीवितं सुमधुरममृतं फलञ्च ॥ ( ल, वि, १४अ )

इति ललितविस्तरकृता भगवद्बुद्धस्यैवाशयः प्रकाशितः। परिक्रमणं समाप्य गृहप्रत्यागतो भगवान् सर्व्वेषामेव प्राणिनां दुःखानि संस्मरन् कथं सर्व्वेषां दुःखोच्छेदो भवतीति परमकरुणाविगलित-हृदयः परं निर्व्वेदमाप। पित्रा च शुद्धदता तद्विज्ञाय पुत्रं समीपे आहूय—

किं याचसे मम वरं वद सर्व्वदास्ये
अमु गृह्ण राजकुल माञ्च इदञ्च राष्ट्रम् ॥ (ल,वि,१४अ)

एवं वचसा वरमभिमतं दित्साञ्चक्रे, पुत्रश्च—

इच्छामि देव ! जरमह्य न आक्रमेया
शुभ्रवर्णं यौवनस्थितो भवि नित्यकालम्।
आरोग्यप्राप्तु भविनो च भवेत व्याधि-
रमितायुषश्च भवि नो च भवेत मृत्युः ॥ (ल,वि, १५अ)

इत्यादीन् चतुरो वरान् प्रव्रज्यानुज्ञां वा प्रार्थयामास। राजा तु—

अस्थान याचसि कुमार ! न मेऽत्र शक्तिः
जरव्याधिमृत्युभयतश्च विपत्तितश्च
कल्पस्थितीय ऋषयो हि न जातु मुक्ताः ॥ (ल,वि, १५अ)

इत्युक्त्वा कुमारं मुमोच।

अनुमोदनो हितकरा जगति प्रमोक्षम्
अभिप्राय तुभ्य परिपूर्य्यतु यन्मतस्ते ॥ (ल,वि,१५अ)

हे पुत्रक ! जगतो मोक्षमेव चेत् कामयसे तर्हि ते वासना परिपूर्णा भवतु इत्युक्त्वा नरपतिः स विससर्ज, परं यथा कुमारः पुरात् वहिर्गन्तुं न प्रभवेत् उपायशतैः तादृशं रक्षाविधानञ्चकार। अथ

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

यदा निशायां अन्तःपुरस्थिताः कुमारप्रलोभनाय नियोजिता रूपयौवनशालिन्यस्त्रिभुवनमनोमोहननिपुणाः शतशोऽङ्गनाः नृत्यगीतपरिचर्य्यया परिश्रान्ता निद्रावशं जग्मुः, भगवान् चन्द्रमाः पुष्यया विहर्त्तुमारेभे, तदा ब्रह्मेन्द्रवरुणादयो देवा भगवतो महाभिनिष्क्रमणं द्रष्टुमुत्सुकाः कपिलवस्तुनगरमासाद्य भगवदध्युषितप्रासादस्य दृढतरबद्धान्यपि द्वाराणि निरर्गलानि कृत्वा "त्रिविधतापसन्तप्तं" जगत् भगवतः सकलतापसंशमनकरुणावारिवर्षणं प्रतीक्षमाणमास्ते देवा अपि तदर्थं व्यग्राः समवतिष्ठन्ते इति तात्पर्य्यकं सङ्गीतकं वायुमण्डलमारुह्य कर्त्तुमारेभिरे। परं निर्व्वेदमापन्नो गृहीतजगदुद्धरणव्रतो भगवानपि तादृशीनां युवजनलोचनचन्द्रिकाणामपि निद्रागतरमणीनाम् अरमणीयान् विकृतवस्त्रान् भ्रष्टस्नातलुञ्छिताभरणान् विकृतास्यान् देहान् नमितोन्नमितभुग्नविवर्त्तितशब्दायमानसप्रलापसक्लेदमुखानि विकृतकरचरणनयनानि च दृष्ट्वा जगतः आपातरमणीयत्वं धिक्कुर्वन् "अशुचिसमुत्थितमशुचिसम्भवमशुचिस्रवन्नित्यम्" कायं जुगुप्समानः आदेवस्तम्बपर्य्यन्तस्य जगतः सकलक्लेशापहरणकामः धृतत्रिलोककल्याणव्रतः छन्दकाभिधेयसारथिसहायः निद्रागतां भार्य्यां सुप्तं शिशुतनयञ्च समुत्सृज्य कण्टकनामानमश्वमारुह्य भवनात्—

"नाहं प्रवेक्ष्ये कपिलस्य पुरं अप्रापजातिमरणान्तकरम् ॥
स्थानासनं शयनचङ्क्रमणं न करिष्येहं कपिलवस्तु मुखम्।
यावन्न लब्धं वरबोधि मया अजरामरं पदवरं ह्यमृतम् ॥"

( ल, वि, १५ अ )

इत्युच्चार्य्य निश्चक्राम। अथानुवैनेयनामकं ग्राममासाद्य भगवतो रात्रिः प्रभाता अजायत, तत्र छन्दकमापृच्छ्य गृहीतचीवरो भगवान् चतुर्थाश्रमं स्वीचक्रे। मध्यन्दिनेऽनेहसि शाकियेति ख्यातायाः कस्याश्चित् ब्राह्मणभार्य्यायाः गृहे भगवान् प्रथमां भिक्षां जग्राह,


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तत्परदिवसे च पद्माभिधेयायाः कस्याश्चिद्‌गृहे माध्याह्निकं सम्पाद्य महर्षेः रैवतस्याश्रमपदं ययौ। तत्परदिवसे च त्रिमदत्तिरिति कस्यचित् राजपुत्रस्य गृहे भिक्षां गृहीत्वा महानगरीं वैशालीं प्राप। तत्र आराड़कालामनाम्नः कस्यचित् सकाशात् स्वेच्छाविहारसिद्धिमधिगम्य राजगृहमागत्य तत्रत्यपाण्डवशैलस्य पार्श्वदेशमाशिश्राय। तत्रैव नरपतिः विम्बिसारः स्वयं भगवत्पादमूलमागत्य तस्मै सर्वं राज्यं दातुमैच्छत्, सोऽपि—

कामं विषसमा अनन्तदोषा नरके प्रपातन प्रेततिर्य्यकयोनी।
विदुभिर्विगर्हिता चाप्यनार्य्यकामाः जहित मया यथ पक्वखेटपिण्डम्॥
(ल, वि, १६अ)

"कामः विद्वद्भिर्विगर्हितः अतएव मया दुष्टपशुमांसमिव कामः परित्यक्तः"। अपि च

लवणजल यथा हि नर पित्वा
भूय तृषु वर्द्धति काम सेवमाने॥
अहमपि विपुलान् विजह्य कामान्
तथापि च इस्त्रि सहस्रान् दर्शनीयान्।
अनभिरणभयेषु निर्गतो ह्यहं
परमशिवा वरबोधि प्राप्तुकामः॥ (ल, वि, १६अ)

एवमभिधाय विम्बिसारं निवर्त्तयामास। अथ भगवति राजगृहे वसति तं देशं रुद्रकनामा कश्चित् ऋषिरनुप्राप। स रुद्रकमुपसङ्गम्यापृच्छत् "कस्ते मार्षशास्ता कस्य वा धर्म्मं देशितमाजानासि?" "इत्येवमुक्ते रुद्रको रामपुत्रो बोधिसत्त्वमेवमाह" न मे मार्ष कश्चिच्छास्ता, अपि तु खलु पुनः स्वयमेव मयेदं सम्यगधिगतम्। बोधिसत्त्व आह,—किं भवताधिगतम्? स आह, नैव संज्ञानासंज्ञायतनसमापत्तेर्मार्गः" बोधिसत्त्व आह,—वयं लभेमहि भवतः सकाशादववादानुशासनीयस्य समाधेर्मार्गम्" (ल, वि, १७अ) ततः भगवान्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

रुद्रकात् समाधिद्वयोमधिगम्य यदापश्यत् यत् सः अन्यत् किमपि न जानाति तदा तं परित्यज्य भरतबिल्वग्रामसमीपे नैरञ्जनानदीतीरम् प्राप। तत्र सर्व्वेषां कष्टतापसानां कष्टानि निष्फलताञ्च मनसि समालोचयन् स्वयं येन खलु मार्गेण सर्व्वदुःखात्यन्तनाशो भवति तदाविष्कर्त्तुं तस्मिन् एव मनोरमे स्थाने तपस्यार्थमुपविवेश। षड्वर्षाणि च तत्र तपस्तेपे, सम्यक् शरीरनिग्रहमास्फानकयोगाभ्यासञ्च चकार। तत्र तं कामः ( मारः ) प्रलोभयितुम् प्रयेते परं भगवान्—

प्रमत्तबन्धो पापीयां स्वेनार्थेन त्वमागतः।
अनुमात्रं हि मे पुण्यैरर्थो मार! न विद्यते॥
अर्थो येषान्तु पुण्येन तानेवं वक्तुमर्हसि॥

एवमभिधाय मारं व्यताड़यत्। अथ शरीरनिग्रहेणास्फानकेन च सिद्धिमनागतां वीक्ष्य भगवान् चिन्तयामास "निर्बीजसमाधौ विहर्त्तव्यमिति" परं शरीरनिग्रहेण नितरां दुर्बलत्वात् तदाचरणाशक्तः उदरपूरं मुद्गयूषं पपौ कुल्माषोदनञ्च अभुङ्क्त। ततः स परिधेयवस्त्रं विगलितं वीक्ष्य किञ्चित् शववस्त्रं समाहृत्य स्नात्वा पीत्वा भुक्त्वा च गयशीर्षं जगाम। गयायां कस्माच्चित् यावसिकात् तृणमुष्टिं भिक्षास्वरूपेणादाय तेन तृणेनासनं निर्माय बोधितरुतलमासाद्य तत्रासनमास्तीर्य्य च तस्मिन् आसने उपविश्य प्रत्यजानीत—

"इहासने शुष्यतु मे शरीरं त्वगस्थिमांसं प्रलयञ्च यातु।
अप्राप्य बोधिं बहुकल्पदुर्लभां नैवासनात् कायमितश्चलिष्यते॥"
( ल, वि, १९अ )

अत्र मारः सपरिवारः भगवन्तमभिषेणयामास, भगवता पराभूतश्च पलायामास। अथ स भगवान्—

सवितर्कं सविचारं विवेकजं प्रीतिसुखं
प्रथमं ध्यानमुपसम्पद्य विहरति स्म। ( ल, वि, २२अ )

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

ततश्च, सवितर्कसविचाराणां व्युपशमादध्यात्मसम्प्रसादात्
चेतस एकोति भावात् अवितर्कमविचारं समाधिजं
प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्य विहरति स्म ॥
( ल, वि, २२अ )

ततश्च "स उपेक्षकः स्मृतिमान् सुखविहारी निष्प्रतीकं तृतीयं ध्यानमुपसम्पद्य विहरति स्म। स सुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तंगमाद्दुःखासुखमुपेक्षा स्मृतिविशुद्धं चतुर्थध्यानमुपसम्पद्य विहरति स्म।" ( ल, वि, २२अ ) निशायाः प्रथमयामे तस्य दिव्यज्योतिः प्रचकाशे, मध्यमयामे स आत्मनः निखिलजीवानाञ्च पूर्वजन्मवृत्तान्तं ज्ञातुं शशाक। पश्चिमे यामे नन्दीमुख्यां रात्रौ तु तस्य दिव्यज्ञानं समुदियाय एवं स चतुर्थध्यानेन जगतः दुःखानां मूलं दुःखात्यन्तविनाशोपायञ्च विवेद। चतुर्थध्यानेन स जातिभवोपादानतृष्णावेदनास्पर्शषड़ायतननामरूपविज्ञानसंस्काराविद्यानां ज्ञानं लेभे तेषां प्रहाणोपायञ्च साक्षाच्चक्रे। एवं जरामरणविघातिभिषग्वरस्य सम्यक् सम्बोधिः प्रादुर्बभूव, अपि च तदा शुद्धावासकायिकाभास्वरसुब्रह्मादिदेवाः आकाशात् पुष्पाणि ववर्षुः गाथाश्च जगुः। (क्रमशः)

---

## सन्ध्या

( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीरामकृष्णचक्रवर्त्ती, बि. ए. ]

(२) प्राणायामः—प्राणोपपदात् आङ्पूर्व्वात् यमधातोर्घञि कृते अस्य निष्पत्तिः। "श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" इति योगसूत्रम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
इति योगियाज्ञवल्क्यादौ ।

प्राणायामांश्चरेत्त्रींस्तु यथाकालमतन्द्रितः ।
अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ॥ इत्यत्रिः ।

तत्र नियमः—बद्धासनं नियम्यासून् स्मृत्वा ऋष्यादिकं तथा ।
संनिमीलितदृङ्मौनी प्राणायामं समाचरेत् ॥(बृहस्पतिः)
(समुन्मीलित इति पाठान्तरम् ।)

तत्र प्राणायामावसरे ध्यानं कर्त्तव्यं न वेति ? तदाह व्यासः—
आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत् ।
ब्रह्माणं केशवं शम्भुं ध्यायेद्देवाननुक्रमात् ॥

इति ध्यानं तु न अवश्यकर्त्तव्यमिति गम्यते आह्निकतत्त्ववचनात् तत्रोक्तम्—"ब्रह्माणं केशवं शम्भुं ध्यायन्मुच्येत बन्धनादिति बृहस्पति-विष्णुधर्म्मोत्तरवचनात् ध्यानं काम्यमित्याहुः" ।

तत्र पूरककुम्भकरेचकभेदानाह योगियाज्ञवल्क्यः—
पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः ।
नासिकाकृष्ट उच्छ्वासो ध्मातुः पूरक उच्यते ।
( ध्मातः इति पाठान्तरम् )
कुम्भको निश्चलश्वासो मुच्यमानश्च रेचकः ॥ इति ।

रेचकादिलक्षणमाह बृहस्पतिः—
"रेचको विसृजेद्वायुं पूरकस्तन्निरोधकः ।
समेन संस्थितो यस्तु कुम्भकः समुदीर्य्यते ॥
ऊर्द्ध्वं नासिकयाकृष्टः श्वासः पूरक उच्यते ।
कुम्भको निश्चलश्वासो रेच्यमानस्तु रेचकः ॥

तत्फलमाह वशिष्ठः—
निरोधाज्जायते वायुर्वायोरग्निः प्रजायते ।
अग्नेरापो व्यजायन्त तैरन्तः शुध्यते त्रिभिः ॥ इति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

तस्य सकलकलुषनिवृत्तिः फलमित्याह मनुः—

दशप्रणवसंयुक्ताः प्राणायामास्तु षोड़श ।
अपि भ्रूणहणं मासात् पुनन्त्यहरहः कृताः ॥ इति

विज्ञानेश्वरे च—

प्राणायामशतं कार्य्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥

तत्र प्राणायामे प्रणवगतासु सप्तसु व्याहृतिषु गायत्र्याश्च प्रत्येकमादौ, गायत्रीशिरसि तु आदावन्ते च ॐकारः प्रयोज्यः। यथाह योगियाज्ञवल्क्यः—

भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च ।
सप्त चौंकारसंयुक्तास्तथा तत्सवितुः पदम् ॥
ॐ आपोज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत् ।
त्रिरावर्त्तनयोगात्तु प्राणायामः स शब्दितः ॥

तथा चोक्तं खण्डराजदीक्षितविरचितायां बह्वृचसन्ध्यामन्त्रार्थदीपिकायाम्—

"सप्तव्याहृतिषु प्रोक्तः प्रणवोऽयं पुनः पुनः ।
सप्तानामपि लोकानां वक्ति ब्रह्मस्वरूपताम् ॥
उपलक्षणतः सप्तपातालानां तथैव च ।
सर्वलोकस्थजीवानां वक्ति ब्रह्मस्वरूपताम् ॥

ननु पूरकरेचककुम्भकात्मकं प्राणायामं प्रतिसन्ध्यं त्रिः कुर्य्यान्नवेति ? उक्तन्तु स्मृतिरत्नाकरे—

प्राणायामत्रयं कृत्वा सन्ध्योपासनमाचरेत् ।
स्नाने दाने जपे होमे अशक्तावेकमेव वा ॥

व्यासश्चाह—आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत् ॥ इति आभ्यां तु प्रतिसन्ध्यमेव त्रिः प्राणायामं कुर्य्यादिति स्पष्टम्। किन्तु उक्तं लोकोपकारे—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


बल्लालानन्तरमेव लक्ष्मणसेनेन देववाण्या अनुशीलनसौकर्य्यार्थं कालोपयोगिव्याकरणप्रणयनाय तत्रत्यो बौद्धः पुरुषोत्तम एवाध्येषितः, स बौद्धवैयाकरणः काशिकाभागवृत्त्योः सिद्धान्तान् सङ्कलय्य अष्टाध्यायीभाषावृत्तिं प्रणिनाय। अत्युपादेयः ग्रन्थोऽयम् उत्तरवङ्गेष्वत्यादृत आसीत्, ध्रुवन्तदा माध्यमिकादिबौद्धवादाः सुप्रसिद्धा एवासन्। अत एव "आङः स्थः प्रतिज्ञाने" इति वार्त्तिकसूत्रे "वस्तुक्षणिकमातिष्ठन्ते बौद्धा" इति ग्रन्थकृदुदाहरणमुपपद्यते।

पण्डितप्रतिपालकोऽयं सर्व्वविद्योत्साही महाराजलक्ष्मणसेनदेवो जातिधर्म्मनिर्व्विशेषेण बुधान् सम्भावितवान्, तस्य राज्ञः सभासदो बौद्धा ब्राह्मणाश्च आसन्नित्यग्रे दर्शयिष्यते। गोवर्द्धनेन आर्य्यासप्तशत्याम् एवमुपस्तुतः काव्यकलामर्म्मज्ञः स लक्ष्मणदेवः।

सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च।
सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥

तस्य राज्ञः पञ्चरत्नानि प्रसिद्धान्येव तेषामन्यतमो गीतगोविन्दकविर्जयदेवः। स चाधिपञ्चरत्नं स्वाशयमेवं प्रकटितवान्—

वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुते।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्य्यगोवर्द्धन-
स्पर्द्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ॥

तेषु वैयाकरणः शरणदेवो बौद्धोपासक आसीत्। तेन च—"शाकमहीपतिवत्सरमाने एकनभोनवपञ्चविधाने" (शकाब्द १०९५—खीः ११७२) दुर्घटवृत्तिरकारि; ब्राह्मणाचार्य्यगोवर्द्धन आर्य्यासप्तशतीं, कविक्ष्मापतिश्च धोयीकः पवनदूतं निर्म्ममतुः, 'कविक्ष्मापतिः' "कविराजो" वा धोयीकवेर्विरुदमात्रं ज्ञातव्यम्। अन्यत्र च स कविराजेतिनाम्नैवाभिहितः। जयदेवेन स प्रशस्यते श्रुतिधर इत्येव न कविरिति। तत्काव्यञ्च न तत्कवित्वसमर्थकम्। उमापतिधरेण

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रचितो न कश्चिद् ग्रन्थो ज्ञायते। तद्रचिता विजयसेनप्रशस्तिस्तु सर्वेषां विदिता।

अन्ये चास्य पशुपति-हलायुधप्रभृतयो ब्राह्मणाः सभासद आसन् तेषां ग्रन्थाश्चाद्यापि वङ्गेष्वाद्रियन्ते। हलायुधस्य "ब्राह्मण-सर्व्वस्वं" सुप्रथितमद्यापि पाठ्यते पठ्यते च।

---

यवनाक्रमणे राज्यविप्लवः, सार्द्धशतवर्षान्ते च संस्कृतस्य पुनरालोचना

किन्तु काव्यकलाबन्धोर्लक्ष्मणसेनस्यातिशोचनीयः परिणामः संवृत्तः, यवनसेनापतिना वख्तियारपुत्रेण हृतराज्यः स क्वापि नष्टः, ततो मग्ना सार्द्धशतवर्षमन्धतामिस्रे नो वङ्गजननी। सर्वमेव तत्त्वम् आकुलीभूतम्। तदा कुतो विद्यागमः, कुतः कलापरिचयः? न ज्ञायते अस्मद्देशे तत्कालरचितः कोऽपि ग्रन्थः, न च तदानीन्तनं हस्तलिखितपुस्तकमपि।

सार्द्धशतवर्षान्ते गौड़े दृष्टः पुनररुणोदयः। संस्कृतालोचना तत्र पुनरारब्धा। बालोपयोगिपुस्तकेष्वमरकोषमत्युपादेयमिति तत्सुखबोधार्थं पदचन्द्रिकाख्या टीका स्वयं "राजपण्डित पण्डित सार्व्वभौममहाचार्य्य-रायमुकुटमणि-महोन्तापनीयश्रीमद्बृहस्पतिना" षोड़शटीकार्थसारमादाय १४३१ मिते खीष्टाब्देऽकारि। स एव-मात्मानं निवेदयति।

पुण्यां पण्डितसार्व्वभौमपदवीं गौड़ावनीपार्थिवाद्।
यः प्राप्तः प्रथितो बृहस्पतिरिति क्ष्मालोकवाचस्पतिः॥

अयं गौड़ावनीपार्थिवः कंसनारायणसुतो यदुर्न्नेयः। कंसनारायणो हि म्लेच्छोपप्लुतेऽस्मिन् देशे वर्णाश्रमस्यातिघोरदशाविपर्य्यासे प्रादुरभूत्, तदानीन्तनयवनराजञ्च निहत्य गौड़े राजाऽभूत्। तत्पुत्रो यदुरात्मरक्षार्थे किल जालालुद्दिनेति यवननाम गृहीत्वा निःशङ्कं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


राज्यमकरोत्। तस्य राज्यकालः खीष्टाब्दीय-१४२१तमवर्षात् १४४२तमवर्षपर्य्यन्तः।

—०.०—

नवद्वीप-समाजः—तत्रत्याः स्मार्त्ताः

इत्थं वङ्गेषु नवीनपण्डितसमाज उद्भूत्। किन्तु स कथं गौड़ान्नवद्वीपभूमिं नीत इति निर्णेतुमशक्यम्। शिथिलितसमाज-बन्धने देशेऽस्मिन् नित्यमुन्मार्गगामिनो लोकान् पुनः सन्मार्गं ग्राह-यितुं समाजबन्धनञ्च द्रढ़यितुमयं विद्वत्समाजः स्मृतिनिबन्धरचनायां साभिनिवेशो बभूव। अस्मिन्नपि रायमुकुट एवाग्रेसरः। तत्कृतो निबन्धः श्राद्धतत्त्वे रघुनन्दनेन बहुश उद्धृतः। अमुष्मिन्नेव काले जीमूतवाहनः पारिभद्रो दायभागं व्यबध्नात्। अन्ये च बहवोऽत्र निबन्धकारा आसन्। तेषु विशेषत उल्लेखार्हो रघुनन्दन एव। स हि आकव्वरसमये प्रादुर्भूय पूर्व्वाचार्य्यमतानि सङ्कलय्य सम्यग्-व्याख्यया विशदीकृत्य चापूर्व्वनिबन्ध-रचनया वङ्गसमाजरक्षां व्यद-धात्। भारतवर्षे बहवो निबन्धकारा अजायन्त। प्रायशस्ते राजाश्रयेण राजकीयाज्ञयैव निबन्धान् अरचयन्। किन्तु अस्मद्-देशीयोऽयं रघुनन्दनो राजपरिग्रहमन्तरेणैव राजशक्तिमनाश्रित्य स्वशक्त्यैव समाजं नियन्त्रितवान्।

वर्त्तमानसमयेऽपि देशेऽस्मिन् तादृग् दुर्दिनं पुनरायातम्। अपि नाम वङ्गा घोरेऽस्मिन् दशाविपाके पुनरप्यात्मनैवात्मानम् उद्धरेयुः।

—००—

वङ्गभूमौ पुराणपर्य्यालोचना

पुराणादावपि न वङ्गा निरास्था आसन्। ढाकागुरुकुलेऽस्मिन् बहूनि हस्तलिखितप्राचीनपुस्तकानि संगृहीतानि संगृह्यन्ते च। तेषु १२११ मिते शकाब्दे लिखितं पद्मपुराणपुस्तकं, १३८८ मिते शकाब्दे लिखितं विष्णुपुराणं, १३९३ मिते शकाब्दे लिखितं महा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भारतारण्यपर्व्व, १४२५ मिते शकाब्दे लिखितं हरिवंशपुस्तकम्, १४२७ मिते शकाब्दे लिखितं तन्त्रनिबन्धशारदातिलकम्, १४१२ मिते शकाब्दे लिखितं महाभारतशान्तिपर्वं च सविशेषमुल्लेखमर्हन्ति ।

वङ्गीयाः खलु पुराणादीनां पाठशुद्धिसंरक्षणे सविशेषमवहिता आसन् । पूर्वोक्तेषु प्राचीनपुस्तकेषु बहवः पाठभेदा लक्ष्यन्ते । ते च विचार्य्यमाणाः प्रायशः समीचीना एव प्रतीयन्ते । तथा च—

"मुद्रित"विष्णुपुराणे तावत् "ततश्च पौरा एकादश भूपतयोऽष्टशतानि त्रीणि भोक्ष्यन्ती"त्यपपाठः कथमपि न सङ्गच्छते । इत्येष विद्वद्भिरुपेक्षित एव विष्णुपुराणोक्तराजवृत्तान्तः । अस्मत्संगृहीतपुस्तके त्वत्र "अब्दशत"मिति पाठः । तेन चार्थः सुसङ्गत एव भवति । एवमन्येऽपि बहवः पाठभेदा लक्ष्यन्ते । किन्त्वहो वङ्गविदुषां प्रमादस्ते हि स्वदेशस्थप्राचीनविशुद्धपुस्तकानि समुपेक्ष्याननुसन्धाय वा देशान्तरमुद्रितान्येव पुनर्मुद्रापयन्ति ।

—००—

वङ्गगौरवं नैयायिकाः

इदानीमत्रत्यनैयायिकानां कथां ब्रूमः । तेषां कुशाग्रधियामतिकठोरया साधनया श्रीवङ्गभूमिर्भारतवर्षस्य समग्रस्य गुरुस्थानमकारि । अत्र तेषां कृतित्वं पूर्व्वकथामवतारयन्तो व्याचक्ष्महे ।

गौतमोपज्ञं न्यायस्तत्र किल वेदविरोधिनां हेतुवादिनां हेत्वाभासलक्षणकुतर्काश्रयेण संशयं घटयतां निरासहेतोरतिविशदतर्ककौशलमाविष्कृतम् । किन्त्वर्वाचीनैः बौद्धतार्किकैर्दिङ्नागादिभिः काममपि तर्कपद्धतिमुद्भाव्य बाधिता गौतममात्रोपजीविनो वेदवादिनः । इत्थं गते "कुतार्किकध्वान्तनिरासहेतोः" खीष्टाब्दषष्ठशतकान्ते उद्योतकरेण न्यायवार्त्तिकं निबद्धम् । अन्यतोऽपि खीष्टाब्दसप्तमशतकादौ दिङ्नागवार्त्तिककारो धर्म्मकीर्त्तिः न्यायवार्त्तिक-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

प्रमाणवार्त्तिकन्यायविन्दुप्रभृतीन् ग्रन्थान् प्रणिनाय। ततश्च कुमारिल-शङ्कर-सुरेश्वरादिभिः मीमांसाचार्य्यैर्दिङ्नागधर्मकीर्त्त्योर्मतान्युद्धृत्य दूषितानि।

इत्थं सम्प्रदायद्वन्द्वे न्यायशास्त्रं सम्यगुपबृंहितमासीत्। यत्सत्यं शास्त्रमिदमभिरूपब्राह्मणवंशेषु सर्वत्रैवानुशीलितमासीत्। अतो भवभूतिप्रणीते मालतीमाधवे माधवमकरन्दौ तात्कालिकीमान्वीक्षिकीं विद्यामधिगन्तुं मालवान्तर्गतपद्मावतीनगरीं प्रस्थिताविति सङ्गच्छत एव। सर्वथा समयानुरूपमेतत्। एषा हेतुविद्या गौतम-प्रवर्त्तिता सम्प्रदायद्वन्द्वे प्रपञ्चिताऽत्रैव वङ्गभूमौ सम्पूर्त्तिं नीतेति वयं ब्रूमः। प्राग् न्यायवार्त्तिकतात्पर्य्यटीकादिबहुग्रन्थकर्त्ता वाचस्पति-"र्वस्वङ्कवसुवत्सरे", ततश्च न्यायकुसुमाञ्जलिप्रणेतोदयनाचार्य्य"स्तर्काम्बराङ्क"प्रमितेष्वतीतेषु शकाब्देषु पश्चाद् भारते तुरस्कागमनात् किञ्चिदर्व्वाक् खण्डनकारः श्रीहर्षश्च प्रादुरासन्। तैर्गौतमानुसारिभिर्गौतमानुक्ता अपि पदार्था विचारिताः। तान् किलोपजीव्य मैथिल-श्रीगङ्गेशेन खीष्टाब्दद्वादशशतकादौ पूर्व्वाचार्य्यमतानि सम्यगालोच्य निबद्धश्चिन्तामणिग्रन्थः। एष मिथिलाभवो न्यायः श्रीचैतन्यसम-कालीनवासुदेवसार्व्वभौमेण तच्छिष्यश्रीरघुनाथशिरोमणिना च देशेऽस्मिन् प्रचारितः।

मैथिलगौरवं शिरोमणिगुरुणा श्रीपक्षधरमिश्रेण सहैवान्तर्धाय देशेऽस्मिन् समुदितम्। प्राक् खीष्टाब्दषोड़शशतकादौ शिरोमणिस्ततो मथुरानाथस्ततो जगदीशगदाधरावन्ये च बहवोऽत्र प्रादुर्भूय सार्द्धशतवर्षं वङ्गभूमिमिमां समुदभासयन्। अतिप्रदीप्तप्रज्ञामेधाः श्लाघनीया इमे विद्वांसः। अव्याहतज्योतिः प्रातिभं किमपि चक्षु-रेषामुन्मिषितं, येन सूक्ष्मात् सूक्ष्मतराः सूक्ष्मतमाश्च पदार्था आविष्कृताः। तदा तावन्मिथिलातोऽपि पञ्चनदादपि सुदूरदक्षिणापथाद् विद्यार्थिनो दीर्घप्रवासप्रयासमङ्गीकृत्य बृहस्पतिदेशीयानिमान् विषय-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

विमुख-वङ्गनैयायिकान् न्यायपारायणायोपासते स्म। चिरमध्युषित्वा ते विद्यार्थिनः स्वदेशान् प्रत्यावर्त्तन्त। तन्मुखसञ्चारिता महीयसी वङ्गवाणी देशान्तरेष्वप्यर्च्चामलभत। यत्सत्यं भारतवर्षे सर्वत्राभिरूपवंशेषु वङ्गभाषाऽपि सादरमशिक्ष्यत।

इदानीमस्तमितप्रायं तद्गौरवम्। किन्त्वद्यापि श्रीरघुनाथ-जगदीश-गदाधरादि-संगृहीतः पर्वतप्रमाणपुस्तकराशिर्विद्यते श्रीनवद्वीपभूमौ। तत्र विद्याधनानामवधानमभ्यर्थये।

अपि नाम वङ्गजनाः पुनरात्मन्युद्बुद्धाः स्युः।

---

## शरद्विलासः

( पूर्वानुवृत्तः )

[ लेखकः—श्रीरामलक्ष्मीनारायणशर्म्मा ]

हृताम्बुदश्यामिकयेव भूम्या सञ्जातनव्यद्रुमयाऽतिसान्द्रैः।
शष्पैररण्येश्च कृता इदानीं हरित्त्ववत्यो हरितः समन्तात् ॥१९
नूनं प्रदायाटविकावनीभ्यः(१) स्वमेचकत्वं जलदो निलीनः।
इतीव सञ्चिन्त्य मयूर एष वन्यन्तरे लीनतनू रवीति ॥२०
नद्यो निशि प्राप्नुवतीर्वियोगं चक्राङ्गयोः सुस्त्रवहृतिशब्दाः।
आविष्कृताम्भोरुहमन्दहासाः शनैः शनैरम्बुनिधिं सरन्ति ॥२१
पतन्त्य एता अमलाम्बुधारा धराधराणां निसृतास्तटेभ्यः।
कान्ताः प्रहासा इव तिग्मरश्मेर्भान्त्युच्चनादाः स्फटिकाश्मविद्धाः ॥२२
तटे द्विजानां वटवो भराणां शिलासु निर्धौततलासु वन्याम्।
त्रैलोक्यतेजो मनसा जिहानाः उपासते व्याहृतिसिद्धविद्याम् ॥२३
इहापि नूनं मदनः स्वरूपं निवेश्य वाणैर्विषमैर्वनीषु।
निहन्ति हन्त व्रजतोऽध्वनीनान्क्लिलीसुखध्वानकृताभिसंज्ञः ॥२४

(१) अवनीभ्य इति च्छेदः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


यः कामिनीनां वदनोपमानं सुधानिधानं शरदो ललामम्।
चकोरकाणां प्रणयी क्षपाणां पतिः पयोधेस्तनयः शशाङ्कः ॥२५
क्षीरोदधेर्वाऽपि सुधाम्बुधेर्वा सारेण धात्रा प्रहितो विरच्य।
साम्यं विधातुं किल सुन्दरीणामास्यैः सहासैर्विलसत्कटाक्षैः ॥२६
सोऽयं मनोयोनिसखोऽनुविध्यन् मनांसि यूनां घृणिभिर्विलासी।
शरन्निशाया अधरामृतेन लिप्ताननश्चन्द्र इवाभ्युदेति ॥२७
अहो जरिष्ठानपि सान्मथेन युञ्जन्विकारेण वियोगभाजाम्।
करोति यूनां कुदशां न कां कां लिम्पन्मयूखैः परितो धरित्रीम् ॥२८
नूनं न चन्द्रे शशलाञ्छनं तत् कामः सचापः पुरतः स्थितोऽस्य।
इतीव रामाविरही त्वदीयज्योत्स्नामपि द्रष्टुमना न चन्द्र! ॥२९
निःशङ्कमङ्केऽपि समासितानां विलासिनीनामिह वल्लभानाम्।
चञ्चत्करैः स्पर्शसुखं सुखानां नयन्नसौ याति शनैः शशाङ्कः ॥३०
विधोः करामर्शमुपेत्य चन्द्रकान्तः प्लुतस्नेहजलो विभाति।
कः सख्युरङ्केन हि सङ्गमेत्य द्रवेदपि ग्रावकठोरचेताः ॥३१
इतश्चकोरोऽर्पितदृष्टिरिन्दौ चक्रस्ततः पक्षनिगूढमूर्धा।
स्नेहस्य पन्थानमपेतदम्भं विधेः क्रियाश्चासुगमां प्रचष्टे ॥३२
इतः सकम्पा विगतोष्णतापास्ततः सदाहाः प्रथयन्ति चन्द्रम्।
प्रियाऽभियुक्ताश्च तया वियुक्ताः शीतस्वभावं दहनात्मकञ्च ॥३३
विधुमुखं समवेक्ष्य कृतस्मिता मधुपगुञ्जितमञ्जुलताऽऽहवा।
कुमुदिनीव सखी हृदयेश्वरं हृदयमेव विहृत्य समार्पिपत् ॥३४
उद्दीपयन्ती सुरतोत्सवाय मनांसि यूनामुपलिम्पमाना।
सद्मानि भूमीवलये प्रवृत्ता ज्योत्स्ना हृदि स्नेहमयीव वृत्तिः ॥३५
आपूरयन्ती मृदु कैरवाणि प्रकाशयन्ती प्रमदाननानि।
उद्दामयन्ती मदनं न कस्य ज्योत्स्ना मुदे स्यान्नवयौवनस्य ॥३६
अत्राङ्गनानां रमणेषु मानः सीमानमाक्रम्य वितिष्ठमानः।
चाटूक्तिभिर्वाप्यपरैरुपायैरानीयते कृच्छ्रतया मृदुत्वम् ॥३७

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

विरमयन्ति दिवाकृतिजं श्रमं युवतिभो रजनीशकरप्लुते ।
कुसुमसम्प्रसरे शयने जना गतभियो विषमेषु शिलीमुखात् ॥३८

नातीव दीर्घा न च शीघ्रगम्या रम्या निशाश्चन्द्रिकयानुलिप्ताः ।
आनन्दमय्यो विरहीतरेषां वियन्ति हैमांशववैभवेन ॥३९

इत्थं विलासैर्विविधैर्धरित्रग्रामानन्दभूयिष्ठमहोत्सवाद्यैः ।
शरल्ललामा ननु वत्सरस्य साकं तुलार्केण मुदा प्रयाति ॥४०

एषानन्दं सञ्जनय्य प्रकामं चान्द्रीं लक्ष्मीं वर्धयित्वोत्तमश्रीः ।
सीमानं स्वं प्राप्य विश्वास्थिरत्वात् गच्छन्ती शं संविधत्तां शरद्‌ः ॥४१

---

# हर्षावसानं नाटकम्

(पूर्वतोऽनुवृत्तम्)

[ निबन्धकः—श्रीकानाइलालपञ्चतीर्थः ]

## द्वितीयाङ्के विष्कम्भकः

इष्ये प्रासादैकदेशे प्रविष्टः

रामस्मातुलः ।—

य: प्राग्जगत्याविरभूज्जनन्या दिग्लोककृत्ये ग्रहवच्छरण्यः ।
सन्तर्पणः पिण्डजुषां पितॄणां ज्येष्ठः स पायाज्जनकच्छविर्वः ॥

अपि चात्रावधारयन्त्वनसूयिनः—

तपनकिरणैर्वायुस्पर्शैर्दृढावयवोऽधिकै-
र्युवदुरतिगां मर्य्यादां यो दधाति हिमाद्रिवत् ।
ग्रहपतिमिवाल्पिष्ठास्तेतुं श्रयन्ति यथा ग्रहास्
समयमुपदेष्टुं लोकेभ्यस्ततः प्रभवन्त्यमी ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भरतमातुलो युधाजिदन्यत: प्रविष्ट:—

छायाचित्रायमाने भुवनत्रयचरित्राङ्कसंसारपत्रे
कल्पे कल्पे विधात्रा कुतुकविरतयेऽस्मिन् परावर्त्यदृश्ये।
ज्येष्ठत्वं यो यविष्ठो वहति विधिनिशान्ते पुनर्ज्यायसोऽन्यात्
पूर्त्यान्तेऽग्रे निवृत्त्या हृतमिव च तृणं स्रोतसो वास्तुमस्तम्॥

अपि च पिण्डाप्रयोजनतया पितुरात्मनो यो
निष्कामधर्म्म इव संहतिकामजोऽपि।
चूतस्य यद्वदसमेष्टफलस्य हेतु-
र्बीजं कषायमपि सोऽवरजोऽवताद्व:॥

राममातुल:। अहो मातुरङ्कगतस्य भागिनेयस्य हृदयहठहारि-
श्यामलता। तथाहि—

अङ्के यामुनकच्छनीलसलिले देहप्रभाविष्कृते
नेत्रे तस्य विकाशिनीलनलिने भ्रूपक्ष्मपत्राङ्किते।
मातु: प्रेक्षणकुड्मलद्वयमध: सम्बद्धमाक्रीड़ते
ताभ्यां शैशवबाल्यमारुतलसल्लावण्यवीचिस्रजि॥

भरतमातुल:। अहो श्रीमतो मे भागिनेयस्य विश्वातिशायि तेजो
विशेषत: सहोदराया: सकलराजवधूभ्य: सारभूता प्रतिभा,
ययाकृष्यमाण: सर्व्वावनीश्वरोऽपि वसनाञ्चलनिबद्ध इवानु-
गच्छति। या खलु—

सम्राट्स्त्री नृपनन्दना च नियतं सम्भावनापेक्षिणी
न स्पृष्टापि सुतं विवर्द्धयति सा संवाह्य भृत्यादिभि:।
येर्लभ्य: स्ववशप्रवृत्तिनिचयोऽत्यूर्जस्वलै: शावकै-
स्तेभ्य: किं मृगवासवप्रियतमा स्तन्यं विना यच्छति॥

राममातुल:। हा धिक् कष्टं निपुणमनुगतोऽस्मि स्वस्त्रसपत्नीसोद-
रेण। व्यक्तमाहितुण्डिकं विना कोऽहिच्छुतं वेत्ति, यदेतद्दिसं
वादिप्रवृत्तिद्वयमन्योन्यस्वार्थानुसन्धानप्रसूतं युगपज्जीवनिकाय-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मप्युत्सादयितुमलं यदि स्वत्वमनुगतं स्यात् ( उपसृत्य )
भो भ्रातर्धीमतामग्रणीरसि, कथय मनोरा दशरथं केषाञ्चित्
कनीयसां नामानि ?

भरतमातुलः। न किल चक्रवर्त्तित्वसम्पदि सोदरास्तितानियमः,
कपिलशापापदि तु सगरसहस्रपुत्रेषु कनिष्ठनामान्यतिप्रथि-
तानि।

राममातुलः। धन्यास्ते खलु पितुर्विपद्भारं लघयितुमुद्यताः, भोः
सधर्मन् ! किं कियन्मासमात्रावस्थायिप्रादेशिकानामस्माक-
मनधिकृतसाम्राज्यचर्चया, तथापि पश्य—

अखण्डमिह साम्राज्यं कुधिया चेद्विभज्यते।
तत्कर्त्तैवेति नास्तित्वं न्यूनैवाधिकसंख्यया॥

कञ्चुकी। ( प्रविश्य ) त्वर्य्यतां त्वर्य्यतां भर्त्तृभ्यामुपस्थितेऽस्मिन्
महाव्यसने।

उभौ। ( ससम्भ्रमं ) किं किम्—

कञ्चुकी। पाणिभ्यामवताड्य भालहृदये प्रोच्छूनयन्तो निजे
अन्योन्यद्विजराजिघर्षणरवेणावद्यवाचा तथा।
कृत्वा दन्तनखक्षतावयवकान् सम्पात्य चानुद्रुतान्
कुब्जा केकयनन्दनापरिजनान् सन्त्रासयन्ती स्थिता॥

उभौ। किमिति किमिति।

कञ्चुकी। कौशल्यापरिरक्षितः कपिरसौ येनात्मजो न्यकृतो
गेहेऽस्यास्तनयादरो स हि मया दृष्टो गवाक्षाध्वना।
इत्थं मन्थरया मृषा विरचनोदग्राहिदंष्ट्राहता
कैकेयी लुठति क्षितौ प्ररुदती प्रोच्छूननेत्रच्छदम्॥

तत एवं वृत्तम्।

राममातुलः। एवं स्नेहपरम्परासङ्कीर्णा मोहयति संसृतिः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

भरतमातुलः। सुदुःश्रवेयं सुसुदुर्दशा। भद्र! क्वेदानीं स मे भगिनीपतिर्महाराजः?

कञ्चुकी। श्रुत्वा स कोलाहलमार्त्तिजन्यं
कुतोऽयमित्युत्कमनाः क्षितीन्द्रः।
चलत्पदाभ्यामिव सापराधः
स्वमध्यजायाभवनं प्रविष्टः॥

भरतमातुलः। तदत्र महाराजस्य विचारसाक्षी भवामि, यावदादिशतु भवान् भगिनीभवनमार्गम्।

कञ्चुकी। इत इतः सुभव्य! (इति निष्क्रान्तो भरतमातुलेन)

राममातुलः। अहमपि प्रकृतसंवादेन भगिन्या भाविशुभसंवेशसंवर्द्धितं निर्वर्त्तयामि प्रकृतिपेलवं हृदयम्।

(इति निष्क्रान्तो विष्कम्भकेण)

---

## द्वितीयोऽङ्कः

दृश्यः कैकेयीशयनमन्दिरे कैकेयीशिरोनिजोरावाकर्षन्
प्रविष्टो विभवतः परिवारैरवनीपतिः।

दशरथः। अयि सुतनु! विमुञ्चाकारणं रोषदोषं
श्रयति हृदयमेतज्ज्ञातवेदा न वेत्ति।
क्व तव निभृतमुग्धे! मां गृहेऽस्मिन् प्रदग्धे
शिशिरकिरणमध्योः स्थापयस्यात्मजं वा॥

कैकेयी। (सगर्वं शिरोऽपकर्षति)

दशरथः। (पुनरस्याः शिर आकृष्य जानुनि स्थापयन्)
अप्राप्तः कोपजन्मा सुहृदि भुवि सदोत्प्रेक्षया पाल्यमानो
मानः क्व क्व प्रिये त्वं मम भुवनपतेर्देवराजादृतस्य।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्यक्त्वा पर्य्यङ्कमुर्व्वीमधिशयितवतो मूल्यवद्भूषणञ्च
स्रवन्तो च्छिन्नमूला विगलितकुसुमेवास्मि येनाभिभूता ॥

एवमधुना—

एतन्मौनमिमौ सुनीलनयनाब्दाववश्रुधारानता-
वाहुः किञ्चन दुर्दिनं मम मनः श्वासानिलोऽल्पोऽपि ते ।
शौर्य्यादित्यकथा गतास्तमनयोरच्णोस्तड़िद्दीधिती
न स्निग्धाश्च लसन्ति हासकिरणास्तद्वक्त्रशीतद्युतेः ॥

कैकेयी । (१) पलिच्चअ मं हठआरि ! जाहि पिअदमाए मंदिलं जदो आअदोऽसि ।

दशरथः । अयि मृषाजुगुप्साकर्कशे !

प्राक्कोशलेश्वरसुता दयिता यथा मे
तद्वत्त्वमप्यसि मनोभवकृत्कटाक्षे ! ।
संसर्गिणो दिनमणेः सह सन्ध्यया यो
रागोऽग्रया भवति पश्चिमयापि तादृक् ॥

तदेवं— शक्तिः समं करुणया कुमतिश्च धृत्या
नीत्या धृतिः सह तया सहितेव कीर्त्तिः ।
प्रीतिस्तयेव कमलाप्यनयेव गेहे
त्वच्छायया निवस मूर्त्तिरिवानयात्र ॥

आत्रेयी । ( कैकेयीसखी ) (२) तत्थभवं णलणाह ! किंत्ति बिसुमलेसि सुमित्तं, सा क्खु चलुप्पसादलाहादो पहुदि कउसल्लं देइमणुअट्टइ, अह्माणं भट्टिणी दु असलणा ।

दशरथः । सत्यं विस्मृतवानस्मि सुमित्रां : तथाहि—

जम्बूनदीव कनकाचलसूच्चगोत्रा
सौमित्रिहाटकमयाम्बुजयुग्मगर्भा ।

---

(१) परित्यज मां हठकारिन् ! याहि प्रियतमाया मन्दिरं यत आगतोऽसि ।
(२) तत्रभवन्नरनाथ ! किमिति विस्मरसि सुमित्रां, सा खलु चरुप्रसादलाभात् प्रभृति कौशल्यां देवीमनुवर्त्ततेऽस्माकं भर्त्री त्वशरणा ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

सा हेमचम्पकलता निरवद्यदेहा
सूतेकहन्तकुसुमोपमपुत्रयुग्मम् ॥

यथेयं पुरा कौशलेयस्यानुगत्याय प्रथमं पुत्रमेवं कैकेयीनन्दनस्यापि द्वितीयमङ्गीकृत्य—

युक्तवेण्यां यथा गङ्गायमस्वस्रोः सरस्वती ।
कौशल्यायाश्च ते सख्यमध्येऽष्टश्येव साधुना ॥

अत एवेतन्नास्या निदानमभिमानस्य ।

आत्रेयी । (साभिप्रायं कैकेयीवदनमभिवीक्षते) ।

मन्थरा । (उन्मत्तवेशा प्रविश्य) (३) राअं राअमदिमेत्तं वट्टसि, किमवरद्धमिमाए किं वावकिदमह्मोहिं चक्कवट्टिचेन्धलंछिदमेदं ससुदादो अहिअं पालेन्तोहिं जं जाणन्तो वि सव्वं पकिदिमुद्धमेणं पअञ्चेदुमिमात्र माणहेदुमणुसंधेसि ।

कैकेयी । (४) धी बहुभासिणिं । (इति रसनां दशति)

दशरथः । (लब्धावसरः) अयि मानिनि !

न कृतमघमवैमोत्थं शपेऽङ्ग स्पृशंस्ते
मतिमति ! किमधीनं क्षेपयस्यात्मगुप्या ।
यदि भवति निरागस्त्वापराधो भवत्यां
न किमु शयनमङ्के दण्डमङ्गीकरोषि ॥

आत्रेयी । (५) सहि ! किलिस्सइ महाराअस्स संदेहदोलारूढं हिअअं, संसेमि अहिअं सोढुमरिहइण आहिमाणन्दोलणं, ता अल-

---

(३) राजन् राजन्नतिमात्र' वर्द्धसे किमपराद्धमनया किं वापकृतमस्माभिश्चक्रवर्त्तिचिह्नलाञ्छितमेतं स्वसुतादधिकं पालयन्तीभिर्यज्जानन्नपि सर्वं प्रकृतिमुग्धामेनां प्रवञ्चयितुमस्या मानहेतुमनुसन्दधासि ।

(४) धिग्बहुभाषिणीम् !

(५) सखि ! क्लिश्यति महाराजस्य सन्देहदोलारूढं हृदयं संशयेऽधिका सोढुमर्हति मवाभिमानान्दोलनं तदलमलं देवि ! परिणतप्रायेऽभिप्रायसिक्थचयेऽतिमात्रोत्तेजनया ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मलं देइ! पलिणदप्पाए अहिप्पाअ सित्थचए आदिमत्तो-त्तेअणाए ।

दशरथः । कान्ते !

मानः पन्था बन्धुरश्चित्तवाजी चोरश्छिन्नः संयमप्रग्रहेण ।
गन्तव्यं मे दूरमानन्दराज्यं कान्या देवी त्वन्नियत्याः शरण्या ॥

( इति चिबुकमाकर्षति )

कैकेयी । ( तरसा राजहस्तौ निराकरोति )

मन्थरा । (६) सुट्ठु अणुट्ठिदं णिवणंदिणीए का णाम उजुहिअआ-बम्माणसाणं मिधो बिरोहं सहइ, कहं णिहिलमहीमण्डल-चरी जलहिसुदा ताह वसगा जो क्खु साबत्तलोसं बिण-जाणइ जं तह किदाबराहं वि जेट्ठजाआपरिपालिदोत्ति कामन्धो मक्कड़हदअं सक्कुणइ ।

दशरथः । ( किञ्चिद्वक्त्रं सुखं व्याददाति )

कैकेयी । (७) धी किअग्धमेव्वं बहुबत्तीआणं कुवुलिसाणं सुहाव-लोअणं बि पप्पणाह पहबइ ।

( इति परिवृत्य तिष्ठति )

दशरथः । ( स्वगतं ) अहो स्त्रीणां कल्पनापाण्डित्यमत एव कालेन तर्कव्यवसायिन्यो वादिनं वाक्पतिमपि न्यक्कर्त्तुमलं भवि-ष्यन्तीति तर्कयामि, तथाहि—

स किल नगचरः प्लवङ्गदूतोऽनधिगतकैतवलेश आप्तवाक्यः ।
ध्रुवमकरुणयानया विसृष्टः शिशुहर कोशलराजजानिदेश्यः ॥

यतोऽयं प्रमादस्सर्वथा बहुजानितैवात्र जनैर्जुगुप्स्यते, यतः—

---

(६) सुष्ठ्वनुष्ठितं नृपनन्दिन्या का नाम ऋजुहृदया वाङ्मानसयोर्मिथो विरोधं सहते कथं निखिलमहीमण्डलचरी जलधिसुता तस्य वशगा यः खलु सापत्न्यरोषमपि न जानाति, यत्तथा कृतापराधमपि ज्येष्ठजायापरिपालित इति कामान्धो मर्कटहतकं सत्करोति ।

(७) धिक् तद्धर्मं बहुपत्नीकानां कुपुरुषाणां मुखावलोकनमपि पापने प्रभवति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


हित्वाल्पचन्दनसुरो धृतभूरिपङ्के-
र्दौर्गन्ध्यदुःखमुररीकृतमेव मूर्खैः ।
दोषोऽप्यनल्पसुखिनो विषयि विधत्ते
भोगालसेन्द्रियवशादनुरागिचेतः ॥

( प्रकाशं ) धिक् किमिदमसौष्ठवमुपकल्पितं दुष्टदास्या, तद्विरम प्रियतमे ! परिणतिविरसायास्तपनकुलकामिनीविवर्जनीयपक्षपातितायाः, पश्य—

आनीलाम्बरसानिवासिजनतोपात्तातिभारादरा
राज्ञी क्वार्भकरोषकृत्कुवचनैताट्टक् कुयोषा क्व वा ।
भक्त्या पृष्ठतलेन तुष्टहृदयं विश्वम्भरं बिभ्रतीं
चञ्च्वा वाञ्छति वायसी धृतवलिः किं वैनतेयीं श्रियम ॥

तच्छिन्धि स्वतनयं प्रतिपाल्य यत्ना-
द्देहात्मशर्मकरकर्म परावसृष्टम् ।
ऋक्षाक्षपेशरुचिमण्डलमण्डिते खे
नोदेति जातु परधाम हरन् ध्रुवोडुः ॥

तदुत्तिष्ठ गतमानमवनताङ्गि ! गार्हस्थ्यविधौ चक्रवर्त्तिदयितोचितां पुरस्त्रीणामाचार्य्यतां सम्पादयितुम् । ( इति सादरमाकर्षति )

कैकेयी । ( प्रसभं हस्तौ राजहस्तादवाच्छिद्य ) (८) सा इल हाइ-हुआलमाआ एव्वं सिक्खणिज्जा किं मए णिक्किंचणप्पसूणीए ।

दशरथः । ( पूर्ववदाकर्षन् ) राज्ञि दयिते ! अतितरां कुमतिनोदितास्यनया कर्णजपया विरूपताविलक्षणगुणया कुब्जया, क्व स ते महाक्रतुदीक्षिताया गर्भभारधारणोचितः संयमः, क्व चेयं तनयाशुभशंसिनो कुमतिर्निभालयस्वेन्दुनिभानने !

(८) सा किल भाविभूपालमातैवं शिक्षणीया किं मया निष्किञ्चनप्रसविन्या ।


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


ज्योत्स्नोन्दुना नन्दतु पद्मनिन्दिना
सूतां दिवाप्युष्णकराघंष्ट्रवीम् ।
आकाश आलिङ्गति तौ समं हृदा
योऽपक्षपातिप्रकृतिः पुमान् हि सः ॥

तत् किमित्यसाम्प्रतिकभूमिसंवेशनादिना निरागसं मामवमन्यसे मानवति !

मन्थरा। ( राजानमपवार्य्योपहसन्त्यन्तरान्तरा कटाक्षं क्षिपति )।

युधाजित्। ( ससम्भ्रमं प्रविश्य ) उपदिश्यतां विचारपते ! भवन्तमवमन्तुमस्याश्चित्तसमुन्नतिरुतैषावमानप्रसूतेति । तथाहि—

सितान्यपक्षेऽस्ति निशा दिनोत्तरा यथा तथापीन्दुरयं निशाकरः ।
स्वसुस्तु मानी न सुतस्य धर्षणे तवापमानस्य निदानता तथा ॥

दशरथः। भ्रातः ! श्रीमन् ! पश्य मे दैन्यम् —

यास्तिस्रो लतिका मनोहरतयोत्सेकेन संवर्द्धिताः
काले मुग्धहृदा मनोहरतया सम्भाव्य ताः सत्फलाः ।
वैतानानलधूपिता यदि मया वन्ध्यत्वशून्योकृता
हा हा तिक्तरसेन वक्त्रमसमं जातं फलास्वादनात् ॥

युधाजित्। स्वयमेव निर्णयमस्मिन् विश्वजनानुगस्यमाना विगोतसङ्गीताचरितेन सार्वभौमेण किं मोदकमातुः श्राद्धे लड्डुकहरः कर्म्मकारो भवति ।

दशरथः। ( ईषद्विहस्य ) आ अनड्वन् ! कस्ते सार्वभौमः ।

मर्त्ये स्थिता अपि समाः सुरसुन्दरोभि-
र्यस्य स्त्रियो निभृतमेकरसा वसन्ति ।
पुण्ये तपोवन इवेन मृगेन्द्रयोषा
आसिन्धुसंहतयशाः स हि सार्वभौमः ॥

युधाजित्। यद्येवं तदिदानीम्—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


आधूमायितनीरसिन्धुजठराट्टश्यान्तरीपव्रजं
यावत् कून्नतवामनाकृतलभिच्छूलाद्रिपार्श्वावनि।
ये सभ्या अविभूतसम्प्रतिभुवस्तेषु प्रतिष्ठाश्चिराद्
दातुं ते तनयं नयामि भवनं मे भागिनेयं नृप ! ॥

कैकेयी। (९) सुट्ठु समत्थिदमाउस्सन्तेण। (इत्युत्थाय भ्रातरं हस्ते धृत्वा कक्षान्तरं प्रविशति)

मन्थरा। (१०) किं त्ति ममेश्राइणिं पलिच्चइअ पिअसही पित्तालअं गच्छिहिइ (इति क्रियावनतमुखं राजानं परावृत्तमुखो सस्मितं विलोकयन्ती प्रस्थिता)

दशरथः। हा धिक्कष्टम् !
पूर्णेव पर्व्वतगुहां क्षणदान्धकारो
धूमोच्चयो दिवमिव ज्वलतानलेन।
पाप्मेव साधुसुकृतेन हृदं कुबुद्धेः
कुब्जां श्रितः कृतयुगेन कलिर्निरस्तः॥

(विमृश्य) अथवा किमनया वराक्या।
सम्भावितद्रढिम मे तनयस्य चेतो
नैषालमाविलयितुं कुमतिः कथञ्चित्।
कादम्बिनी किल कदापि विधातुमीष्टे
ग्रामाध्वनीव न पुरः पथिपिच्छिलत्वम्॥

तथापि भवनेऽनलसम्ज्वलनधूमायिते कुतः साम्राज्यविमर्षः, यावद्गतानुगतिकतां सम्पादयामि। (इति तामितराभिरनुसरन्निष्क्रान्तो द्वितीयाङ्केन)

---

(९) सुष्ठु, समर्थितमायुष्मता।
(१०) किमिति मामेकाकिनीं परित्यज्य प्रियसखी पितालयं गमिष्यति।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


# शिवसन्तोषस्तोत्रम्

( पूर्व्वतोऽनुवृत्तम् )

[ निबन्धक.—श्रीश्यामादासवाचस्पतिः ]

दृष्टो मनो नयनकौशलिना मया त्वं
दृष्टस्त्वयाहमपि पीनतनुः कृपालो।
त्वत्काङ्क्षया फलति कालकृता क्रिया मे
को वा मुधा तु धिगदृष्टपरिग्रहार्थः ॥ १४ ॥

प्रागदृष्टं संस्थाप्य भगवतः स्वातन्त्र्याभावं दर्शयित्वा इदानीं युक्त्यन्तरेण तत्कर्त्तृत्वं द्रढ़यित्वा शिवस्य सगुणाकृतित्वमापादयन् अदृष्टं खण्डयन् स्तौति, दृष्ट इति।—हे कृपालो! दयाशालिन्! मनोनयनकौशलिना मनसश्चित्तवृत्तेः नयने निरोधे विषयान्तरादाकृष्य परमात्मनि निधाने इत्यर्थः, यत् कौशलं नैपुण्यं, तद्वता चित्तनिग्रहसमर्थेन योगदृष्टिमता इत्यर्थः। मया पीनतनुः स्थूलचित्याद्यष्टमूर्त्तिस्त्वं दृष्टः। यद्वा तादृशेन मया त्वं दर्शनायोग्यसूक्ष्मरूपः अपि, दृष्टः, कारणत्वेन ज्ञातः, त्वया सर्व्वदर्शिना इति भावः। पीनतनुः स्थूलदेह अहं दृष्टः शुभाशुभ-कर्म्मकारित्वेन सर्व्वदा सर्व्वथैव परिज्ञातः, त्वत्काङ्क्षया जैवशुभाशुभ-कर्म्मज्ञानवतो भगवतः तव इच्छया, मे मादृशस्य जीवस्य कालकृता समयान्तरसम्पादिता क्रिया क्रियाया नाश्यरूपत्वादिदानीं विनष्टापीति भावः। यद्यपि "चिरध्वस्तं फलायालं न कर्म्मातिशयं विना" इत्यादियुक्त्या अदृष्टाङ्गीकारः कृतः तथापि सर्व्वज्ञेश्वरस्य सर्व्वभूतकृतस्य कर्म्मणः ज्ञातृत्वात् चिरप्रणष्टस्यापि कर्म्मणः फलदातृत्वं तस्मिन् सम्भवतीति भावः। एवञ्चेत् किमदृष्टाङ्गीकरणमित्याह, को वेति, मुधा मृषा धिगदृष्टपरिग्रहार्थः निन्दितादृष्टाङ्गीकरणरूपः को वा न किमपीत्यर्थः ॥ १४ ॥

गोघातकस्त्वमसि विश्वविधेर्विधात-
र्मध्यस्थकीर्त्तिंदविहापनकर्त्तृता मे।
एतन्ममत्वमदमदितशुद्धबुद्धि-
र्भ्राम्यन् पुनः पुनरहो न जहाम्यहं ताम् ॥ १५ ॥

ऐतिह्यं वर्त्तते यत् कश्चित् समृद्धः सम्भ्रान्तश्च प्रमादतः गां हत्वा संगोप्य

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तत्पापक्षालनाय स्वबुद्ध्या प्रभूतं दानादिकं कृत्वा तत्पापप्रायश्चित्तं सम्पन्नं न वा इति सन्दिग्धत्वात्। ततः "प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः। अहङ्कारविमूढ़ात्मा कर्त्ताहमिति मन्यते॥ ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन ! तिष्ठति। भ्रामयन् सर्व्वभूतानि यन्त्रारूढ़ानि मायया॥" इति भगवद्गीतोक्तिमनुस्मरता तेन सर्व्वकर्त्तृत्वेन भगवत एव गोवधकर्त्तृत्वं मम तु तेन पापमेव नास्ति इति निर्द्धारितम्। ततश्च वृद्धब्राह्मणवेशधारी भगवान् भिक्षाप्रार्थनव्याजेन तं समेत्य पृष्टवान् "कस्येदं भवनं प्रभूतैश्वर्य्यञ्च" इति। "मया कृतं ममैव सर्व्वम्" इति तेनाभिहितोऽसौ प्रभूतैश्वर्य्यकर्त्ता दानकर्त्ता च पवित्रो भवान् गोघातकस्तु भगवान् अपवित्र एवेत्युक्त्वा अन्तर्हितवान् इति। तदाख्यायिकामनुसरता तादृशभ्रान्तबुद्धेः दुःखप्रदत्वं प्रतिपादयता च स्तूयते, गोघातक इति—विश्वविधेः जगन्निर्म्माणस्य विधातः कारक ! तथा हे मध्यस्थ ! अभ्यन्तरस्थायिन् अन्तर्य्यामिन् इत्यर्थः। त्वं गोघातकः अन्येन हतानामपि गवां विनाशकः, अस्माभिर्यत् पापकर्म्म कृतं तस्य बीजरूपत्वेन जगत्कर्त्तुस्तवैव कर्त्तृत्वादिति भावः। मे मम तु कीर्त्तिदं यशस्करं यत् विहापनं दानम् "त्यागो विहापनं दानम्" इत्यमरः तस्य कर्त्तृता कारकत्वं दानादि-जन्ययशःप्रभृतिभोगकर्त्तृत्वमित्यर्थः। एतन्ममत्वमदमर्दितशुद्धबुद्धिः एतन्ममत्वमदेन उक्तरूपेण कदाचित् त्वयि कदाचिन्मयि कर्त्तृत्वरूपाज्ञान-गर्व्वेण मर्दिता कलुषीकृता नष्टेति यावत्, शुद्धा निर्म्मला नाहं कर्त्तेति बुद्धिर्यस्य इत्येवंभूतोऽहं पुनः पुनः असकृत्, भ्राम्यन् जननमरणरूपसंसृतिचक्रे भ्राम्यन् ताम् अस्मितोत्थकर्त्तृतां, मोहान्धबुद्धिमिति यावत्, न जहामि न त्यजामि अहो ! इदं विचित्रमेव॥ १५॥

---

# सन्ध्या

## ( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीरामकृष्णचक्रवर्त्ती, बि. ए. ]

(३) आचमनम्—

प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन्।
अन्तरं छिद्यते यस्मात्तस्मादाचमनं स्मृतम्॥ योगि-याज्ञ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्राणायामेन देहशुद्धौ सत्यामपि आन्तरखेदापनयनाय आचमनस्य प्रयोजनम्। तथा च आमननमन्त्रोल्लिखितेषु पापेषु यदि नाम किञ्चित् अज्ञानकृतं भवेत् तदा तदपि आचमनेन नङ्क्ष्यति।

तत्कर्त्तव्यत्वे प्रमाणानि—यथा—

दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत्।
त्रिकालसन्ध्याकरणात् तत्सर्वं विप्रणश्यति॥ योगि-याज्ञ।
सूर्य्यश्चेति जपेत्प्रातः सपवित्रेण पाणिना। बौधायनः।

सायमग्निश्चेति बौधायनीयावशिष्टे।

सायमग्निश्च मेत्युक्त्वा प्रातः सूर्य्येत्यपः पिबेत्।
आपः पुनन्तु मध्याह्ने ततश्चाचमनञ्चरेत्॥ भरद्वाजः।
ततः सूर्य्यश्च मेत्युक्त्वा सायमग्निश्च मेति च।
आपः पुनन्तु मध्याह्ने कुर्य्यादाचमनं ततः॥

इति मैत्रायणीयगृह्यपरिशिष्टे।

आचमनं त्रिविधं श्रौतं स्मार्त्तं पौराणञ्चेति। तत्र प्रत्यक्षश्रुति-चोदितं श्रौतम्, सूत्रोक्तं स्मार्त्तम्, केशवाद्यैस्त्रिभिः पीत्वेति वचनोक्तं पौराणम्। तत्राद्यं तैत्तिरीयारण्यके प्रसिद्धम्, तच्च ब्रह्मयज्ञाङ्गम्। तच्चाश्वलायनानामपि कर्त्तव्यम्। द्वितीयं पुनः सन्ध्यादिकर्म्माङ्गम्, तृतीयं पुनर्निष्ठीवनशौचाद्यङ्गमिति विवेकः।

"सन्ध्यान्ते च तथापाने स्पृष्टास्पृष्टौ च सर्पणे।
पौराणाचमनं कुर्य्यान्नामभिः केशवादिभिः॥

इति स्मृतिषु दर्शनात्।

विशेषेण श्रुत्याचमनं षट्कर्म्मचन्द्रिकायामुक्तम्—

देव्याः पादैस्त्रिभिः पीत्वा अब्लिङ्गैर्नवभिः स्पृशेत्।
समव्याहृतिसंयुक्ता गायत्री त्रिपदा शिरः॥

शिरो मन्त्रो द्विधाकृतः। एतेनास्याचमनस्य चतुर्विंशतिर्मन्त्रा भवन्ति। तेषां विनियोगः केशवादीनामिव द्रष्टव्यः। इदं श्रौता-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

चमनं दर्शपूर्णमासाङ्गम्। तदाहाश्वलायनः—'प्रागुदगाहवनीया-दवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य' इति। अत्र वृत्तिकारः—आचम्येत्यत्र आचमनविधानं श्रौताचमनप्राप्त्यर्थमिति गायत्रीजप-काले श्रौताचमनं कृत्वा प्राणायामस्य गायत्रीजपं कुर्य्यादिति मुख्यः पक्ष इति। अन्यच्छ्रुत्याचमनं स्मृत्यन्तरे कथितम्—

"तदोङ्कारेणाचमनं यद्वा व्याहृतिभिर्भवेत्।
सावित्र्या वापि कर्त्तव्यमिति व्यासेन भाषितम्॥" इति।

पुराणाचमनप्रकारः स्मृत्यन्तरे कथितः—

केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत् करौ।
द्वाभ्यामोष्ठौ च संमृज्य द्वाभ्यामुन्मार्जनं तथा॥
एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः।
एकेनापि च मूर्द्धानं ततः सङ्कर्षणादिभिः॥
सर्व्वासामङ्गुलीनां वै मूलेन चिवुकं स्पृशेत्।
तर्ज्जन्यङ्गुष्ठयोगेन नासिके द्वे उपस्पृशेत्॥
अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रं पुनः पुनः॥
कनिष्ठाङ्गुष्ठयोगेन नाभिदेशमुपस्पृशेत्।
करमध्यं हृदि स्थाप्य कराग्रं शिरसि न्यसेत्॥
मुकुलेन च हस्तेन वाहुमूलमुपस्पृशेत्।
एवमाचमनं कृत्वा साक्षान्नारायणो भवेत्॥

अथ प्रकृतोपयोगि स्मार्त्ताचमनमुच्यते—

"यः क्रियां कुरुते मोहादनाचम्यैव नास्तिकः।
भवन्ति हि वृथा तस्य क्रियाः सर्व्वा न संशयः॥"

इति वचनादाचमनं नित्यतयावगम्यते। तत्रायं प्रयोगः—कृताप्लवो वद्धकच्छशिखो यज्ञोपवीती सपवित्रकरो भूमौ पादौ प्रतिष्ठाप्य स्वेष्टदेवतां हृदि निधाय प्रकृतिस्थं फेनवुद्बुदरहितमम्बु संहताङ्गुलिना पाणिना गृहीत्वा व्रह्मतीर्थेन त्रिस्तूष्णीं पिवेत्। अत्र शौनकः—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

"द्विजन्मनां व शुद्ध्यर्थं स्मार्त्ताचमनमुच्यते ।
शिखाकच्छनिवद्धस्तु सोपवीतः समाहितः ॥
भूमौ पादौ प्रतिष्ठाप्य प्राङ्मुखो वाप्युदङ्मुखः ।
प्रक्षाल्य पादौ हस्तौ च प्रभाति मुखमप्यथ ॥"

स्नात्वा शुद्ध्यर्थं सन्ध्यादिनित्यकर्म्माधिकारयोग्यतासिद्ध्यर्थमेवमाचमनं कार्य्यमिति तात्पर्य्यार्थः । स एवाचमनोदकमाह—

"आचामिन्माषमग्नन्तु नो कर्णचुलकास्थितम् ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ॥
मुक्ताङ्गुष्ठकनिष्ठाभ्यां त्रिः पिबेद् ब्रह्मतीर्थतः ।
ततः प्रक्षाल्य पादौ च संकुच्योष्ठौ निमार्ज्जयेथ ॥
संहताङ्गुलिभिर्मूलैस्त्रिः प्रमृज्यात्ततो मुखम् ।
प्रक्षाल्य हस्तौ चाभ्युक्ष्य पादशीर्षे तथैव च ॥
मध्यमाङ्गुलिपृष्ठैस्तु त्रिः स्पृशेद्घ्राणमूलकम् ।
हस्तौ प्रक्षाल्य संस्पृश्य (?) घ्राणादि द्वयशः पृथक् ॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणे पश्चादुपस्पृशेत् ।
अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे च संस्पृशेत् ॥
अङ्गुष्ठोपकनिष्ठाभ्यां नाभिं पश्चादुपस्पृशेत् ।
तलेन हृदयं स्पृष्ट्वा स्पृशेदङ्गुलिभिः शिरः ॥
अङ्गुल्यग्रैर्बाहुमूले संस्पृशेदिति शौनकः ।
प्रणवेनोदकं धृत्वा आत्मानं परिषेचयेत् ॥
अनेन विधिना विप्रः कुर्य्यादाचमनं सदा ॥

आचमनकाले नियमो दर्शितः—

नाचामेदासनस्थाङ्घ्रिर्न वद्धासन एव वा ।
न प्रसारितपादो वा वहिर्जानुकरोऽपि वा ॥" इति ।
पवित्रकर आचामेच्छुचिः कर्म्मार्थमादरात् ।
कुशमात्रकरो वापि दर्भमात्रकरोऽपि वा ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पवित्रं हिरण्यं "पवित्रं वै हिरण्य"मिति श्रुतिः।

स्नाने दाने जपे यज्ञे स्वाध्याये नित्यकर्म्मणि।

सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा॥

नित्यकर्म्मणि—सन्ध्यादावित्यर्थः।

स्मार्त्ताचमनस्य सन्ध्यादौ कर्त्तव्यत्वे प्रमाणम्—

"सन्ध्यायां कर्म्मकाले च स्मृतिराचमनं भवेत्।

ब्रह्मयज्ञे तु वै कुर्य्याच्छ्रुतिराचमनं बुधः॥" इति स्मृतिः।

तत्र तु मन्त्रास्त्रयः सन्ध्यासु क्रमेण पठ्यन्ते। सायम् "अग्निश्च मा मन्युश्च" इत्यादिर्मन्त्रः। अस्मिंस्तु यदह्ना पापमकार्षं रात्रिस्तदवलुम्पतु इत्यत्र तु "यदह्ना पापमकारिषम् अहस्तदवलुम्पतु" इति पाठ एव तैत्तिरीयारण्यकनारायणोपनिषदाश्वलायनगृह्यपरिशिष्टसम्मतः। "यत्किञ्चिदि"त्यत्र "यत्किञ्च" "इदमहमापो" इत्यत्र च "इदमहं मामि"ति च पाठः तत्तद्ग्रन्थसम्मत एव किन्तु वङ्गेषु सर्वथा अन्यविध एव पाठः प्रचलितः, प्राचीनानां पन्थानमनुकुर्व्वाणानां दोषविशेषज्ञानामपि नात्र दोषपरित्यागे प्रयत्न इति दुःखकरमेव।

मध्याह्ने "आपः पुनन्तु" इत्यादिर्मन्त्रः तत्र च "पृथ्वी पूता पुनातु माम्" इति पाठ एव वङ्गदेशप्रचलितः, किन्तु "पृथिवी पूता पुनातु माम्" इति पाठ एव प्रदेशान्तरमुद्रितपुस्तकेषु दृश्यते, स च तैत्तिरीयारण्यकनारायणोपनिषदाश्वलायनगृह्यपरिशिष्टसम्मतः। प्रथमे पादे तथा सति नवाक्षरत्वम् न दोषाय भूरिक्त्वात् एकाक्षराधिकपादयुक्तच्छन्दसः भूरिक्त्वाभिधानात्।

तथा च "यदुच्छिष्टमभोज्यञ्च" इत्यत्र यदुच्छिष्टमभोज्यमिति चकाररहितः पाठो दृश्यते।

प्रातश्च "सूर्य्यश्च मे"त्यादिर्मन्त्रः। तत्र तु "यद्रात्र्या पापमकार्षम्" इत्यत्र "यद्रात्रिया पापमकारिषम्" तथा च "अहस्तदवलुम्पतु" इत्यत्र "रात्रिस्तदवलुम्पतु" "यत्किञ्चिद्दुरितं मयि" इत्यत्र

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


यत्किञ्च दुरितं मयि" "इदमहमापोऽमृतयोनौ" इत्यत्र "इदमहं मामममृतयोनौ" "ज्योतिषि परमात्मनि जुहोमि" इत्यत्र "ज्योतिषि जुहोमि" इत्येते पाठा एव प्राग्वत् नारायणोपनिषदाश्वलायनगृह्य-परिशिष्टतैत्तिरीयारण्यकसम्मताः ।

प्रातः "अहस्तदवलुम्पतु" इत्यत्र "रात्रिस्तदवलुम्पतु" सायञ्च "रात्रिस्तदवलुम्पतु" इत्यत्र "अहस्तदवलुम्पतु" इति पाठौ सायणोक्ते-रपि युक्तावेव। तेनोक्तम् "यदह्नात् कुरुते पापं तदह्नात् प्रति-मुच्यते। यद्रात्रियात् कुरुते पापं तद्रात्रियात् प्रतिमुच्यते ॥" इति श्रुतेः रात्रिकृतं पापम् रात्रिरेवावलुम्पते इति। आश्वलायनगृह्य-परिशिष्टकारोऽपि प्रातः सायं मन्त्रयोः प्रभेदप्रदर्शनावसरे "सायं विशेषास्तु सूर्य्यश्चेति मन्त्रे सूर्य्यस्थाने अग्निपदमावपेत्, रात्राह्ना, रात्रिरहः, सत्ये ज्योतिषीति अन्ते ब्रूयादि"ति अतः सर्वथा वङ्गदेश-प्रचलितपाठोऽयुक्त एव इति भीतभीतैरेवास्माभिर्विज्ञाप्यते ।

( सावशेषा )

—००—

## त्रिशङ्कुमित्रहरिश्चन्द्रसंवादः

( श्रावणादनुवृत्तः )

[ निबन्धकः—स्वर्गत-योगीन्द्रनाथविद्याचुञ्चुः
प्रकाशकः—श्रीहरिपदभारतीभट्टाचार्य्यः ]

( मृतं पुत्रं स्कन्धे कृत्वा श्मशानमागतया शैव्यया सह चण्डाल-वेशस्य हरिश्चन्द्रस्य कथोपकथनम् )

हरिश्चन्द्रः । का त्वं शुभे धृतवती करुणस्य मूर्त्ति-
मायासि चात्र तमसावृतभीमभूमौ ?

शैव्या । काहं वदामि किमहं भवते महात्मन्
पाषाणभेदि वचनं तव दुःखमूलम् ॥ ४१

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



हरि। पाषाणवज्रमथवा कठिनं ततोऽपि
भिद्येत नैव हृदयं मम तत्कदापि।

शैव्या। शिष्टं यदेव भुजगो मणिरत्नमेकं
कालोऽतिनिर्दयमतिः प्रजहार तन्मे ॥ ४२

हरि। जानीहि साध्वि नियतिः प्रबला नराणां
षष्ठे दिने विधिकृता न हि कालदोषः।

शैव्या। जानामि नो कृतवती कति वापराधान्
धातुः पदे फलमिदं घटितं तदद्य ॥ ४३

हरि। धातापि कर्म्मवशगः परतन्त्रवीरः
स्वाधीनतां न भजते प्रतिजीवभाग्यम्।

शैव्या। मन्ये हृतं तनयरत्नशतं जनन्या
उत्सङ्गतस्तदिह मे फलितं हि तादृक् ॥ ४४

हरि। दुर्ज्ञेयमीशकृतकारणकार्य्यजात-
मद्धा विनिर्णेतुमलं न कश्चित्। *

शैव्या। हे देव वासव न तेऽशनिरस्ति दिव्यः
पापीयसीं किमधुना नहि हंसि तेन ॥ ४५

हरि। का शक्तिरस्ति विबुधे नियतिं नराणां
संमर्द्य कर्त्तुमहितं हितमात्मना वा।

शैव्या। सन्धारयामि कथमत्र विदग्धदेहं
मोहान्धकारितदृशा निपतामि भूमौ ॥ ४६
घोरातिघोररजनी रजनीचराणां
व्याप्तातिगर्जनशतैर्व्यसनं तथेत्थम्।
बालाहमस्मि शतशः परिभुक्तशोका
स्थातुं न वा चलितुमत्र पदं प्रभुर्नो ॥ ४७

---

* 'मद्धा न कश्चिदलमस्य विनिर्णयाय' इति पाठो वसन्ततिलकच्छन्दोऽनुरोधात् कल्पनीयः।
सं—सा—सम्पादकः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


हरि। त्वां वीक्ष्य दुस्तरविपज्जलधौ निमग्नां
जाड्यं बिभर्त्ति रसना हृदयञ्च कम्पम्।
कारुण्यविस्मयभवप्रमुखा रसास्त
आविर्भवन्ति युगपद्धृदये मदीये॥ ४८

शैव्या। हे दीनतारण कृपामय साधुहृत्ते
त्वं भेलको भव महाव्यसनार्णवेऽस्मिन्।
आसाद्य दुर्लभमिमं भवतां सुसङ्गं
चित्तं प्रसीदति तनुः सबलेव जाता॥ ४९

हरि। दासत्वशृङ्खलनियन्त्रितखण्डहृत्तेः
क्वास्ते दया च मृदुता च विपन्नरक्षा।
प्राक् पोषितान् गुणगणान् जलधौ विसृज्य
क्रौर्यात्मकं रसमहं हृदि धारयामि॥ ५०
भद्रेऽथवा परिचयेन किमस्ति कार्य्यं
या सा भवत्वियमलं ललनां विदित्वा।
चण्डालवृत्ति हृदयं करुणोन्मुखं किं
चण्डालराजपण एव न वर्ज्जनीयः॥ ५१
दासोऽस्मि तस्य स हि मे प्रभुरन्नदाता
पूर्वं पणन्तु ललना प्रददातु तस्मै।
वाचा कथं कलयितुं प्रभुरस्मि धार्ष्ट्या-
दुःस्थावला प्रथमतस्त्वहमार्त्तबन्धुः॥ ५२
पापं भवेद्भवतु मे न तु पीड़येयं
कार्षापणार्थमबलामसहायदीनाम्।
श्रुत्वा स्त्रिया मृदुतरं कलकण्ठनादं
भावं बिभर्म्मि हृदये वचसाप्रकाश्यम्॥ ५३
का वावलावृतमुखी तमसा नितान्तं
सम्यङ् न दृश्यत इयं श्रवणात्त वाचाम्।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

बुद्धिर्जड़ीभवति मे व्यथतेऽन्तरात्मा
चित्तं निरन्तरमहो परिखिद्यते च ॥ ५४
श्रोष्येयमत्र किमु वा रमणी वतान्या
तत्कण्ठमेव सदृशीकुरुते स्वरोऽस्याः।
अद्यापि जीवति सती तनयेन सार्द्धं
पत्युः क्षते कति न दुःखभरान् प्रयाता ॥ ५५

---

# विविदिषा

## ( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः ]

"उत्पन्नो लोकप्रद्योतो लोकनाथः प्रभङ्करः।
अन्धोभूतस्य लोकस्य चक्षुर्दातारणञ्जहः ॥
भगवान् विजितसंग्रामः पुण्यैः पूर्णो मनोरथः।
सम्पूर्णः शुक्लधर्म्मैश्च जगन्ति तर्पयिष्यति ॥" (ल,वि, २३अ)

सम्यक्सम्बोधिलाभानन्तरं कमिमं धर्म्ममनुशिष्याम् इति भगवतश्चिन्ता बभूव। आराड़ कालामः रुद्रकश्च पञ्चत्वं गत इति स ध्यानेनाजानात्, देवा अपि आगम्य तं धर्म्मप्रचारार्थं ययाचिरे। अथ भगवान् प्रतिशुश्राव, धर्म्मं वाराणस्याम् ऋषिपत्तने मृगदावे वक्ष्यामीति, ततः आसादिता देवा "अद्य मार्षास्तथागतेनार्हता सम्यक् सम्बुद्धेन धर्म्मचक्रप्रवर्त्तनाय प्रतिश्रुतम्। तद्भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनसङ्घस्यार्थाय हिताय सुखाय देवानाञ्च," (ल, वि, २३अ) इति ब्रुवाणाः कोलाहलं कर्त्तुमारेभिरे। भगवानपि—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वाराणसीं गमिष्यामि गत्वा वै काशिकां पुरीम् ।
अन्धभूतस्य लोकस्य कर्त्तास्म्यहं स्हृशीं प्रभाम् ॥
वाराणसीं गमिष्यामि गत्वा वै काशिकां पुरीम् ।
शब्दहीनस्य लोकस्य ताड़यिष्येऽमृतदुन्दुभिम् ॥
वाराणसीं गमिष्यामि गत्वा वै काशिकां पुरीम् ।
धर्मचक्रं प्रवर्त्तिष्ये लोकेष्वप्रतिवर्त्तितम् ॥ (ल,वि, २३अ)

एवं सङ्कल्पञ्चकार। सप्तमसप्ताहे व्यतीते वाराणसीं गत्वा धर्मचक्रं प्रावर्त्तयच्च। भगवतोऽमृतदुन्दुभिध्वानं समाकर्ण्य सर्वे लोकाः समाजग्मुः, क्रमेण शतशः सहस्रशः लक्षशः नरा भगवद्बुद्धमतं परिजगृहुः। मगधदेशात् कपिलवास्तुं गत्वा भगवान् स्वपितरं पत्नीं पुत्रञ्च स्वमतं ग्राहयामास, पितरि मृते तस्य अन्त्येष्टिं निर्वाह्य सन्न्यासिसङ्घं सन्न्यासिनीसङ्घञ्च स्थापयित्वा अशीतिवर्षवयसि चतुश्चत्वारिंशतं समाः धर्मप्रचारानन्तरं कुशीनगरे कस्यचित् शालतरोरधस्तात् निर्वाणमगात्। समासेन इयमेव भगवतः बुद्धस्य जीवनकथा। भगवतो जीवनवार्त्ता ललितविस्तरे एव सुष्ठु वर्णिता दृश्यते, अतोऽस्माभिरपि तस्मादेव ग्रन्थात् बहूनि वाक्यानि समुद्धृतानि प्रमाणतया च स एव ग्रन्थः अवालम्बि। नन्विदानीं विचारयन्तु सन्तः यदीदृशमहायोगिनः किञ्चिदपि आचरितमश्रद्धामर्हति। बुद्धमतविषये च किञ्चिदुपरिष्टादालोचयिष्यते, तेन तु बुद्धमतं श्रद्धामर्हति वा नवेति सुष्ठु विज्ञास्यते।

तत्र केचन बुद्धमतमसहिष्णव एवं ब्रुवन्ति, यत् सनातनमार्य्यशास्त्रमुल्लङ्घ्य भगवान् बुद्धः स्वकल्पिते कस्मिंश्चित् नूतने पथि विचचार, अपरांश्च तन्मार्गे विहर्त्तुमुपदिदेश। अधुना वयं मतमिदं समीचीनमसमीचीनं वा तदेव निर्द्धारयितुं यतिष्यामहे। बुद्धचरितमालोचयद्भिरस्माभिः प्रागेव प्रदर्शितं यत् भगवान् बुद्धोऽपि वेदादिसकलविद्यानिष्णात आसीत्, अत एव स वेदानामपि सारतत्त्वं सम्यगधि-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


जगामेत्यविसंवादम्। न तेन परमतदलनार्थमेव वेदाः अपराणि च शास्त्राणि अध्यगायिषत, परं येन निखिलदुःखानामात्यन्तिकनाशः स्यात्, येन त्रैलोक्यं सुखं वसेत् तदर्थमेव स शास्त्राण्यधिजगिरे।

अजातशत्रोस्तस्य जगति केनापि वैरिता नासीत्; सपक्षविपक्षभावनारहितस्य सर्वभूतेषु मैत्रीं विदधतः सर्वलोकानुकम्पाप्रणोदितसन्न्यासव्रतस्य तस्य केनचित् शास्त्रकारेण सममपि वैरिता नासीत्, अत एव कुत्रापि तेन तच्छिष्यैर्वा "यथा हि चौरः स तथाहि बौद्धः तथागतं नास्तिकमत्र विद्धि" (रामायणस्य, अयोध्याकाण्डं) इत्यादिप्रकारकैः मधुरवाक्प्रबन्धैः अपरे मनीषिण आक्षिप्ता न दृश्यन्ते। एवं श्रूयते यत् भगवान् बुद्धः वेदनिन्दां चकार, किन्तु कुत्रापि बुद्धोक्तौ बौद्धग्रन्थे वा वेदनिन्दा न दृश्यते, शङ्करादयोऽपि कीदृशवाक्यैः बुद्धेन तच्छिष्यैर्वा वेदाः निन्दिताः तन्नोदाहृतम्। कविर्जयदेवः तत्कृतगीतगोविन्दे "निन्दसि यज्ञविधेरहह श्रुतिजातं सदयहृदयदर्शितपशुघातम्। केशव! धृतबुद्धशरीर! जय जगदीश हरे।" एवं लिखितवान्, तेन तु बुद्धेन पशुघातोपदेशक-यज्ञविधिरेव तेन निन्दित इत्युक्तम्।

(क्रमशः)

—oo—

## सन्देशाः

**नाट्याभिनयः**—विगताश्विनमासस्य सप्तदशदिवसे सोमवासरे कलिकातानाट्यमन्दिराख्यरङ्गालये परिषत्सदस्यैः शूद्रककविकृतस्य मृच्छकटिकप्रकरणस्य संस्कृतसम्मेलनावसरे प्रतिश्रुतं पुनरभिनयमनुरुध्य कृतः सुप्रयोगः। तत्र कतिपयेषां प्रयोगनैपुण्यं सम्यक्तया परिगृहीतं सामाजिकैः। परं प्रयोगे समयाल्पतापरिरक्षणाय

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


दृश्यकाव्यस्यास्य अंशविशेषपरिवर्जनं लोकानां रसोद्बोधे किञ्चिदिव प्रतिकूलमभूदिति सामाजिकदृशास्माभिर्विचार्य्यते। यदि अतः-परमपि ईदृशमिव लघुतया तत् प्रकरणं प्रयोक्तव्यं स्यात्, तदा पुनरपि पर्य्यालोच्य वर्जनयोजनादिकं विधेयं नाट्यनिपुणैः पारिषदैरभिनयाधि-कृतैर्वा, एवं कृते समयाल्पताया आनुकूल्यं सामाजिकरसोद्बोध-सौकर्य्याव्याघातश्चेति द्वयमेव परिपालितं भवेत्। तस्मिन् अभिनये शर्विलकप्रभृतयोऽभिनयचातुर्य्यादिभिः सुतरां स्मरणीया इति संक्षे-पतः समुद्घोष्यते।

---

## ग्रन्थसमालोचनम्

**दम्पति—**सुप्रसिद्धनेत्रचिकित्सकेन श्रीयुक्तशशिकुमारसेन-महोदयेन 'दम्पति'नामकं किमपि वङ्गभाषामयं पुस्तकं सनैपुण्यं लोकोपकाराय निरमायि, मुद्रापितञ्च प्रकृष्टरूपेण।

तत्र हि कामशास्त्रसम्बन्धिनः कतिचित् विषयाः पाश्चात्त्य-चिकित्साशास्त्रसमन्वयेन प्रतिपादिताः। प्रायेण सर्व्व एव कामशास्त्रीय-विषयान् अश्लीलान् मन्यमानाः सुदूरतः परिवर्जयन्ति, परं काम-शास्त्रीया अपि एवं सन्ति कतिचित् विषया ये संसारे शरीरोपकाराय अवश्यं ज्ञेया एव, तादृशा बहवो विषया अत्र सन्निबद्धाः सेनमहो-दयेन परमुपकृतञ्च संसारिणाम्। यथाशक्ति अश्लीलतां वर्जयित्वा पारि-भाषिकशब्दादिविन्यासेन प्रतिविषयप्रकाशनचातुर्य्यं प्रशस्यतामर्हति तस्य। परन्तु अत्र शारीरतत्त्वं जननतत्त्वञ्च यदि योजिते स्यातां तदा समीचीनतरं स्यादिति वयं ब्रूमः। तद्वस्तुद्वयं यदि ईदृश-सरलसरण्या सेनमहोदयेन प्रकाशितं स्यात् तदा वयमत्युपकृता भवेम इति समासः।

—००—

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# Sanskrit Sahitya Parishat Series

1. कालीतन्त्रम्—with commentary and translation. The work bearing the same name already published from Battala, Calcutta, is not regarded as genuine, as verses attributed to the *Kalitantra* in works like *Tantrasara* and *Shyamarahasya* are not found in the latter though they are present in the work publilished by the Parishad.
Price As. 10 ; for members As. 8

2. शङ्करी-सङ्गीतम्—by Jayanarayana. Songs to the goddess Shankari after the *Gitagovinda* of Jayadeva.
As. 6 ; for members As. 4

3. मुक्तिवादः—by Gadadhara Bhattacharya with a learned introduction, two commentaries and Bengali elucidation. It describes the theory of emancipation according to the *Navya* Naiyayika School. Rs. 2 ; for members Re. 1-8

4. দুর্গোৎসব-তত্ত্বম্—by Raghunandana Bhattacharya, with a valuable introduction containing the history of, as well as various information about, the great atumnal festival of the goddess Durga. Re. 1 As. 4 ; for members Re. 1

5. पितृदयिता—by Aniruddha Bhatta, Guru of Ballalasena. It is a work on Sraddha, etc. of the Samavedins. It shows that even at the time of Ballalasena Sraddhas were performed in the persence of Sagnika Brahmanas instead of its symbolic substitute, *Kusa* grass.
Re. 1 As. 4 ; for members Re. 1

6. দুর্গোৎসব-নিবন্ধ-পঞ্চকম্—A collection of five treatises on the Durga puja festival by different ancient writers. It brings together a considerable mass of information regarding the antiquity and nature of the great autumnal festival of Bengal. As. 8 ; for members As. 6

7. कारकोल्लासः—by Bharata Mallika. A small metrical work—very useful to the beginners of Sanskrit Grammar.
As. 2

8. ऋग्वेद-भाष्योपक्रमणिका—by Sayanacharya. With English Notes and Introduction. As. 12 ; for members As. 9

9. গ্রহযাগ-তত্ত্বম্—by Raghunandana. On rituals for the Grahas. As. 7 ; for members As. 5

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



10. तीर्थतत्त्वम् -- रघुनन्दनभट्टाचार्यकृतम्—It gives an idea as to the most important places of pilgrimage to a Bengalee of the time of Raghunandana and gives a detailed description of the rites to be performed at those places.

As. 6 ; for members As. 5

11. पवनदूतम्—Of Dhoyi, a court-poet of Lakshmanasena of Bengal. Edited with critical and historical introduction, variants, Sanskrit notes etc. etc. It will be of interest alike to students of History and Sanskrit literature.

As. 12 ; for members As. 10

12. नलदमयन्तीयम् (नाटकम्)—श्रीकालीपदतर्काचार्यकृतम्—The book is an example of how even a modern Pandit can express all kinds of thought and reveal the poet in him, through the medium of Sanskrit which, according to the prevailing opinion, is but a dead language.

Re. 1/4 ; for members Re. 1

13. प्रभाकरविजयम्—A short but illuminating exposition of the doctrines of the Prabhakara School of Mimamsa philosophy by Nandishvara. It is published here for the first time.

Re. 1/4 ; for members Re. 1

14. प्रशस्तपादभाष्यम्—With an unpublished commentary called Sukti by the famous Naiyayika Jagadisa Tarkalankara, and a new commentary on Sukti and Bengali elucidation by the editor.

Rs. 2 ; for members Re. 1/8

15. यात्रातत्त्वम्—by Raghunandana. It deals with the twelve *Yatras* of Vishnu like Ratha-yatra etc.

Re. 1 ; for members As. 14

To be had of :—

The Sanskrit Sahitya Parishat,
Shyambazar, Calcutta.

---

प्रकाशकौ मुद्रापकश्च—श्रीदुर्गामोहनकाव्यसांख्यपुराणतीर्थः एम्. ए.
संस्कृतसाहित्यपरिषत्, श्यामबाजार, कलिकाता।
मुद्रापणस्थानम्—सिद्धेश्वरप्रेस, २८ नन्दकुमारचौधुरीसेकेण्डलेन,
कलिकाता।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

